## पात्राणि

पुरुषाः—

वृद्ध —ब्राह्मण केशवदासनामा ।

प्रथम —वृद्धस्य ज्येष्ठ पुत्रः ।

द्वितीय —वृद्धस्य द्वितीय पुत्रो मध्यमनामा ।

तृतीय —वृद्धस्य कनिष्ठ पुत्र ।

घटोत्कच —राक्षसो हिडिम्बा भीमसेनयोः सूनु ।

भीमसेन —मध्यम कुन्तीपुत्र ।

स्त्रियः—

ब्राह्मणी—वृद्धस्य भार्या ।

हिडिम्बा—राक्षसी भीमसेनस्य पत्नी ।

॥ श्रीः ॥

# मध्यमव्यायोगः

## ज्योत्स्ना-सरला-संस्कृत-हिन्दी-व्याख्योपेतः

### प्रथमोऽङ्कः

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

---

ज्योत्स्ना

यत्कृपालवमात्रेण प्रपूर्यन्ते मनोरथा ।
वाग्देवीं विघ्नराजं च तौ वन्देऽहं पुनः पुनः ॥ १ ॥
मिश्रा गुरुवरा यथा नौमि ज्ञानप्रदायिनीम् ।
यस्याः संवित् सुधाम्भोधेः सीकरोऽपि रसार्णवः ॥ २ ॥
श्रीभासरूपकस्तोमे नानारससमाश्रये ।
व्याख्या मध्यमपूर्वस्य व्यायोगस्य विरच्यते ॥ ३ ॥
टीकामभिनवां रम्यां 'ज्योत्स्नां' च 'सरलां' तथा ।
करोति स्पष्टबोधार्थं मालवीयः सुधाकरः ॥ ४ ॥

कविकुलमूर्धन्यः कविताकामिनीहासो महाकविर्भासो मध्यमव्यायोगाभिधाने रूपके निर्विघ्नपरिसमाप्तिसूचिकायाः पूर्वरङ्गप्रधानाङ्गायाः नान्द्याः समनन्तरं सूत्रधारस्य प्रवेशं सूचयति—नान्द्यन्त इत्यादिना । नान्द्यन्ते नन्दिरानन्दः; तस्या इयं नान्दी नाम नाटकप्रयोगारम्भे देवतापरिषदानन्दार्थमभिनयप्रारम्भसूचनार्थं च सम्पाद्यमाना वादित्र क्रियोच्यते[1] । तस्या नान्द्या अन्ते अवसाने नान्दीसमापनानन्तरमित्यर्थः । ततः तदनन्तरं गीतादिक्रियापरिसमाप्त्यव्यवहितोत्तरकाले

---

[ नान्दीपाठ के अन्त में सूत्रधार का प्रवेश ]

---

१. नान्दीलक्षणं यथा—आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
सा० द० ६. २४ ।

सूत्रधारः—

पायात् स योऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखड्गनीलः ।
यः प्रोद्यतस्त्रिभुवनक्रमणे[1] रराज
वैदूर्यसङ्क्रम[2] इवाम्बरसागरस्य ॥ १ ॥

---

इत्यर्थ । सूत्रधार—सूत्र प्रयोगानुष्ठान धारयति निर्वाहयतीति सूत्रधार ।[3] प्रविशति रङ्गम् ।

प्रवेशानन्तर सर्वकार्यकारित्वात् नाट्यस्य प्रधानभूतः सूत्रधार आशीर्वाद-पुर सर मङ्गलमातनोति पायादिति । असुरवधूहृदयावसाद =असुरवधूनाम् असुरस्त्रीणा हृदयस्य अवसाद दु खकर , विषादप्रदो वा, तद्भर्तृविध्वसनेन । कुवलयामलखड्गनील =कुवलयामल नीलोत्पलविशुद्ध खड्गनील असिव-च्छ्यामश्च, कुवलय नीलोत्पलम् अमलखड्गो मलापेतोऽसि तद्वनील इति वा । हरे =वामनरूपेणावतीर्णस्य, स प्रसिद्ध पाद =चरण व =युष्मान् रङ्गस्थान्, पायात्=रक्षेत् । प्रकृतरूपकप्रयोगप्रेक्षणरूपाभीष्टसिद्धचा योजयेदित्यर्थ । तच्छब्देन निर्दिष्टस्य पादस्य विशेषमाह—य =पाद । त्रिभुवनक्रमणे=लोकत्रयमाने, महाबल्याख्यासुरस्य निग्रहार्थं क्रियमाणे सकलभुवनमाने—इत्यर्थ । प्रोद्यत = ऊर्ध्वलोकमानार्थं प्रकर्षेणोत्क्षिप्त सन् । अम्बरसागरस्य=गगनरूपस्य समुद्रस्य । वैदूर्यसक्रम इव=वैदूर्येण स्वच्छनीलवर्णयुतेन मणिविशेषेण निर्मित सक्रम सेतु इव । 'सक्रमो दुर्गसञ्चर ' इत्यमर' । रराज=शुशुभे । अत्र 'कुवलयाम-

---

सरला

सूत्रधार—भगवान् विष्णु [ का वामन अवतार ] का वह चरण आप की रक्षा करे, जो असुरो की पत्नियो के हृदय मे विषाद उत्पन्न करने वाला, नीले कमल के समान निर्मल तथा कृपाण के समान श्याम वर्ण एव तीनो लोकों को नापने के लिए प्रकृष्ट रूप से उठाया गया [ जो चरण ] आकाश रूपी समुद्र म वैदूर्यमणि से निर्मित सेतु के समान सुशोभित हुआ ॥ १ ॥

१ भुवनैकमणे—इति वा पाठ । २ वैडूर्य—इति वा पाठ ।
३ तल्लक्षण यथा—नाट्यस्य यदनुष्ठान तत् सूत्र स्यात् सबीजकम् ।
रङ्गदैवतपूजाकृत् सूत्रधार उदीरित ।' ना० शा०

एवमार्यमिश्रान् विज्ञापयामि। अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते। अङ्ग! पश्यामि।

---

ससड्गनील.' इति लुप्तोपमा, अम्बरसागरस्य [अम्बरमेव सागरः] इति रूपकम्, तथा वैदूर्यसंक्रम इवेत्युत्प्रेक्षा अलङ्काराः। वसन्ततिलकावृत्तमिदम्। तल्लक्षणं तु—'ज्ञेया वसन्ततिलका तभजा जगौ ग.' ॥ १ ॥

अन्वय—हरे. स. पादः वः पायात् य' असुरवधूना हृदयाऽवसादः, कुवलयामलखड्गनील', त्रिभुवनक्रमणे प्रोद्यत अम्बरसागरस्य वैदूर्यसंक्रम इव रराज।

पदार्थ—हरे=भगवान् विष्णु का [वामनावतार वाला], स.=वह प्रसिद्ध, पाद.=पैर, वः=आप [सहृदय सामाजिक] लोगों की, पायात्=रक्षा करे; य.=जो, असुरवधूना=दैत्यराज [बलि] की पत्नियों के, हृदयाऽवसाद'=हृदय में विषाद पैदा करने वाला, कुवलय-अमल-खड्ग नील.=नीले कमल के समान निर्मल तथा कृपाण के समान श्यामल; त्रिभुवनक्रमणे=तीनों लोकों को मापने के लिए; प्रोद्यत'=प्रकृष्ट रूप से उठाया गया, अम्बरसागरस्य=आकाशरूपीसमुद्र के, वैदूर्य-संक्रम इव=वैदूर्यमणि से निर्मित सेतु के समान; रराज=शोभित हो रहा है ॥ १ ॥

एवमाशिषाभिमुखीकृत्य सामाजिकान् नाटकस्य कथावस्त्वश विज्ञापयति—एवमित्यादिना। एवम्=अनेन वक्ष्यमाणेन प्रकारेण। आर्यमिश्रान्=आर्याः सभ्या मिश्रा' पूज्या', आर्याश्च मिश्राश्च आर्यमिश्रास्तान्। 'मिश्र' शब्दश्च आदरार्थक। पूज्या माननीया इत्यर्थ। यद्यपि आर्यशब्देनैव आर्योऽय व्यज्यते तथापि 'द्वौ नञौ प्रकृतार्थं द्रढयत.' इतिवत् आर्यमिश्रशब्दौ सम्यक् आदरातिशय द्योतयत.। विज्ञापयामि=सूचयामि। अये इत्यव्ययमाश्चर्ये विषादे वा। अये इति विज्ञापनाभङ्गेनोत्पन्नं विषादम्। अकस्माच्छब्दश्रवणेन सञ्जातमाश्चर्यं वा द्योतयति। किन्नु खलु—नु इति वितर्के, किं कारणम्। मयि विज्ञापनव्यग्रे—विज्ञापनव्यासक्तचित्ते विज्ञाप्यबोधनार्थमुद्यते। 'व्यग्रो व्यासक्त आकुले' इत्यमर। 'यस्य च भावेन भावलक्षणम्' पा० सू० २ ३ ३७ इति भावे सप्तमी।

---

इस प्रकार मैं आप महानुभावों को सूचित करता हूँ। अरे, सूचना देने में व्यस्त मुझको यह कैसा शब्द-सा सुनाई दे रहा है। अच्छा देखूँ तो।

(नेपथ्ये)

भोस्तात ! को नु खल्वेषः ।

सूत्रधार.—भवतु, विज्ञातम् ।

भोः शब्दोच्चारणादस्य ब्राह्मणोऽयं न संशय ।
त्रास्यते निर्विशङ्केन केनचित् पापचेतसा ॥ २ ॥

---

शब्द इव=अनिश्चितरूप शब्द, इवपदस्यानिश्चयार्थत्वात् नेपथ्यगतशब्दस्यास्फुटत्वाच्च । श्रूयते=कर्णगोचरीभवति । 'अङ्ग' इति सम्बोधने सम्भ्रमे वा । 'स्युः पाट्प्याडङ्गहेहेभोः' इत्यमर. । तच्च सामाजिकविषयम् । पश्यामि='कुतोऽयं किमर्थश्च शब्दोऽयम्' इति परीक्ष्य ज्ञास्यामि । नेपथ्यम्=जवनिकान्तर्भागो नटप्रसाधनस्थलं वा 'कुशीलवकुटुम्बस्य स्थल नेपथ्यमुच्यते' इत्युक्तलक्षणत्वात् । शब्दस्याकारमाह–भोस्तातेति । भो.–इति विषादे । हे तात !=पित ; एष=सन्निकृष्टो विषादोत्पादक पुरुष. । भवतु विज्ञातम्=शब्दस्य यथार्थस्वरूप ज्ञात इत्यर्थः । 'कस्य वाऽयं शब्द', किमर्थं वा प्रयुज्यते' इति सदेह सर्वथैव निवृत्त' ।

यत्खलु ज्ञातं तदेव कथयति–भो शब्देत्यादिना । अस्य=भोस्तातेत्यादि वदतः पुरुषस्य । भो शब्दोच्चारणाद्=भो शब्दस्य विषादार्थस्य उद्घोषणात् । विज्ञातम्=नेपथ्ये श्रूयमाणस्य शब्दस्य निमित्तम् । तदेव विवृणोति–अयं ब्राह्मणः=सन्निकृष्ट' किन्तु अग्रचरो विप्र । निर्विशङ्केन=निर्भयेन, पापचेतसा=पापं दुरिताभिनिवेशि चेतो हृदय यस्य तेन तथाभूतेन दुष्कृतात्मनेत्यर्थ. । केनचित्=अज्ञातेन पुंसा, त्रास्यते=भीष्यते । न सशय=नास्त्यत्र सन्देह लेशोऽपि । अनुष्टुप् छन्द । तल्लक्षण तु—'श्लोके षष्ठ गुरु ज्ञेय सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्व सप्तम दीर्घमन्ययो ॥' इति । अनुष्टुप् छन्द श्लोकपदेनापि व्यवह्रियते ॥ २ ॥

---

(नेपथ्य मे)

हे तात ! यह कौन है ?

सूत्रधार—अच्छा समझ गया ।

इसके 'भोः' इस शब्द के उच्चारण से 'यह ब्राह्मण है'—इसमे कोई सन्देह नही है । यह ब्राह्मण किसी निर्भय और दुष्कृतात्मा के द्वारा डराया जा रहा है ॥ २ ॥

( पुनः नेपथ्ये )

भोस्तात ! को नु खल्वेषः ।

सूत्रधारः—हन्त, दृढं विज्ञातम् । एष खलु पाण्डवमध्यमस्यात्मजो हिडिम्बारणिसम्भूतो राक्षसाग्निरकृतवैरं ब्राह्मणजनं वित्रासयति । भोः ! कष्टं कष्टं खलु पत्नीसुतपरिवृतस्य वृत्तान्तः[1] । अत्र हि,

---

अन्वय—अस्य 'भो', [ इति ], शब्दोच्चारणात् अयं ब्राह्मण, [ इत्यत्र ], न, संशयः । [ अयं ] केनचित् निर्विशङ्केन, पापचेतसा, त्रास्यते ॥ २ ॥

पदार्थ—अस्य=इसके, भो. [ इति ] शब्दोच्चारणात् = 'भो.' इस शब्द के उच्चारण से, अयम्=यह, ब्राह्मण =ब्राह्मण है, [ इत्यत्र ] न संशय.=इस विषय में कोई सन्देह नहीं है । [ अयम् = यह ब्राह्मण ] केनचित् निर्विशङ्केन=किसी निर्भय, पापचेतसा =और दुष्कृतात्मा के द्वारा, त्रास्यते=भयभीत कराया जा रहा है ॥ २ ॥

शब्दस्य कारणं ज्ञात्वा सूत्रधार तद्विषयं विवृणोति—हन्तेत्यादिना । हन्तेति विषादे । दृढम्—सम्यक् । विज्ञातम्—शब्दनिमित्तम् अवगतमित्यर्थः । एष खल्वित्यादिवाक्यं विशेषाकारविवरणम् । पाण्डवमध्यमस्य=पाण्डवेषु पञ्चसु मध्यमस्य भीमसेनस्य । यद्यपि भीमार्जुननकुलास्त्रयोऽपि मध्यमा, तथापि तेषु प्राथम्याद् भीमसेन इह मध्यमो गृह्यते । हिडिम्बारणिसम्भूत.=हिडिम्बा तदभिख्या राक्षसी, अरणि तत् स्वरूपाया तस्या सम्भूत. । राक्षसाग्नि'—राक्षस एवाग्निः, संतापकत्वात् । स च घटोत्कच । अकृतवैरम्—अकृतविरोधम्, निरपराधमित्यर्थं । वृत्तान्तः=दशा ॥

---

( पुन नेपथ्य में )

हे तात ! यह कौन है ?

सूत्रधार—ओह ! वस्तुत. अब मैं समझ गया । निश्चय ही यह पाण्डवो में मध्यम [ भीम ] का पुत्र, हिडिम्बा रूपी अरणि से निकला हुआ अग्नि रूप राक्षस [ घटोत्कच ] है जो ऐसे ब्राह्मण जन को सन्त्रस्त कर रहा है जिन्होने उससे कभी भी द्वेष नहीं किया । ओह ! कष्ट है, स्त्री एवं बच्चो से घिरे हुए इस दीन ब्राह्मण के हाल पर अत्यन्त कष्ट है । क्योंकि यहाँ—

---

१. कष्टं''''वृत्तान्त —क्वचित् पुस्तके नास्ति ।

[1]श्रान्तैः सुतै परिवृतस्तरुणैः सदारो[2]
वृद्धो द्विजो निशिचरानुचरः स[3] एव ।
[4]व्याघ्रानुसारचकितो वृषभ सधेनु
सन्त्रस्तवत्सक इवाकुलतामुपैति ॥ ३ ॥

श्रान्तैरिति । श्रान्तै =वनाध्वसञ्चारखिन्नै । तरुणै =युवभि, सुतै = तनयै, परिवृत, सदार =सकलत्र, वृद्ध =स्थविर, निशिचरानुचर = निशिचरो राक्षस अनुचर अनुगन्ता यस्य स, तथाभूत स एव द्विज = ब्राह्मण । व्याघ्रानुसारचकित =व्याघ्र हिंस्रपशुविशेष, तस्यानुसरणेन अनुगमनेन चकित त्रस्त । सधेनु.=धेनुर्नवप्रसूता गौ तया सहित । सन्त्रस्तवत्सक =सम्यक् त्रस्त भीत वत्सको यस्य स । स्वार्थे कन् । वृषभ इव= महोक्ष इव । आकुलताम्=उद्विग्नत्वम्, उपैति=प्राप्नोति । उपमालङ्कार । वसन्ततिलकावृत्तम् ॥ ३ ॥

अन्वय—तरुणै, श्रान्तै, सुतै, सदारै, परिवृत, निशिचरानुचर, एप, स, वृद्ध, द्विज सन्त्रस्तवत्सक सधेनु व्याघ्रानुसारचकित, वृषभ, इव, आकुलताम् उपैति ॥ ३ ॥

पदार्थ—तरुणै =युवक, श्रान्तै =थके हुए सुतै =पुत्रो, सदारै =और पत्नी से, परिवृत्त =घिरे हुए, निशिचरानुचर =राक्षस से अनुगम्यमान, एष स =वह यह, वृद्ध द्विज =बुड्ढा ब्राह्मण, सन्त्रस्तवत्सक =भयभीत छोटे छोटे बछडो और सधेनु=गाय से युक्त, व्याघ्रानुसारचकित =चीते के आक्रमण से सम्भ्रान्त, वृषभ इव=बैल के समान, आकुलताम् व्याकुलता को, उपैति= प्राप्त हो रहा है ॥ ३ ॥

युवक एव डरे हुए पुत्रो और पत्नी स घिरे हुए राक्षस से अनुगम्यमान यह वृद्ध ब्राह्मण भयभीत छोटे बछडो और गाय से युक्त व्याघ्र के आक्रमण, से डरे हुए बैल के समान, व्याकुलता को प्राप्त हो रहा है ॥ ३ ॥

१ भ्रान्तै—इति वा पाठ । २ सदारै—इति वा पाठ ।
३ सरोप—इति वा पाठ ।
४ •नुसारचरितो, नुचारचकितो इति वा पाठौ ।

( निष्क्रान्तः )

स्थापना

( ततः प्रविशति सुतत्रयकलत्रपरिवृतः वृद्धः ब्राह्मणः पृष्ठतो घटोत्कचश्च । )

[1]वृद्धः—भोः ! को नु खल्वेषः,

[2]तरुणरविकरप्रकीर्णकेशो

निष्क्रान्तः=निर्गतः सूत्रधारः ॥

स्थापनेति । स्थापना=प्रस्तावना आमुखं वा । वस्तुतः स्थापकाभिनेन सूत्रधारसहायकेनेदं कर्तव्यम् । कथार्थस्य स्थापनात् स्थापकः । तेन च स्थापकेन यत्र कथावस्तु बीजं पात्रं वा स्थाप्यते सा स्थापना । अत्र च तत्कार्यं सूत्रधारेणैव निर्वाहितम् ।

प्रविशतीति । सूत्रधारोद्दिष्टानां पात्राणां प्रवेशः सूच्यते । रङ्गमिति शेषः । घटोत्कचेनानुयातः सपुत्रकलत्रः सन्त्रस्तः वृद्धः ब्राह्मणः प्रविशति । 'घटोत्कच' इत्यभिधानं महाभारते एवं व्याख्यातम्—'घटो हास्योत्कच [ ह अस्य उत्कचः ] इति माता तं प्रत्यभाषत, अब्रवीत्तेन नामास्य घटोत्कच इति स्मह ॥'[3] अर्थात् उत्कचः केशरहितः घटः शिरो यस्य सः घटोत्कचः ॥

तरुणेति । तरुणरविकरप्रकीर्णकेशः=तरुणस्य अप्रौढस्य बालस्येति यावत् । रवेः सूर्यस्य कराः किरणा इव प्रकीर्णाः असंयतप्रसारिताः केशाः यस्य सः । भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्षः=भ्रुकुट्याः च पुटः भङ्गी तेन उज्ज्वले दीप्ते पिङ्गले कपिले आयते दीर्घे च अक्षिणी यस्य सः । सकण्ठसूत्रः=कण्ठ-

( सब चले जाते हैं )

स्थापना ।

( इसके बाद तीन पुत्र एवं पत्नी से परिवृत वृद्ध ब्राह्मण प्रवेश करता है । साथ ही पीछे से घटोत्कच भी आ जाता है । )

वृद्ध ( ब्राह्मण )—ओह ! यह कौन है ?

तरुण सूर्य को किरणों की भाँति बिखरे बालों वाला, भ्रुकुटि की भंगी से दीप्त व पीले रंग की आँखों वाला, कण्ठसूत्र से युक्त, विद्युत् युक्त मेघ के

१. ब्राह्मणः—इति वा पाठः । २. अरुण० इति वा पाठः ।

३. द्र० महाभारत : आदि पर्व १५५.३८ ।

भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्षः ।
सतडिदिव घन· सकण्ठसूत्रो
युगनिधने प्रतिमाकृतिर्हरस्य ॥ ४ ॥
प्रथम.—भोस्तात ! को नु खल्वेषः ।
ग्रहयुगलनिभाक्ष पीनविस्तीर्णवक्षा

---

सूत्रेण कण्ठधार्येण स्वर्णाभरणविशेषेण सहित । सतडिदिव घनः=विद्युत्सहितो मेघ इव स्थित. । श्यामत्वात् मेघसाम्यम् । कण्ठसूत्रस्य हिरण्मयत्वात् तडित्-साम्यम् । युगनिधने=युगसहारे, प्रवृत्तस्येति शेषः । हरस्य=विश्वसहरणशील-स्य रुद्रस्य, प्रतिमाकृतिः=प्रतिमाकृतिस्वरूप भीषणत्वात् । एपः=सन्निकृष्टः पुरुष, को नु खलु ? उपमालङ्कार । पुष्पिताग्रा वृत्तम् । तल्लक्षण तु='अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥ ४ ॥

[ ब्राह्मण के द्वारा राक्षस के स्वरूप का चित्रण इस प्रकार प्रस्तुत है– ]

अन्वय—तरुण-रवि-कर-प्रकीर्ण-केश', भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्ष, सकण्ठसूत्र', सतडित्, इव, घन युगनिधने, हरस्य, प्रतिमाकृतिः ॥ ४ ॥

पदार्थ—तरुण =अप्रौढ़, रवि· कर इव=सूर्य की किरणो की भाँति, प्रकीर्णः केश.=बिखरे हुए बालो वाला, भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्षः= भ्रुकुटि की भङ्गी से उज्ज्वल और कपिल वर्ण के दीर्घ नेत्रो वाले, सकण्ठसूत्रः= कण्ठसूत्र से युक्त, सतडित् इव घन·=विद्युत् युक्त मेघ के समान स्थित, युग-निधने=युग के सहार मे प्रवृत्त, हरस्य=भगवान् शङ्कर के, प्रतिमाकृति=प्रति कृति रूप मे ( यह पुरुष कौन है ) ? ॥ ४ ॥

भीत. तत्सुतोऽपि आत्मप्रतिक्रिया विज्ञापयति ग्रहेत्यादिना । ग्रहयुगल-निभाक्ष=ग्रहयुगलनिभे औज्ज्वल्याद् युगलयोः सूर्यचन्द्रयो[1] तुल्ये नयने यस्य स ।

---

समान स्थित, युग के संहार मे प्रवृत्त भगवान् शङ्कर की प्रतिकृति रूप ( यह पुरुष कौन है ? ) ॥ ४ ॥

प्रथम ( पुत्र )—हे तात । वस्तुत· यह है कौन ? ,

(सूर्य एव चन्द्र रूप) ग्रह-युगल के समान आँखो वाले, स्थूल एवं विशाल

---

१. द्र० 'नेत्रे चन्द्रदिवाकरौ' अभिषेकनाटके ६ ३० ।

कनककपिलकेशः[1] पीतकौशेयवासाः।
तिमिरनिवहवर्णः पाण्डरोद्वृत्तदंष्ट्रो
नव इव जलगर्भो लीयमानेन्दुलेखः ॥ ५ ॥

द्वितीय —क एष भो !

पीनविस्तीर्णवक्षाः—पीनं पीवरं विस्तीर्णं च वक्ष उरः यस्य सः। कनककपिलकेशः—स्वर्णपिङ्गलकेश, स्वर्णम् इव कपिलाः पिङ्गलाः केशाः कुन्तलाः यस्य सः। पीतकौशेयवासाः—पीतं हरिद्रावर्णं कौशेयवासः क्षौमवस्त्रं यस्य सः, धृतपीतवस्त्र इत्यर्थः। तिमिरनिवहवर्णः—तम पुञ्जश्यामः। पाण्डरोद्वृत्तदंष्ट्रः[2]—पाण्डरे शुक्ले उद्वृत्ते उत्क्षिप्ते दंष्ट्रे राजदन्तपार्श्वस्थौ दन्तौ यस्य सः। सन्निहितविशेषणद्वयघटामुपमामाह—लीयमानेन्दुलेखः—लीयमाना संश्लिष्यन्ती इन्दुलेखा चन्द्रलेखा यस्मिन् सः। तादृशो नव —नूतनः, श्याम इति यावत्। जलगर्भ इव—जलयुक्तमेघ इव स्थितः। 'तडित्पतिः पयोगर्भो नदनुर्मुदिरोऽम्बुमृद्'—इति वैजयन्ती। एष 'को नु खलु' इति ब्राह्मणपुत्रस्यापि जिज्ञासा। उपमालंकार। मालिनीवृत्तम्। तल्लक्षणं तु—'ननमयययुतेयं मालिनी भोगिलोकैः' ॥ ५ ॥

[ राक्षस के स्वरूप को पिता से सुनकर पुत्र भी अपनी अनुभूति इस प्रकार व्यक्त करता है— ]

अन्वय—ग्रहयुगलनिभाक्षः, पीनविस्तीर्णवक्षाः, कनककपिलकेशः, पीतकौशेय-वासाः, तिमिर-निवह-वर्णः, पाण्डरोद्वृत्तदंष्ट्रः, लीयमान-इन्दु-लेखः, नवजलगर्भः, इव, [ भाति ] ॥ ५ ॥

पदार्थ—ग्रह-युगल-निभाक्ष =(सूर्य और चन्द्र रूप) ग्रह-युगल के समान

वक्षस्थल वाले, स्वर्ण के समान पीले केशों वाले, पीत एवं रेशमी वस्त्र पहने हुए अन्धकार के समान वर्ण वाले ( उस राक्षस ) के अत्यन्त धवल और बाहर निकले हुए दांत—चन्द्रकला जिसमें अन्तर्भूत हो रही हो, ऐसे नवीन मेघों के समान ( प्रतीत हो रहे ) हैं ॥ ५ ॥

द्वितीय ( पुत्र )—ओ ! यह कौन है ?

---

१. कमलकपिशकेश इति वा पाठः। अत्र कपिशशब्द कृष्णपीतवाची।

२. द्र० 'उद्वृत्तदंष्ट्रः' अभिषेकनाटके १—१३। 'उद्वृत्त स्यात् त्रिपूत्क्षिप्ते' इति मेदिनी।

कलभदशनदंष्ट्रो लाङ्गलाकारनास
　　करिवरकरबाहुर्नीलजीमूतवर्ण　　।
हुतहुतवहदीप्तो यः स्थितो भाति भीम-
　　स्त्रिपुरपुरनिहन्तु शङ्करस्येव रोष ॥ ६ ॥

आँखो वाला, पीन-विस्तीर्ण-वक्षा =स्थूल एव विशाल वक्षस्थल वाला, कनक-कपिल-केश =स्वर्ण के समान पीले केशो वाला, पीत-कौशेय-वासा =पीला एव रेशमी वस्त्र पहने हुए, तिमिर-निवह-वर्ण =अन्धकार के समान वर्ण वाले (उस राक्षस के), पाण्डरोद्वृत्तदंष्ट्र =अत्यन्त धवल और बाहर निकले हुए दाँत, लीयमान-इन्दु-लेख =चन्द्रकला जिसमे निमज्जित हो रही हो ऐसे, नव =नवीन, जलगर्भ इव [ भाति ]=मेघसमूह के समान (प्रतीत हो रहे हैं ॥ ५ ॥

कलभेति । कलभदशनदंष्ट्र –कलभदशनौ करिशावकस्य दन्ताविव दंष्ट्रे यस्य स । लाङ्गलाकारनास –वक्राग्रत्वात् लाङ्गलाकारा इव हलसमानाकारा नासिका यस्य स. । करिवरकरबाहु:–करिवरकर इव गजश्रेष्ठशुण्डेव बाहुर्यस्य स । नीलजीमूतवर्ण –नीलस्य जीमूतस्य मेघस्येव वर्णो यस्य स । 'घनजीमूत-मुदिरजलमुग्धूमयोनय' इत्यमर । एष क इति द्वितीय पुत्रस्य जिज्ञासा । हुतहुतवहदीप्त –हुतो दत्ताज्याद्याहुति अर्थात् सविशेषण प्रदीप्त इत्यर्थ, एव-भूतो हुतवह हुत देवान् प्रति वहतीति हुतवह =अग्निरिव दीप्त प्रज्वलित । अतएव भीम =भयकर । स्थित.=गमननिवृत्त । य पुरो दृश्यमान, त्रिपुरपुरनिहन्तु –त्रिपुरासुरनगरध्वंसिन (इद विशेषण रोषतीव्रत्वसूचकम्), शङ्करस्य –हरस्य, रोष इव=कोप इव, भाति=शोभते । उपमालकार । मालिनीवृत्तम् ॥ ६ ॥

अन्वय--कलभ-दशन-दंष्ट्र, लाङ्गल-आकार-नास, करि-वर-कर-

हाथी के बच्चे के दाँतों के समान दाँतो वाला, हल के आकार के सदृश नाक वाला, मत्त हाथी के सूंड के समान भुजाओ वाला, नीले मेघ के समान वर्ण वाला, यज्ञाग्नि के समान प्रज्वलित सा जो [ राक्षस ]--त्रिपुर नामक दैत्य के शरीर का हनन करने वाले भगवान् शकर के भयकर क्रोध के समान उपस्थित सा प्रतीत हो रहा है [ यह कौन है ? ] ॥ ६ ॥

तृतीय.—भोस्तात ! को नु खल्वयमस्मान् पीडयति ।
वज्रपातोऽचलेन्द्राणां श्येनः सर्वपतत्त्रिणाम् ।
मृगेन्द्रो मृगसङ्घानां मृत्युः पुरुषविग्रहः ॥ ७ ॥
ब्राह्मणी—अय्य ! को एसो अम्हाणं सन्दावेइ ।
( आर्य ! क एषोऽस्मान् सन्तापयति )

---

बाहु नील–जीमूत–वर्णं, हुत–हुतवह–दीप्त, य, त्रिपुरपुरनिहन्तु शङ्करस्य, भीम, रोष, इव, स्थित, भाति ॥ ६ ॥

पदार्थ—वलभ–दशन–दंष्ट्र =हाथी के बच्चे के दाँतो के समान दाँतो वाला, लाङ्गल–आकार–नास =हल के आकार के सदृश नाक वाला, करि–वर–कर–बाहु =मत्त गज के सूंड के समान [ लम्बी ] भुजाओं वाला, नील–जीमूत–वर्ण =नीले मेघ के समान वर्ण वाला, हुत–हुतवह दीप्त =यज्ञ की अग्नि के समान प्रज्वलित, य =जो [ राक्षस ], त्रिपुर–पुर–निहन्तु =त्रिपुर नामक राक्षस के शरीर का हनन करने वाले, शङ्करस्य=भगवान् शङ्कर के, भीम =भयकर, रोष इव=क्रोध के समान, स्थित=उपस्थित सा, भाति=प्रतीत हो रहा है ॥६॥

सन्त्रस्त तृतीय पुत्रोऽपि आत्मप्रतिक्रिया प्रदर्शयति—वज्रेत्यादिना । अचलेन्द्राणा=गिरिवराणाम् । वज्रपात =कुलिशपात, कुलिशो यथा पर्वत-भेदनघातस्तथायमप्रीत्यर्थ । सर्वपतत्त्रिणा=सर्वपक्षिणाम् । श्येन=पक्षिविशेष, य महतोऽपि पक्षिणो विनाशयति, घातकत्वात् तत्तुल्य । मृगसघानाम्= पशुसमूहाना कृते, मृगेन्द्र =सिंह । अतएव, पुरुषविग्रह =धृतपुरुषशरीर, मृत्यु =यमराज एव, अयम्–एष पुर स्थित 'को नु अस्मान् पीडयति' इति । रूपकालङ्कार । अनुष्टुप् छन्द ॥ ७ ॥

[ तृतीय पुत्र अपनी समावना इस प्रकार प्रकट कर रहा है— ]

अन्वय—[ अयम् ] अचलेन्द्राणा, [कृते], वज्रपात, सर्वपतत्त्रिणा[कृते] श्येन, मृगसङ्घाना [कृते] मृगेन्द्र, [एव] पुरुषविग्रह, मृत्यु, इव दृश्यते ॥७॥

---

तृतीय (पुत्र)—हे तात ! यह कौन है, जो हम लोगो को कष्ट दे रहा है। यह गिरिराजो के लिए वज्रपात सा, सभी पक्षियों के लिए बाज सा और मृगसमूह के लिए सिंह-सा मानव शरीर धारण कर [ साक्षात् ] यमराज के समान [ दिखाई पड रहा ] है ॥ ७ ॥

ब्राह्मणी—आर्य ! यह कौन है जो हम लोगो को सन्तप्त कर रहा है ?

घटोत्कचः—भो ब्राह्मण ! तिष्ठ तिष्ठ ।
किं यासि मद्भयविनाशितधैर्यसारो
वित्रस्तदारसुतरक्षणहीनशक्ते ! ।
तार्क्ष्याग्रपक्षपवनोद्धतरोषवह्नि-
तीव्रः कलत्रसहितो भुजगो यथार्तः ॥ ८ ॥

पदार्थ—[ अयम्=यह राक्षस ], अचलेन्द्राणां [ कृते ]=गिरिराजों के लिए, वज्रपातः=वज्राघात, सर्वपतत्रिणां [ कृते ]=सभी पक्षियों के लिए, श्येन=बाज, मृगसङ्घानां [ कृते ]=मृगसमूह [ अर्थात् पशुमात्र ] के लिए, मृगेन्द्र [ एव ]=सिंह ही, [ एवं ] पुरुषविग्रह=इस प्रकार मानवशरीर धारण करके [ साक्षात् ], मृत्यु [ एव ]=यमराज ही के समान [ दृश्यते= दिखाई पड़ रहा है ] ॥ ७ ॥

घटोत्कच उद्धतवदाह—किं यासीत्यादिना । वित्रस्तदारसुतरक्षणहीनशक्ते ! =वित्रस्तानां विशेषेण भीतानां दारसुतानां कलत्रपुत्राणां, रक्षणे हीना क्षीणा शक्तिः सामर्थ्यं यस्य सः, तत्सम्बुद्धौ । मद्भयविनाशितधैर्यसारः= मत्सकाशाद् भयं मद्भयं, तेन विनाशितः, धैर्यस्य सारः बलं यस्य सः । आर्तः= पीडितः । तार्क्ष्याग्रपक्षपवनोद्धतरोषवह्नितीव्रः=तार्क्ष्यस्य गरुडस्य, तृक्षस्य नाम कश्यपस्य मुनेः अपत्यं पुमान् तार्क्ष्यः, तस्य अग्रपक्षपवनेन पक्षाग्रजनितेन वातेन, उद्धतः सवधितः यो रोषवह्निः कोपाग्निः, तेन तीव्रः, तीक्ष्णः । कलत्र-सहितः भुजगो यथा=सर्प इव । किं यासि=कथम् अपसर्पसि, मा यासी-रित्यर्थः । अत्र गरुडागमनत्रस्तभुजगोपमया ब्राह्मणपरिवारस्यापि विनाशस्यावश्यं-भावित्वं सूच्यते । उपमालंकारः । वसन्ततिलका वृत्तम् ॥ ८ ॥

अन्वय—तार्क्ष्याग्रपक्ष-पवनोद्धत-रोष-वह्नि तीव्रः कलत्रसहितः आर्तः

[ क्रोधाभिभूत घटोत्कच उन्हें रोकता हुआ कहता है— ]

घटोत्कच—हे ब्राह्मण ! ठहरो, ठहरो ।

गरुड के पक्ष के अग्रभाग से उठी हुई वायु से प्रचण्ड क्रोधाग्नि वाला एवं उत्तेजित व सपत्नीक एवं दीन सर्प जिस प्रकार जाता है उसी प्रकार विशेष रूप से भयभीत स्त्री एवं पुत्रों की रक्षा में असमर्थ ( हे ब्राह्मण ) मेरे भय से विशेष रूप से नष्ट हुए धैर्य एवं बल वाले [ तुम ] क्यों जा रहे हो ? ॥ ८ ॥

भो ब्राह्मण ! न गन्तव्यं न गन्तव्यम् ।

वृद्ध—ब्राह्मणि ! न भेतव्यं, पुत्रका. ! न भेतव्यम् । सविमर्शा ह्यस्य वाणी ।

घटोत्कच.—भो ! कष्टम् । [ स्वगतम् ]

जानामि सर्वत्र सदा च नाम

द्विजोत्तमा पूज्यतमा. पृथिव्याम् ।

---

भुजग यथा [ अपयाति तथा ] वित्रस्तदार-सुत-रक्षण-हीन-शक्ते, मद्-भय-विनाशित-धैर्य-सार [ त्व ] कि यासि ॥ ८ ॥

पदार्थ—तार्क्ष्याग्र-पक्ष-पवनोद्धत-रोष-वह्नि-तीव्र = गरुड के पख के अग्रभाग से उठी हुई वायु से प्रचण्ड क्रोधाग्नि वाला एव उत्तेजित, कलत्र-सहित = सपत्नीक, आर्त = दीन, भुजग यथा = सर्प जिस प्रकार, [ अपसर्प = जाता है, तथा = उसी प्रकार ] वित्रस्त-दार-सुत-रक्षण-हीन-शक्ते = विशेष रूप से भयभीत, स्त्री एव पुत्रो की रक्षा म क्षीण सामर्थ्य वाले [ हे ब्राह्मण ? ], मत-भय-विनाशित-धैर्य-सार = मेरे भय से विशेष रूप से नष्ट हुए धैर्य एव बल वाले [ त्वम्-तुम ], यासि-क्या जा रहे हो ? ॥८॥

विमर्श—तृक्ष अर्थात् कश्यप मुनि की सन्तान होने से गरुड तार्क्ष्य कहलाए । 'भीत्रार्थाना भयहेतु' इस सूत्र से भय के हेतु 'मत्' मे पञ्चमी हुई है।

निवारितमपि गमनाद् अनिवर्तमान ब्राह्मण सोपलम्भमाह—भो ब्राह्मणेत्यादिना । न गन्तव्यम् = नापगन्तव्यम् । न भेतव्यम् = अयमुत्कटमनर्थमुत्पादयिष्यति इति भय ते मा भूत्-इत्यर्थ । हि-यस्मात् कारणात् । अस्य-उद्धतस्यापि राक्षसस्य, वाणी = वचनम्, सविमर्शा-विमर्श साध्वसाधुविचार, तद्युक्ता ॥

जानामीति । पृथिव्याम् = भूमण्डले, द्विजोत्तमा = ब्राह्मणश्रेष्ठा, सर्वत्र सदा च = सर्वस्मिन् देशे, सर्वस्मिन् काल च, पूज्यतमा-अतिशयेन पूजनीया एव, जानामि नाम = निश्चयेन उत्तमयमह सम्यग् वेद्मीत्यर्थ । अद्य =

---

हे ब्राह्मण । मत जाओ, मत जाओ ।

वृद्ध—हे ब्राह्मणी हमें डरना नही चाहिए, मत डरो मेरे पुत्रो, क्योकि इसकी वाणी विमर्श युक्त मालूम पडती है।

घटोत्कच—ओह ! बडा कष्ट है ।

यद्यपि श्रेष्ठ ब्राह्मण, पृथ्वी पर सर्वदा और सभी स्थान पर अत्यन्त पूज-

अकार्यमेतच्च मयाद्य कार्यं
मातुर्नियोगादपनीतशङ्कम्[1] ॥ ९ ॥

वृद्ध.—ब्राह्मणि ! किं न स्मरसि तत्रभवता जलविलन्नेन

---

इदानीम्, मया=घटोत्कचेन, एतत् अकार्यम्=इदं गर्हितं कर्म, अर्थात् वक्ष्यमाण-वृद्धब्राह्मणकुटुम्बेष्वन्यतमस्य मातुराहारार्थं नयनम्, मातु.=मज्जनन्याः; नियोगात्=निदेशात्, अपनीतशङ्कम्=नि शङ्कं यथा भवति तथा, कार्यं च=कर्तव्यं च, चशब्दस्तुल्यकालयोगे । इत्थं द्विजोत्तममाहात्म्यज्ञानसमकालमेव द्विजोत्तम-निधनानुकूलं मया चेष्टितव्यम् इत्यहो वैकल्यम्—इति भाव. । उपजातिः । सा चेयमुपजातिरिन्द्रवज्रोपेन्द्रवज्रा समिश्रता । तल्लक्षणञ्च—"स्यादिन्द्रवज्रा यदि तौ जगौ ग" । 'उपेन्द्रवज्रा जतजास्ततो गौ' । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ॥ ९ ॥

[ प्रस्तुत श्लोक मे ब्राह्मणवध से सम्भावित शोक और घटोत्कच की मातृभक्ति दिखाई गई है— ]

अन्वय—[ यद्यपि ] द्विजोत्तमा., पृथिव्या, सदा, च, पूज्यतमाः [ भवन्ति इति अहं ] जानामि, नाम, [ तथापि ] मातु. नियोगात् अपनीत-शङ्कम्, अद्य, मया, एतत् अकार्यम् [ अपि ] कार्यम् ॥ ९ ॥

पदार्थ—[ यद्यपि ] द्विजोत्तमा =यद्यपि श्रेष्ठ ब्राह्मण, पृथिव्याम्= पृथ्वी पर, सदा सर्वत्र च=सर्वदा और सभी स्थान पर, पूज्यतमा =अत्यन्त पूजनीय [ भवन्ति–इति अहं=होते हैं—यह मैं ] जानामि नाम=निश्चित रूप से जानता हूँ, [ तथापि=फिर भी ], मातु =माता के, नियोगात्= आदेश से, अपनीतशङ्कम्=शङ्का को छोडकर अर्थात् निःशंक होकर । अद्य=आज, मया=मुझको, एतत् अकार्यम् [ अपि ]=इस अकरणीय कार्य को [ भी ], कार्यम्=करना है ॥ ९ ॥

ब्राह्मणीति । जलविलन्नेन=तन्नाम्ना मुनिना । अनपेतराक्षसम्=अन-

---

नीय [होते] हैं—[यह मैं] निश्चित रूप से जानता हूँ । [ तथापि ] माता के आदेश से नि.शंक होकर आज इस अकरणीय कार्य को [भी] करना है ॥ ९ ॥

वृद्ध—हे ब्राह्मणी ! क्या तुम्हे याद नही है कि पूजनीय जलविलन्न मुनि ने कहा था कि—'यह वन [ सर्वथा ] राक्षसो से विहीन नहीं है । अतः बडी

---

१. 'अपनीय शङ्कम्' इति वा पाठ ।

मुनिनोक्तम्—अनपेतराक्षसमिदं वनमप्रमादेन गन्तव्यमिति ।
तदेवोत्पन्नं भयम् ।

ब्राह्मणी—किं दाणि अय्यो मज्झत्थवण्णो विअ दिस्सदि।
( किमिदानीमार्यो मध्यस्थवर्ण इव दृश्यते ) ।

वृद्धः—किं करिष्यामि मन्दभाग्यः ।

ब्राह्मणी—णं विक्कोसामो । ( ननु विक्रोशाम. ) ।

प्रथमः—भवति ! कस्य वयं विक्रोशामः ।

इदं हि शून्यं तिमिरोत्करप्रभै-
नंगप्रकारैरवरुद्धदिक्पथम् ।
खगैर्मृगैश्चापि समाकुलान्तरं

---

पैशा. अहीनाः राक्षसा. यस्मात् तत् राक्षसयुत वनम् । अप्रमादेन=अवधानेन गन्तव्यम् । तदेव भयम्=जलशिलमयवनतर्कित राक्षसभयमेव, उत्पन्नम्= उपस्थितम् । [1]मध्यस्थवर्ण इव=उदासीन इव दृश्यते भवान्, गणपतिशास्त्रि-महोदयेनाय शब्द द्विधा व्याख्यात (क) मध्यस्थ त्रिषु वर्गेषु मध्यगतो वर्ण, अर्थात् क्षत्रिय', स इव धीरव्यवहारिरस्त्रात । (ख) अथवा मध्यस्थस्य उदासीनस्येव वर्णश्छाया यस्य स । उपस्थितविपत्प्रतीकारयत्नाकरणात् ॥

इद हीति । तिमिरोत्करप्रभैः=तिमिरस्य उत्करा: स्तोमा राशय तेषां प्रभा इव प्रभा येषाम्, तमस्तोमश्यामैरित्यर्थ. । नगप्रकारैः=विविधै. वृक्षै. विभिन्नप्रकारैः पर्वतैर्वा । अवरुद्धदिक्पथम्=उपरुद्धदिङ्मार्गम्, वृक्षसकुलत्वात् अस्मिन् वने दिङ्मार्गो न दृश्यते; आवृत पन्था यस्मिन् तत् वनमित्यर्थः । खगै.—

---

सावधानी से जाना चाहिए ।' [ जो कहा था ] वही भय सामने उपस्थित हो गया है ।

ब्राह्मणी—किंकर्तव्यविमूढ से आप इस समय क्यों दिखाई दे रहे हैं ?

वृद्ध—मैं भाग्यहीन क्या कर सकता हूँ ?

ब्राह्मणी—हम लोग [ सहायता के लिए ] क्यो न ? चिल्लाएँ ।

प्रथम ( पुत्र )—माँ हम किसे बुलावें ?

क्योंकि, यह वन अत्यन्त सूना है, बडे-बडे वृक्षो [अथवा पर्वतो की शृङ्खला] के कारण पुञ्जीभूत अन्धकार की प्रभा से [ यहाँ ] दिशाओ के रास्ते रोक

---

१. तु० 'तथापि वयमत्र मध्यस्था' शाकु० ५.११ ।

वन निवासाभिमतं मनस्विनाम् ॥ १० ॥

वृद्धः—ब्राह्मणि ! न भेतव्य, न भेतव्यम् । मनस्विजननिवास-

---

पक्षिभि, मृगैः=पशुभिश्च समाकुलान्तरम्=सम्यक् रूपेण आकुल परिपूर्णम् अन्तरम् अन्तरालम् यस्य व्याप्तावकाशमित्यर्थः । तादृश, इद हि=पुरो दृश्यमान वनम्=अरण्यम् शून्यम्=निर्जनम्, मनस्विनाम्=प्रशस्तमनस्काना मुनीनामिति यावत्, तपोबलादियोगात् मनस प्राशस्त्यम् । निवासाभिमतम्=निवासाय अभिमतम् इष्टम् । अत अस्मद् विक्रोशध्वनि तु अरण्यरोदनमेव स्यात् । काव्य-लिङ्गालकार । वशस्थवृत्तम् । तल्लक्षण तु—'जतौ तु वशस्थमुदीरितं जरौ' ॥ १० ॥

[ प्रस्तुत श्लोक मे प्रथम पुत्र के द्वारा यह बतलाया जा रहा है कि यहाँ चिल्लाना बेकार है क्योकि— ]

अन्वय—हि इद, वन, शून्यम् । तिमिरोत्कर-प्रभैः, नगप्रकारैः, अवरुद्ध-दिक्पथम्, अपि, च, खगैः, मृगैः समाकुलान्तरम्, वन मनस्विनाम्, निवासा-भिमतम् ॥ १० ॥

पदार्थ—हि इद=क्योकि यह, वनम्=जङ्गल, शून्यम्=अत्यन्त सूना है । तिमिर-उत्कर-प्रभैः=पुञ्जीभूत अन्धकार की प्रभा से, नगप्रकारैः=एव बडे वृक्षो [ अथवा पर्वतो की शृङ्खला ] से, अवरुद्धदिक्पथम्=दिशाओ के पथ रोक दिए गए है । अपि च=और खगैः मृगैः च=पशु और पक्षियो से, समाकुल अन्तरम्=[ इस जङ्गल का ] अन्तराल सम्यक् रूप से घिरा हुआ है [ अत हम लोगो की आवाज यहाँ कौन सुनेगा ? अर्थात् यहाँ चिल्लाना अरण्यरोदन ही होगा ] [ इस प्रकार का यह वन तो ] मनस्विनाम्=तपस्वियो के ही निवासाभिमतम्=निवासयोग्य है ॥ १० ॥

विमर्श—'समर्थनीयस्यार्थस्य काव्यलिङ्ग समर्थनम्' इस लक्षण से यहाँ काव्यलिङ्ग अलङ्कार है ॥ १० ॥

---

दिए गए है, और पशु एव पक्षियो से [ इस जङ्गल का ] अन्तराल सम्यक् रूप से घिरा हुआ है, यह तो तपस्वियो के ही निवास के योग्य है । [ अत हम लोगो की आवाज यहाँ कौन सुनेगा ? ] ॥ १० ॥

वृद्ध—हे ब्राह्मणी ! मत डरो, मत डरो । यह वन मनस्वियो के निवास योग्य है—ऐसा सुनकर मेरा भय चला सा गया है । मैं सोचता हूँ कि पाण्डवो

योग्यमिति श्रुत्वा विगत इव मे सन्त्रासः। शङ्के नातिदूरेण[1] पाण्डवाश्रमेण भवितव्यम्। पाण्डवास्तु,

युद्धप्रियाश्च शरणागतवत्सलाश्च
दीनेषु पक्षपतिता कृतसाहसाश्च।
एव विधप्रतिभयाकृतिचेष्टितानां
दण्डं यथार्हमिह धारयितुं समर्थाः॥ ११॥

---

एतादृशो निग्रहे सक्षमा पाण्डवा अस्मान् रक्षितुं समर्था इत्यभिप्रायेणाह–पाण्डवास्तु, युद्धेति। पाण्डवा–भीमसेनप्रमुखा पञ्चपाण्डवा, प्रकृत्या युद्धप्रिया = रणरसिका, शरणागतवत्सलाः = शरणागतेषु जनेषु वत्सला स्निग्धा, दीनेषु–आर्तजनेषु पक्षपतिता–पक्षपाति कृतसाहसाश्च–कृतम् साहस् प्रदर्शित साहसं यैस्ते, एवंविधप्रतिभयाकृतिचेष्टितानाम्–एतद्राक्षससदृशानां प्रतिभयाकृतिचेष्टितानां भयकराकारपरिताना दुर्वृत्तजनानामित्यर्थः। 'दारुण भीषण भीष्म घोर भीम भयानकम्। भयङ्कर प्रतिभयम्' इत्यमरः। तेषां यथार्हं–यथोचितम्, दण्ड धारयितुम्–नियमन कर्तुम् समर्था –शक्ता सन्तीति शेषः। एतादृशभयंकराकृतीनां निग्रहे पाण्डवा समर्था। परिकरालंकार। वसन्ततिलकावृत्तम्॥ ११॥

[ प्रस्तुत श्लोक मे वृद्ध के द्वारा पाण्डवो की शरणागतवत्सलता का प्रतिपादन हो रहा है—]

---

अन्वय—[पाण्डवा तु] युद्धप्रिया, च, शरणागतवत्सला दीनेषु, पक्षपतिता, कृतसाहसाश्च। इह, एवंविध–प्रतिभय–आकृति–चेष्टितानां, यथार्हम्, दण्ड धारयितु समर्था [ सन्ति ]॥ ११॥

का आश्रम यहाँ से बहुत दूर नही होना चाहिए, और पाण्डव तो–'बडे ही युद्धप्रिय हैं और शरण मे आए हुए मनुष्यो पर दया करने वाले हैं। पक्षहार्यों की सहायता करने वाले हैं और साहस कर्मा [ भी ] हैं। [ अत ] यहाँ पर इस प्रकार के भयङ्कर आकृति वाले एवं क्रूर कार्य करने वालो को यथोचित दण्ड देने मे [ वे ] समर्थ [ हैं ]॥ ११॥

---

१ 'न चातिदूरेण' इति वा पाठः।
२ द्र० 'प्रतिभयमभ्युदितास्यरण्यवासम्' स्वप्न० ६ १।
२ म० व्या०

प्रथम —भोस्तात ! न तत्र पाण्डवा इति मन्ये ।

वृद्ध —पुत्र ! कथं त्वं जानीषे ।

प्रथमः—श्रुतं मया तस्मादाश्रमादागतेन केनचिद् ब्राह्मणेन कथितं—शतकुम्भं नाम यज्ञमनुभवितुं महर्षेर्धौम्यस्याश्रमं गता इति ।

वृद्धः—हन्त, हता स्म ।

प्रथम —तात ! न तु सर्व एव । आश्रमपरिपालनार्थमिह स्थापित. किल मध्यम ।

वृद्ध —यद्येवं, सन्निहिता सर्वे पाण्डवा॰ ।

---

पदार्थ—[ पाण्डवा , तु = पाण्डव तो ] युद्धप्रिया = बड़े ही युद्धप्रिय हैं, च = और, शरणागतवत्सला = शरण मे आए हुए जन पर दया करने वाले हैं। दीनेषु = असहायो का, पक्षपतिना = पक्षपात करने वाले हैं, कृतसाहसाश्च = और साहसी कर्मो को करने वाले हैं, इह = यहाँ पर, एवंविधम् = इस प्रकार के, प्रतिमय-आकृति-चेष्टितानाम् = मयङ्कर स्वरूप और [ क्रूर ] कर्म करने वालो को, यथार्हम् = यथोचित, दण्ड धारयितुम् = दण्ड देने में, [ ते ] समर्था [ सन्ति ] = [ वे ] समर्थ हैं ॥ ११ ॥

विमर्श—साभिप्राय विशेषण होने से यहाँ परिकराऽलङ्कार है ।

शतकुम्भ नाम यज्ञम् = श्रौतादियागेषु नास्य नाम पठ्यते । हन्तेति विषादे । हता =आत्मरक्षा प्रति भग्नाशा इत्यर्थ. । इह = आश्रमे । मध्यमः =

---

प्रथम ( पुत्र )—हे तात ! मेरा अनुमव है कि पाण्डव आश्रम में नहीं हैं।

वृद्ध—तुम कैसे यह जानते हो ?

प्रथम ( पुत्र )—वहाँ से आते हुए किसी ब्राह्मण से हमने सुना है कि—वे शतकुम्भ नामक यज्ञ मे सम्मिलित होने के लिए महर्षि धौम्य के आश्रम पर गए हैं।

वृद्ध—ओह ! हम लोग मारे गए ।

प्रथम ( पुत्र )—हे तात ! वे सब [ वहाँ ] तो नही गए है । [ जैसा कि हमने सुना है ] आश्रम के परिपालनार्थ मध्यम पाण्डव [ भीम ] नियुक्त किये गए हैं।

वृद्ध—यदि ऐसा है [ तो ] सभी पाण्डव उपस्थित ही हैं ।

प्रथमः—स चाप्यस्यां वेलायां व्यायामपरिचयार्थं विप्रकृष्ट-देशस्थ इति श्रूयते।

वृद्धः—हन्त, निराशाः स्म। भवतु, पुत्र! व्यपश्रयिष्ये[1] तावदेनम्।

प्रथमः—अलमलं परिश्रमेण।

वृद्धः—पुत्र! निर्वेदप्रत्यर्थिनी खलु प्रार्थना। भवतु, पश्याम-स्तावत्। भो पुरुष! अस्त्यस्माकं मोक्षः?

घटोत्कचः—मोक्षोऽस्ति समयतः।

वृद्धः—कः समयः?

घटोत्कचः—अस्ति मे तत्रभवती जननी। तयाऽहमाज्ञप्तः—पुत्र! ममोपवासनिसर्गार्थमस्मिन् वनप्रदेशे कश्चिन्मानुषः [2]परि-मृग्यानेतव्य इति। ततो मयाऽऽसादितो भवान्।

मध्यमपाण्डवो भीमसेनः। अस्यां वेलायाम्=एतस्मिन् समये, व्यायामपरिच-यार्थम्=व्यायामो मल्लव्यापारः, तस्य परिचयोऽभ्यासो दैनन्दिनमनुष्ठानं, तदर्थम्। विप्रकृष्टदेशस्थ=स्वाश्रमविदूरप्रदेशगतः, "स्याद् दूरं विप्रकृष्टम्" इत्यमरः। व्यपश्रयिष्ये=प्रार्थयिष्ये, वि+अप+आ+श्रि+लृट्, निर्वेद-प्रत्यर्थिनी=विरागो निर्बलत्वं वा, तस्य प्रत्यर्थिनी विरोधिनी खलु प्रार्थना। उपवासनिसर्गार्थम्=उपवासस्य निसर्गं उत्सर्गं, तदर्थम्, उपवासाङ्गभूत-

प्रथम (पुत्र)—[किन्तु हमने] यह भी सुना है कि—इस समय वे भी व्यायाम करने के लिए कहीं दूर चले गए हैं।

वृद्ध—ओह! हम लोगों को अब कोई आशा नहीं है। ठीक है, बेटा, तब हम इन्हीं से अनुनय विनय करें।

प्रथम (पुत्र)—नहीं, परिश्रम करना व्यर्थ है।

वृद्ध—हे पुत्र! प्रार्थना शान्ति की अभिलाषा से होगी। अच्छा, तो देखा जाय। हे पुरुष! हम लोगों के छुटकारे का क्या कोई उपाय भी है?

घटोत्कच—हाँ! एक शर्त पर छुटकारा हो सकता है।

वृद्ध—क्या शर्त है?

घटोत्कच—मेरी पूजनीया माता हैं। उन्होंने यह आदेश दिया है कि—

१ '०पाश्रयिष्ये' इति वा पाठः। २ 'प्रतिगृह्या०' इति वा पाठः।

पत्न्या चारित्रशालिन्या द्विपुत्रो मोक्षमिच्छसि ।
बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥ १२ ॥

वृद्ध —हं भो राक्षसापसद ! किमहमब्राह्मण ?

---

पारणार्थमित्यर्थ. । समयः=शपथ, 'समय शपथाचार कालसिद्धान्तसंविद' इत्यमर' ।

शपथस्य प्रकार प्रदर्शयति–पत्न्येत्यादिना । त्व यदि, चारित्रशालिन्या=पतिव्रतया धर्मपत्न्या सह, द्विपुत्रः=पुत्रद्वयविशिष्टः, मोक्षम्=मद्धस्ताद् मोचनम्, इच्छसि=अभिलषसि । तर्हि त्रिषु अन्यतमम् एक पुत्रम् बलाबलम्=बलाबले, 'विप्रतिषिद्ध चानधिकरणवाचि' ( पा० सू० २४।१४ ) इति विकल्पाद् द्वन्द्वैकवद्भाव । तेषा प्रियत्वम्, रक्षणीयत्वम् अरक्षणीयत्व वा, परिज्ञाय=पर्यालोच्य, विसर्जय=परित्यज, मह्यम् अर्पय इत्यर्थ । एव 'पुत्रमेकमुत्सृजन्त द्विपुत्र पत्न्या सह त्वा मोचयिष्ये इति समय । अनुष्टुप् वृत्तम् ॥१२॥

अन्वय—[ हे वृद्ध ! ] चारित्रशालिन्या, पत्न्या [ सह ], द्विपुत्र [ यदि मत्त ], मोक्षम्, इच्छसि, [तर्हि] बलाबल, परिज्ञाय, एक, पुत्र, विसर्जय ॥१२॥

पदार्थ—[ हे वृद्ध ! ], चारित्रशालिन्या पत्न्या=सदाचारी और शीलवती पत्नी [ और ] द्विपुत्र =दो पुत्रो के सहित [यदि मत्त =यदि मुझसे] मोक्षम् इच्छसि=मुक्ति की इच्छा रखते हो, [ तर्हि=तो ], बलाबलम्=योग्य और अयोग्य का, परिज्ञाय=विचार करके एक पुत्रम्=एक पुत्र को, विसर्जय=छोड दो ॥ १२ ॥

राक्षसापसद=राक्षसेषु मध्ये हीन !, हे नीचराक्षस ! वृद्धोऽहं श्रुत-

---

'हे पुत्र ! इस वनप्रदेश से मेरे उपवास की पारणा के लिए किसी मनुष्य को खोजकर लाओ ।' तभी आप मेरे द्वारा आक्रमित हुए हैं । अत —

[हे वृद्ध !] सदाचारी एव शीलवती पत्नी और दो पुत्रो के सहित [यदि मुझसे] मुक्ति की इच्छा रखते हो [ तो ], योग्य और अयोग्य का विचार करके एक पुत्र को छोड दो ॥ १२ ॥

वृद्ध—ओह ! हे दुष्ट राक्षस ! क्या मैं ब्राह्मण नही हूँ ?

ब्राह्मणः[1] श्रुतवान् वृद्धः पुत्रं शीलगुणान्वितम् ।
पुरुषादस्य दत्त्वाहं कथं निर्वृतिमाप्नुयाम् ॥ १३ ॥

घटोत्कचः—

यद्यर्थितो द्विजश्रेष्ठ ! पुत्रमेकं न मुञ्चसि ।
सकुटुम्ब क्षणेनैव विनाशमुपयास्यसि ॥ १४ ॥

वृद्ध—एष एव मे निश्चयः—

वान्=श्रुत शास्त्र तद्वान्, शास्त्रज्ञ । शीलगुणान्वितम्=शीलरूपगुणेन समन्वितम्, पुत्रम्=तनयम् 'आत्मस्तनयस्सूनुः सुतः पुत्रः' इत्यमरः । पुरुषादस्य=पुरुष नरम् अत्ति खादतीति पुरुषादः तस्य नरभक्षकस्य राक्षसस्य दत्त्वा=अर्पयित्वा, कथम्=केनोपायेन, निर्वृतिम्=सुखम् आप्नुयाम्=लभेय । अनुष्टुप् वृत्तम् ॥ १३ ॥

अन्वय—[ हे राक्षस ! ] अहम्, वृद्ध, श्रुतवान्, ब्राह्मण, शीलगुणान्वितम्, पुत्र, पुरुषादस्य, दत्त्वा, कथम्, निर्वृतिम् आप्नुयाम् ॥ १३ ॥

पदार्थ—[ हे राक्षस ! ] अहम्=मैं, वृद्ध=बुड्ढा [ अर्थात् बुजुर्ग ], श्रुतवान्=शास्त्रज्ञ, ब्राह्मण=ब्राह्मण होकर, शीलगुणान्वितम्=शील और गुण से युक्त, पुत्रम्=पुत्र को, पुरुषादस्य=मानव-भक्षी राक्षस को, दत्त्वा=देकर, कथम्=किस प्रकार, निर्वृतिम्=मुक्ति को, आप्नुयाम्=प्राप्त करूँगा ॥ १३ ॥

हे द्विजश्रेष्ठ !=द्विजेषु विप्रेषु श्रेष्ठ पूज्यतम तत् सम्बुद्धौ, प्रशस्य श्र, यदि=चेत्, अर्थित=मया याचित सन्, एकम्=त्रिषु अन्यतमम् एकम्, पुत्रम्=तनयम्, न मुञ्चसि=न अर्पयसि, तर्हि, सकुटुम्ब=परिवार-सहित, पुत्रकलत्रोपेत, क्षणेनैव=झटिति, विनाशम्=विनष्टो भविष्यसि, उपयास्यसि=प्राप्स्यसे । अनुष्टुप् वृत्तम् ॥ १४ ॥

[हे राक्षस] मैं बुजुर्ग और शास्त्रज्ञ ब्राह्मण होकर शील एवं सब गुण से युक्त पुत्र को नरभक्षी [राक्षस] को देकर किस प्रकार मुक्ति प्राप्त करूँगा ? ॥१३॥

घटोत्कच—हे श्रेष्ठ ब्राह्मण ! यदि माँगे हुए एक पुत्र को नहीं छोड़ोगे [ तो ] क्षण में ही सपरिवार विनाश को प्राप्त हो जाओगे ॥ १४ ॥

वृद्ध—[ ठीक है ] मेरा भी यही निश्चय है कि—

[1] 'किमहम्' इति वा पाठः ।

कृतकृत्यं शरीरं मे परिणामेन जर्जरम्।
राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥ १५ ॥

ब्राह्मणी—अय्य ! मा मा एवं। पदिमत्ताधम्मिणी पदिव्वदत्ति

अन्वय—हे द्विजश्रेष्ठ ! यदि, अर्थित, एकम्, पुत्रम्, न, मुञ्चसि, (तर्हि) क्षणेनैव, सकुटुम्ब, विनाशम्, उपयास्यसि ॥ १४ ॥

पदार्थ—हे द्विजश्रेष्ठ=हे ब्राह्मणो मे श्रेष्ठ ! [ अर्थात् पूज्यतम ब्राह्मण ] यदि=यदि, अर्थित =याचित [ मांगे हुए ], एकम्=एक, पुत्रम्=पुत्र को, न मुञ्चसि=नही छोड दोगे, [तर्हि=तो], क्षणेनैव=क्षणमात्र मे, सकुटुम्ब = परिवार के सहित, विनाशम्=विनाश को, उपयास्यसि=प्राप्त होगे ॥ १४ ॥

कृतेति। सुतापेक्षी=सुतस्य पुत्रस्य अपेक्षा अस्ति यस्य स, सुतरक्षणार्थीत्यर्थ। [अहम्] परिणामेन=वृद्धावस्थया, वृद्धत्वस्य परिपाकेन, जर्जरम्= शिथिलम्, कृतकृत्यम्=कृतार्थम्, कृत कृत्य येन तम्, ऋणत्रयापाकरणरूप स्वधर्मोऽनुष्ठितो येनेत्यर्थ। विधिसस्कृतम्=विधिपूर्वकोऽनुष्ठान सस्कृत पूतम्, मे=मम वृद्धस्य, शरीरम्=पार्थिवविग्रहम्, राक्षसाग्नौ=हवि स्थानीय स्वशरीर राक्षसरूपेऽग्नौ, राक्षस एव अग्नि राक्षसाग्नि तस्मिन्, होष्यामि= आहुतिकरिष्यामि। इद कृतकृत्य शिथिल च शरीर सुतरक्षार्थं राक्षसमिम समर्पयिष्यामि। रूपकालङ्कार। अनुष्टुप् वृत्तम् ॥ १५ ॥

अन्वय—परिणामेन, जर्जरम्, म, शरीरम्, कृतकृत्यम्। विधिसस्कृतम्, [ शरीरम् ] सुतापेक्षी, राक्षसाग्नौ, होष्यामि ॥ १५ ॥

पदार्थ—परिणामेन=आयु बीत जाने मे, जर्जरम्=शिथिल, मे शरीरम्= मेरा शरीर, कृतकृत्यम्=कृतार्थ हो चुका है। विधिसस्कृतम्=अनुष्ठानो से पवित्र [शरीरम्=शरीर को], सुतापेक्षी=अपने लडके की रक्षा के लिए, [मैं स्वय ही] राक्षसाग्नौ=राक्षस की [क्षुधा रूप] अग्नि मे, होष्यामि=हवन कर दूंगा ॥१५॥

पतिव्रता=पतिपरायणा, पतिमात्रधर्मिणी=पतिरेव एकमात्र धर्मो यस्या

आयु के विपरिणाम [ बीत जाने ] से जर्जर मेरा शरीर कृतार्थ हो चुका है। [ अत ] अनुष्ठानो से पवित्र [ इस ] शरीर को अपने लडके की रक्षा के लिए राक्षस की [ क्षुधा रूप ] अग्नि मे हवन कर दूंगा ॥ १५ ॥

ब्राह्मणी—हे आर्य ! ऐसा आपको नही सोचना चाहिए, क्योंकि पतिव्रता

णाम । गहीदफलेण एदिणा सरीरेण अय्यं कुलं अ रक्खिदुमिच्छामि । ( आर्य ! मा मैवम् । पतिमात्रधर्मिणी पतिव्रतेति नाम । गृहीतफलेनैतेन शरीरेणार्यं कुलं च रक्षितुमिच्छामि ) ।

घटोत्कचः—भवति ! न खलु स्त्रीजनोऽभिमतस्तत्रभवत्या ।

वृद्धः—अनुगमिष्यामि भवन्तम् ।

घटोत्कचः—आः ! वृद्धस्त्वमपसर ।

प्रथम.—भोस्तात ! ब्रवीमि खलु तावत् किञ्चित् ।

वृद्ध —पुत्र ! कथय ।

प्रथम —

मम प्राणैर्गुरुप्राणानिच्छामि परिरक्षितुम् ।

---

सा पत्यभावे धर्मविहीनेत्यर्थ । गृहीतफलेन=कृतकार्येण, गृहीत प्राप्त फल पुत्रोत्पादनरूप प्रयोजन येन । तथा च महाभारते—

'यदर्थमिष्यते भार्या प्राप्तः सोऽर्थस्त्वया मयि ।
कन्या चैका कुमारश्च कृताहमनृणा त्वया ॥
मुक्ते प्रियाण्यवाप्तानि धर्मश्च चरितो महान् ।
त्वत्प्रसूति प्रिया प्राप्ता न मा तप्स्यत्यजीवितम् ॥

( महाभा० बकवधपर्वणि १५८ ७,३३ )

स्त्रीजन., न खल्वभिमत =नैवेष्ट घटोत्कचजनन्या । उक्त च महाभारते—'अवध्या स्त्रियमित्याहुर्धर्मज्ञा धर्मनिश्चये ।' (महाभा० अ० १५७ ३१)

वृद्ध अस्थिपञ्जरमात्र शरीरस्त्वम् उपवासपारणाय अनुपयुक्त, अत, अपसर=इतो दूरं गच्छ ।

पितुर्देहत्यागमसहमानो ज्येष्ठ. पुत्र. परिवारस्य परित्राणाय स्वप्राणान् समर्पयन् वदति=ममेत्यादिना । मम=आत्मन, प्राणै =जीवनदानेन,

---

स्त्री के लिए पातिव्रत-धर्म ही सब कुछ है । अत इस कृतकृत्य शरीर से आर्य और कुल की रक्षा मैं चाहती हूँ ।

घटोत्कच—हे देवि ! किन्तु मेरी पूज्या माँ को स्त्री-अभिप्रेत नहीं है ।

वृद्ध—तो मैं ही आप के साथ अनुगमन करूँगा ।

घटोत्कच—अरे वृद्ध ! तुम अलग हटो ।

प्रथम ( पुत्र )—हे तात ! तो मैं कुछ कहना चाहता हूँ ।

वृद्ध—कहो बेटा ।

प्रथम ( पुत्र )—मैं अपने प्राणो के द्वारा [ माता-पिता ] गुरुजनो के

रक्षणार्थं कुलस्यास्य मोक्तुमर्हति मा भवान् ॥ १६ ॥

द्वितीय—आर्य ! मा मैवम् ।

ज्येष्ठ श्रेष्ठ कुले लोके पितृणा च सुसंप्रिय ।
ततोऽहमेव यास्यामि गुरुवृत्तिमनुस्मरन्[1] ॥ १७ ॥

---

गुरुप्राणान्=गुरूणा प्राणान् तान्, गुरो वृद्धस्य पितु भवत प्राणान् असून्; परिरक्षितुम्=परित्रातुम्, इच्छामि । [ अत ] भवान्, अस्य, कुलस्य=कुटुम्बस्य, रक्षणार्थम्=परित्राणार्थम्, मा मोक्तुमर्हति=परित्यक्तु योग्योऽस्ति । मम परित्यागो भवता कर्तव्य इत्यर्थ । अनुष्टुप् वृत्तम् ॥ १६ ॥

अन्वय—मम, प्राणै, गुरुप्राणान् परिरक्षितुम्, इच्छामि, [ अत. ] अस्य, कुलस्य, रक्षणार्थम्, भवान्, मा, मोक्तुम्, अर्हति ॥ १६ ॥

पदार्थ—मम=मेरे, प्राणै=प्राणो के द्वारा, गुरुप्राणान्=[ माता पिता आदि ] गुरुजनो के प्राणो के, परिरक्षितुम्=परित्राण के लिए, इच्छामि=मैं सोचता हूँ । [अत ] अस्य=इसलिए इस, कुलस्य=कुल की, रक्षणार्थम्=रक्षा के लिए, भवान्=आप, मा मोक्तुम्=मुझे छोड देने मे, अर्हति=समर्थ है ॥ १६ ॥

एव वदन्त ज्येष्ठ भ्रातर वारयन् मध्यम पुत्र कथयति–ज्येष्ठ इति । लोके=इह ससारे, कुले=वशे, ज्येष्ठ–अग्रज , श्रेष्ठ=अतिशयेन प्रशस्य । गुणवान् ज्येष्ठो लोके पूज्यतम साधुभिश्चार्गाहितो भवति । तथा च मनु—

'ज्येष्ठ पूज्यतमो लोके ज्येष्ठ सद्भिरगर्हित ॥' ( मनु० ९.१०९ )

पितृणाम्=गुरुजनानाम्, सुसप्रियश्च=अत्यन्तप्रिय स्नेहपात्र भवति, अथवा पिण्डदाने अग्रजस्य अधिकार, अत अन्यपुत्रापेक्षया प्रियतर । ततः=तस्माद् कारणात्, तव रक्षणीयत्वादित्यर्थ । अहमेव=मध्यम एव, गुरुवृत्तिम्=ज्येष्ठ प्रति वृत्तिम् आचारम्, अनुस्मरन्=चिन्तयन्, यास्यामि=गमिष्यामि,

---

प्राणो की रक्षा करना चाहता हूँ । इसलिए इस परिवार की रक्षा के लिए मुझे छोड देने मे आप समर्थ है ॥ १६ ॥

द्वितीय ( पुत्र )—आर्य ! इस प्रकार न कहे । [ क्योकि— ]

ज्येष्ठ पुत्र परिवार में और लोक में सदा श्रेष्ठ [ अर्थात् पूज्य ] होता है, और माता-पिता को सबसे अधिक प्रिय भी होता है । अत अपने गुरुजनों के प्रति अपने कर्तव्य का स्मरण करता हुआ मैं [मध्यम पुत्र] ही जाऊँगा ॥१७॥

---

१ 'अनुस्मर' इति वा पाठ ।

तृतीयः—आर्यौ ! मा मैवम् ।

ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः ।

ततोऽहं कर्तुमस्म्यर्हो गुरूणां प्राणरक्षणम् ॥ १८ ॥

प्रथमः—वत्स ! मा मैवम् ।

---

चरमावसरारम्भार्थं रामसेन महति शोधे । ज्येष्ठो भ्राता विमातामावेऽनुजान् भ्रातॄन् भक्ताच्छादनादिभिः पितेव बिभृयात् । अनुजाश्च भ्रातरः पुत्रा इव ज्येष्ठे भ्रातरि धर्मेण वर्तेरन् । इत्याचारमनुस्मरन् । यथा च मनुः—

'पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः ।

पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥ (मनु० ९ १०८)

अनुष्टुप् वृत्तम् ॥ १७ ॥

अन्वय—ज्येष्ठः कुले, लोके श्रेष्ठः पितुः, च, सुप्रियः, ततः गुरुवृत्तिम्, अनुस्मरन्, अहमेव, यास्यामि ॥ १७ ॥

पदार्थ—ज्येष्ठः=ज्येष्ठ पुत्र, कुले=कुल [ एव ] लोके=संसार में, श्रेष्ठः=श्रेष्ठ होता है । पितुः च=और पिता को सुसुप्रियः=अत्यन्त प्रिय होता है । ततः=इसलिए, गुरुवृत्तिम्=अपने गुरुजनों के प्रति कर्तव्य का, अनुस्मरन्=स्मरण करता हुआ, अहमेव=मैं [मध्यम पुत्र] ही यास्यामि=जाऊँगा ॥१७॥

कनिष्ठ पुत्र समानपि भ्रातरौ वारयन्नाह—ज्येष्ठ इति । ज्येष्ठः भ्राता, पितृसमः =पितृवत् पूजनीय –इति, ब्रह्मवादिभिः =ब्रह्मज्ञानसम्पन्नैः मन्वादिधर्मशास्त्रकारैः, कथितः =प्रोक्तः । ततः =तस्मात् कारणात्, गुरूणाम्=अस्मज्ज्येष्ठानाम् 'गुरुस्तु गीष्पतौ श्रेष्ठे'–इत्यमरः । पिता ज्येष्ठौ भ्रातरौ च गुरवः तेषां गुरूणाम्, प्राणरक्षणम्=जीवनस्य परित्राणम्, कर्तुम्=सम्पादयितुम् अर्हः [ कनिष्ठः पुत्रः ], अहम् =मध्यम अस्मि । अनुष्टुप् वृत्तम् ॥ १८ ॥

अन्वय—ज्येष्ठः, भ्राता, ब्रह्मवादिभिः, पितृसमः, कथितः । ततः, अहम्, [ एव ], गुरूणां, प्राणरक्षणम्, कर्तुम् अर्हः, अस्मि ॥ १८ ॥

---

तृतीय ( पुत्र )—आर्य, इस प्रकार न कहें । [ क्योंकि— ]

ब्रह्मवादियों के द्वारा ऐसा कहा गया है कि–बड़ा भाई पिता के समान होता है । इसलिए मैं ही अपने गुरुजनों की जीवन रक्षा करने में योग्य हूँ ॥ १८ ॥

प्रथम ( पुत्र )—वत्स, नहीं, ऐसा नहीं । [ क्योंकि— ]

वृद्धः—एह्येहि पुत्र !

विनिमाय गुरुप्राणान् स्वैः प्राणैर्गुरुवत्सल ! ।
अकृतात्मदुरावाप ब्रह्मलोकमवाप्नुहि ॥ २१ ॥

द्वितीयः—अनुगृहीतोऽस्मि । अम्ब ! अभिवादये ।

ब्राह्मणी—जाद ! चिरं जीव [ जात ! चिरं जीव ] ।

द्वितीयः—अनुगृहीतोऽस्मि । आर्य ! अभिवादये ।

प्रथमः—एह्येहि वत्स !

---

राक्षसेन सह प्रस्थानायोद्यतस्य पुत्रस्य अभिवादनानन्तर वृद्धस्य आशीर्वचनम्-विनिमायेत्यादि । हे गुरुवत्सल=हे गुरुजनानुरागिन्, गुरुषु वत्सल भक्ति तत्सम्बुद्धौ, स्वैः प्राणैः=स्वकीयैः प्राणैः असुभिः, गुरुप्राणान्=पूज्यजनजीवनानि तान् विनिमाय=परिवर्त्य, ल्यबन्तप्रयोग, वि+नि=मेङ् प्रणिदाने, प्रणिदान विनिमय प्रत्यर्पण च, स्वप्राणविनिमयेन तेषां जीवनरक्षां विधातुमिति भाव । अकृतात्मदुरावापम्=अकृतात्मभिः दुरात्मभिः दुरावाप दुर्लभम् । दुःखेन अवाप्तु शक्यम्, दुर+अव+आप् अनधिगतात्मज्ञानैरित्यर्थं । ब्रह्मलोकम्=ब्रह्मणः लोक देवलोकविशेषम्, अवाप्नुहि=लभस्व । अनुष्टुप् वृत्तम् ॥२१॥

अन्वय—हे गुरुवत्सल !, स्वैः, प्राणैः, गुरुप्राणान् विनिमाय, अकृतात्मदुरावापम्, ब्रह्मलोकम्, अवाप्नुहि ॥ २१ ॥

पदार्थ—हे गुरुवत्सल !=हे पूज्य जनों में अनुराग रखने वाले पुत्र, स्वैः प्राणैः=अपने प्राणों के द्वारा, गुरुप्राणान्=अपने पूज्यजनों के प्राण का; विनिमाय विनिमय (अर्थात् अदला बदली) करके, अकृतात्मदुरावापम्=अजितेन्द्रियों को सर्वथा दुर्लभ, ब्रह्मलोक=स्वर्गलोक को, अवाप्नुहि प्राप्त करो ॥२१॥

---

वृद्ध—आओ, आओ, मेरे पुत्र ।

पूज्य जनों के अनुरागी तुमने अपने प्राणों के विनिमय द्वारा गुरुजनों के प्राणों की रक्षा की है । अतः तुम्हें वह ब्रह्मलोक प्राप्त हो जो पापात्माओं को सर्वथा दुर्लभ है ॥ २१ ॥

द्वितीय ( पुत्र )—मैं अनुगृहीत हूँ । माँ ! मेरा प्रणाम स्वीकार करें ।

ब्राह्मणी—चिरजीवी होओ, मेरे पुत्र !

द्वितीय ( पुत्र )—मैं अनुगृहीत हूँ । भाई ! मेरा प्रणाम स्वीकार करें ।

प्रथम ( पुत्र )—आओ, आओ, मेरे भाई !

परिष्वजस्व गाढं मां परिष्वक्तः शुभैर्गुणैः ।
कीर्त्या तव परिष्वक्ता भविष्यति वसुन्धरा ॥ २२ ॥

द्वितीयः—अनुगृहीतोऽस्मि ।

तृतीयः—आर्य ! अभिवादये ।

द्वितीयः—स्वस्ति ।

तृतीयः—अनुगृहीतोऽस्मि ।

द्वितीयः—भोः पुरुष ! किञ्चिद् ब्रवीमि ।

---

अभिवादनस्य प्रत्युत्तरं प्रथमः सहोदरः यशोलाभाय एवम् अभिवदति—परिष्वजस्वेत्यादिना । शुभैः गुणैः=दयादाक्षिण्यादिभिः शोभनगुणैः; परिष्वक्तः=उपेतः, त्वम्, माम्=ज्येष्ठं सहोदरं, गाढम्=दृढम्, परिष्वजस्व=आलिङ्ग । तव=भवतः; कीर्त्या=कुलरक्षणजन्येन यशसा, वसुन्धरा=वसूनि धारयतीति वसुन्धरा वसुमती पृथ्वी, 'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा । गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः । परिष्वक्ता=परिव्याप्ता भविष्यति, अतः त्वम्, गाढालिङ्गनयोग्योऽसि । 'ष्वज' परिष्वङ्गे—इति धातोः अस्मिन् श्लोके अर्थत्रये प्रयोगः, यथा परिष्वजस्व=आलिङ्ग, परिष्वक्तः=उपेतः, परिष्वक्ता=व्याप्ता । अनुप्रासालङ्कारः । अनुष्टुप् वृत्तम् ॥ २२ ॥

अन्वय—शुभैः, गुणैः, परिष्वक्तः, [ त्वम् ], मां गाढं, परिष्वजस्व । तव, कीर्त्या, वसुन्धरा, परिष्वक्ता, भविष्यति ॥ २२ ॥

पदार्थ—शुभैः गुणैः=[ दया-दाक्षिण्य आदि ] शोभन गुणों से, परिष्वक्तः=विभूषित [ त्वम्=तुम ] मां=मुझे, गाढम्=गाढ रूप से, परिष्वजस्व=आलिंगित कर लो । तव=तुम्हारे, कीर्त्या=यश से, वसुन्धरा=[ सम्पूर्ण ] पृथ्वी, परिष्वक्ता=व्याप्त, भविष्यति=होगी ॥ २२ ॥

---

[दया-दाक्षिण्य आदि] शुभ गुणों से विभूषित तुम मेरा गाढालिंगन करो। तुम्हारी कीर्ति से सम्पूर्ण पृथ्वी व्याप्त होगी ॥ २२ ॥

द्वितीय ( पुत्र )—मैं अनुगृहीत हूँ ।

तृतीय ( पुत्र )—आर्य ! आपको मेरा प्रणाम है ।

द्वितीय ( पुत्र )—तुम्हारा मार्ग प्रशस्त हो ।

तृतीय ( पुत्र )—मैं अनुगृहीत हूँ ।

द्वितीय ( पुत्र )—महाशय ! आपसे कुछ प्रार्थना करना चाहता हूँ ।

घटोत्कचः—ब्रूहि, ब्रूहि शीघ्रम् ।

द्वितीयः—एतस्मिन् वनान्तरे जलाशय इव दृश्यते । तत्र मे प्रकल्पितपरलोकस्य पिपासाप्रतीकारं करिष्यामि ।

घटोत्कचः—दृढव्यवसायिन् ! गम्यताम् । अतिक्रामति मातुराहारकालः । शीघ्रमागच्छ ।

द्वितीयः—भोस्तात ! एष गच्छामि । ( इति निष्क्रान्तः )

वृद्धः—हा हा परिमुषिताः स्मो भोः ! परिमुषिताः स्मः ।

यस्त्रिशृङ्गो मम त्वासीन्मनोज्ञो वशपर्वतः ।
स मध्यशृङ्गभङ्गेन मनस्तपति मे भृशम् ॥ २३ ॥

---

मातु पारणकालातिक्रमो मा भूत्, अतः शीघ्रं ब्रूहि—इति भाव । प्रकल्पितपरलोकस्य=लोकान्तरं प्रस्थातुमुद्यतस्य । पिपासाप्रतीकारम्=पातुमिच्छा पिपासा तस्या प्रतीकार शान्ति जलपानमित्यर्थ ।

दृढव्यवसायिन्=दृढ व्यवसाय लोकान्तर-गमनोद्यमो यस्य सः दृढव्यवसायी तस्य सम्बुद्धौ । परिमुषिताः=पुत्रस्य हरणात् परिलुण्ठिता ।

लुण्ठनजनितमनोव्यथा वृद्ध प्रकाशयति—यस्त्रिशृङ्ग इत्यादिना । यः, मम=स्थविरस्य, त्रिशृङ्गः=त्रीणि शृङ्गाणि पुत्रत्रयरूपाणि शिखराणि यस्य स, [ अन ] मनोज्ञः=हृद्य ; वशपर्वतः=वश एव पर्वत सुप्रतिष्ठत्वात्; आसीत्=अभूत्, सः वशपर्वत, मध्यमशृङ्गभङ्गेन=मध्यमपुत्ररूपशृङ्गस्य भङ्गेन पातेन हेतुना, मे मनः=मम मानसम्, 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन ' इत्यमर ; भृशम्=अत्यन्तम्; तपति=सन्तापम् अनुभवति । अतः सावयवरूपकालङ्कार । अनुष्टुप् वृत्तम् ॥ २३ ॥

[ वृद्ध पिता अपना खेद इस प्रकार प्रकट करता है— ]

अन्वय—य , तु, मम, मनोज्ञ , वशपर्वतः त्रिशृङ्ग , आसीत् । स , मध्यशृङ्ग-भङ्गेन, मे, मन भृशम्, तपति ॥ २३ ॥

---

घटोत्कच—कहो, शीघ्र कहो ।

द्वितीय ( पुत्र )—इस घने जगल मे मुझे वहाँ जलाशय-सा दिखाई पड रहा है । वहाँ मैं परलोक यात्रा के लिए तैयार होने के लिए अपनी प्यास बुझा लूँ ।

घटोत्कच—हे दृढ निश्चय वाले ! जाओ, क्योकि मेरी माता के भोजन का समय बीत रहा है । ( वहाँ जाकर ) जल्दी आओ ।

द्वितीय ( पुत्र )—हे तात ! अब मैं जाता हूँ । ( चला जाता है ) ।

वृद्ध—हाय, हाय, हम लोग लूट लिए गए; ओह, हम लोग लूट लिए गए ।

हा पुत्रक ! । कथं गत एव ।

तरुण ! तरुणतानुरूपकान्ते !
नियमपराध्ययनप्रसक्तबुद्धे ! ।
कथमिह गजराजदन्तभग्न-
स्तरुरिव यास्यसि पुष्पितो विनाशम् ॥ २४ ॥

---

पदार्थ—य =जो; मम=मेरा, मनोज्ञ=मनोहर, वंश पर्वत = वंशरूपी पर्वत, त्रिशृङ्ग आसीत्=तीन शिखरो वाला था। स मध्य-शृङ्ग भङ्गेन=[ मध्यमपुत्र रूपी ] मध्य शृङ्ग के टूट जाने से, मे मन = मेरा मन, भृशम्=अत्यन्त; तपति=सन्ताप का अनुभव कर रहा है ॥ २४ ॥

वृद्ध स्वमनोव्यथा ज्ञापयति—तरुणेत्यादिना । हे तरुण=हे युवन्; हे तरुणतानुरूपकान्ते=हे यौवनानुरूपशोभासम्पन्न; तरुणस्य भाव· तरुणता तस्या तरुणताया अनुरूपा सदृशी कान्ति शोभा यस्य तत्सम्बुद्धौ, नियमपराध्ययनप्रसक्तबुद्धे=हे अध्ययनतत्परमते, नियमपरा व्रतनिरता अध्ययनप्रसक्ता च बुद्धि यस्य तत्सम्बुद्धौ, इह=वने, गजराजदन्तभग्न:=गजेन्द्रोत्पाटित ; गजाना हस्तियूथस्य राजा स्वामी द्विरदपति , तस्य दन्त रद तेन भग्न उत्पाटित, पुष्पित:=सञ्जातपुष्प , तरुरिव[1]=वृक्ष इव, कथम्=केन प्रकारेण, विनाशम्=संहारम्, यास्यसि=प्राप्स्यसि। प्रथमचरणे 'तरुण-तरुण०'—इति यमकालङ्कार । तारुण्यभूषितस्य तनयस्य पुष्पितवृक्षेण सह सादृश्यत्वात् उपमालङ्कार । पुष्पिताग्रा वृत्तम् । तल्लक्षण तु—'अयुजि नयुग-रेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥ २४ ॥

[ पिता अपने सन्ताप को इस प्रकार प्रकट करता है— ]

अन्वय—हे तरुण, हे तरुणतानुरूप कान्ते !, नियम पराध्ययन प्रसक्तबुद्धे, इह, गजराज दन्त-भग्न , पुष्पित , तरु , इव, कथम्, विनाशम्, यास्यसि ॥२४॥

पदार्थ—हे तरुण !=हे युवक !, हे तरुणतानुरूप-कान्ते=हे युवावस्था

---

जो मेरा तीन शिखरो वाला मनोहर वंश रूपी पर्वत था, उसके [मध्यम पुत्र रूपी] मध्य शृङ्ग के टूट जाने से मेरा मन अत्यन्त सन्ताप का अनुभव कर रहा है।

हाय बेटा, क्या तुम चले ही गए।

हे युवक, हे युवावस्था की तरुणाई के अनुरूप कान्ति वाले, हे संयमी एव निरन्तर अध्ययन मे तत्पर चित्त वाले, यहाँ प्रमत्त गजराज के दन्ताघात से भग्न, फूलो से भरे हुए वृक्ष के समान किस प्रकार विनाश को तुम प्राप्त हुए हो ॥ २४ ॥

---

१ तु० 'नागेन्द्रभग्नवनवृक्ष इवावसन्न' प्रतिमा० ६४।

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः। अतिक्रामति मातुराहारकालः। किन्तु खलु करिष्ये। भवतु दृष्टम्। भो ब्राह्मण! आहूयतां तव पुत्रः।

वृद्धः—आः, अतिराक्षसं खलु ते वचनम्।

घटोत्कचः—कथं रुष्यति। मर्षयतु भवान् मर्षयतु। अयं मे प्रकृतिदोषः। अथ किन्नामा तव पुत्रः?

वृद्धः—एतदपि न शक्यं श्रोतुम्।

---

की तरुणाई के अनुरूप कान्ति वाले!, नियम-पराध्ययन-प्रसक्त-बुद्धे=हे सयमी एव निरन्तर अध्ययन में तत्पर चित्त वाले!; इह=यहाँ, गजराज-दन्त-भग्न=प्रमत्त गजराज के दन्ताघात से भग्न, पुष्पित=फूलों से भरे हुए; तरु=वृक्ष, इव=के समान, कथम्=किस प्रकार, विनाशम्=विनाश को यास्यसि=] तुम ] प्राप्त हुए हो ॥ २४ ॥

विमर्श—इस श्लोक में पूर्णोपमा इस प्रकार बन पड़ी है—उपमान के रूप में 'तरु' और उपमेय ब्राह्मण कुमार है। तरुण और पुष्पित का बिम्ब-प्रतिबिम्बभाव ही साधारण धर्म है। अथवा 'विनाश यास्यसि' भी साधारण धर्म हो सकता है। उपमावाचक शब्द इव है।

चिरायते=विलम्ब्यते, चिरशब्दात् 'लोहितादिडाज्भ्य क्यप्' ( पा० सू० ३-१-१३ ) इति क्यप्।

अतिराक्षसम्=राक्षसान् अतिक्रान्तम्,=राक्षसोऽपीदृश क्रूर वचन न ब्रूयादिति भाव। रुष्यति=कुप्यति। मर्षयतु—क्षम्यताम्। प्रकृतिदोषः=अनुचितवक्तृत्व तु मम स्वभावगतदोष। अथेति प्रश्ने। किन्नामा=किं नाम यस्य स। तपस्वी=दीन, 'मध्यम'–इति पितृभ्याम् उपेक्षितत्वात्। सदृशम्=अनुरूपम् ॥

---

घटोत्कच—ब्राह्मण-बालक तो देर लगा रहा है। माता के आहार का काल व्यतीत हो रहा है। क्या किया जाय? अच्छा समझ गया। हे ब्राह्मण, अपने पुत्र को बुलाओ।

वृद्ध—ओह, तुम्हारी वाणी अत्यन्त रूक्ष है।

घटोत्कच—क्यों रुष्ट हो रहे हैं? आप मुझे क्षमा करें, क्षमा करें। यह मेरा स्वभावगत दोष है। किन्तु आपके पुत्र का क्या नाम है?

वृद्ध—यह भी [ तुम हमसे ] नहीं सुन सकते।

घटोत्कचः—युक्तम्, भोः ! ब्राह्मणकुमार ! किन्नामा ते भ्राता ?

प्रथमः—तपस्वी मध्यमः ।

घटोत्कचः—मध्यम इति सदृशमस्य । अहमेवाह्वयामि । भो मध्यम ! मध्यम शीघ्रमागच्छ ।

( ततः प्रविशति भीमसेनः )

भीमः-कस्यायं स्वरः ?

खगशतविरुते विरौति तारं
 द्रुमगहने दृढसङ्कटे वनेऽस्मिन् ।
जनयति च मनोज्वरं स्वरोऽयं
 बहुसदृशो हि धनञ्जयस्वरस्य[1] ॥ २५ ॥

---

'मध्यम'—इति सम्बोधनशब्दश्रवणानन्तरम्, अहमेवाहूत इति मन्यमानस्य भीमसेनस्य प्रवेशं सूचयति—ततः इत्यादिना ।

स्वरसादृश्येन विस्मितस्य भीमसेनस्य कौतूहलं दर्शयति—खगेत्यादिना । खगशतविरुते=पक्षिशतस्य विरुतं शब्दः यस्मिन् ( तस्मिन् वने ), द्रुमगहने=द्रुमैः वृक्षैः गहने व्याप्ते; दृढसङ्कटे=भृशंनिबिडे, अत बाधापन्ने, अस्मिन् वने=अरण्ये, 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः, स्वरोऽयम्=अयं ध्वनिः तारम्=अत्युच्चं यथा भवति तथा; विरौति=शब्दायते । एवमेव, च=तथा, मनोज्वरम्=उत्कण्ठा कौतूहलं वा; जनयति=उत्पादयति; हि=यतः ; धनञ्जय-

---

घटोत्कच—ठीक है, हे ब्राह्मण बालक, तुम्हारे भाई का क्या नाम है ?

प्रथम ( पुत्र )—दीन मध्यम ।

घटोत्कच-'मध्यम' नाम इसके अनुरूप है । मैं ही बुलाता हूँ । हे मध्यम, हे मध्यम, शीघ्र आओ ।

( उसके बाद भीमसेन प्रवेश करते हैं )

भीम—यह किसका स्वर है ?

सैकड़ों पक्षियों के कलरव से युक्त, अत्यन्त संकटापन्न, अनेक गहन वृक्षों से संकुलित इस वन में उच्च स्वर से [ कौन ] पुकार रहा है । यह स्वर मेरे मन में अत्यन्त उत्कण्ठा उत्पन्न कर रहा है कि [ यह ] अर्जुन के स्वर के अत्यन्त समान है ॥ २५ ॥

---

१. 'धनञ्जयस्य शब्दः' इति वा पाठः ।

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः; अतिक्रामति मातुराहारकालः। किन्नु खलु करिष्ये। भवतु, दृष्टम्। उच्चैः शब्दापयामि। भो भो मध्यम! शीघ्रमागच्छ।

भीमः—भोः! को नु खल्वेतस्मिन् वनान्तरे मम व्यायामविघ्नमुत्पाद्य मध्यम! मध्यम! इति मां शब्दापयति। भवतु, पश्यामस्तावत्। (परिक्रम्यावलोक्य सविस्मयम्) अहो दर्शनीयोऽय

---

स्वरस्य = अर्जुनस्वरस्य, धन जयति, अरीन् निर्जित्य अर्जयतीति धनञ्जय। अस्य निरुक्तिर्यथा महाभारते—

सर्वान् जनपदान् जित्वा वित्तमाश्रित्य केवलम्।
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्॥ (४४२१३)

बहुसदृश =अत्यन्तानुकारी, अर्जुनवाण्या सदृशोऽस्य स्वर इति भाव। अत स्वबन्धुभाव द्योतयति। स्मरणालकार। पुष्पिताग्रा वृत्तम्॥ २५॥

[घटोत्कच के शब्द को सुनकर भीम इस प्रकार की सम्भावना प्रकट करते हैं—]

अन्वय—खग शत विरुते, दृढसकटे, द्रुम गहने, अस्मिन् वने, तार, विरौति अयम्, स्वर, मनोज्वरम्, जनयति हि धनञ्जयस्वरस्य, बहुसदृश॥ २५॥

पदार्थ—खगशत विरुते=सैंकडो पक्षियो की चहचहाहट से युक्त, दृढसकटे=अत्यन्त सकटापन्न, द्रुमगहने=अनेक गहन वृक्षों से सकुलित, अस्मिन् वने=इस वन मे, तार=उच्च स्वर से, विरौति=पुकार रहा है। अयम्, स्वर =यह स्वर, मनोज्वरम्=कौतूहल, जनयति=उत्पन्न कर रहा है; हि=कि, धनञ्जयस्वरस्य=[यह] अर्जुन के स्वर के, बहुसदृश =अत्यन्त समान [अस्ति=है]॥ २५॥

शब्दापयामि=आह्वयामि, शब्दाद् णिच्, पुगागम। अपाणिनीयोऽय प्रयोग। दूराह्वान तु न भरतसम्मत, यथा—दूराह्वान वधो युद्ध राज्यदेशादिविप्लव। दर्शनीयः=विशिष्टाकृतित्वात् द्रष्टु योग्य॥

---

घटोत्कच—ब्राह्मण बालक तो देर कर रहा है और, माता के आहार का काल व्यतीत हो रहा है। क्या किया जाय? अच्छा, समझ गया। जोर से बुलाऊँ। हे मध्यम, शीघ्र आओ।

भीम—आह, यह कौन है जो इस गहन वन मे मेरे व्यायाम मे विघ्न उत्पन्न करके 'मध्यम' 'मध्यम' कहते हुए मुझे बुला रहा है। अच्छा, तो देखूँ। (घूमकर और देखकर विस्मय के साथ) अहा, यह पुरुष तो दर्शन

पुरुषः । अयं हि,—

सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो
बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीप्त[1]विश्लिष्टकेशः ।
व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः
सुव्यक्तं राक्षसोजो विपुलबलयुतो लोकवीरस्य पुत्रः ॥ २६ ॥

---

घटोत्कचस्य दर्शनीयत्वं वर्णयति—सिंहास्य इत्यादिना । सिंहास्य'= सिंहमुख, सिंहस्य मृगेन्द्रस्य आस्य मुखम् इव मुख यस्य स, सिंहदंष्ट्रः= व्याघ्रस्य दंष्ट्रा दन्त इव दंष्ट्रा यस्य स, मधुनिभनयनः=मधुनिभे रक्तवर्णत्वात् मधुतुल्ये नयने यस्य स, स्निग्धगम्भीरकण्ठः=स्निग्धो मधुर गम्भीरश्च कण्ठ कण्ठनादो यस्य स, बभ्रुभ्रूः=बभ्रू पिङ्गले भ्रुवौ यस्य स, श्येननासः=गृध्र-नास, श्येनस्य नासा इव नासिका यस्य स, द्विरदपतिहनुः=गजराजस्य हनुरिव हनु यस्य स, दीर्घविश्लिष्टकेशः=दीर्घा विश्लिष्टा विरला प्रकीर्णाश्च केशा कुन्तला यस्य स, 'चिकुर कुन्तलो बाल कच' केश शिरोरुह'—इत्यमर । व्यूढोरा=व्यूढ विस्तीर्णम् उरो वक्ष यस्य स; अपाणिनीयोऽयं प्रयोग । 'उर प्रभृतिभ्य कप्' (पा सू ५ ४.१५१) इत्यनेन कप्प्रत्ययाभाव । वज्रमध्यः=वज्र कुलिश तदिव काठिन्यादिना मध्यभाग यस्य स, गजवृषभगतिः=गजेन्द्रगति, वृषभशब्दोऽत्र श्रेष्ठवाचक, यथा—

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा ।
सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थवाचका ॥

लम्बपीनांसबाहुः—लम्बौ पीनौ पुष्टौ च अंसौ स्कन्धौ बाहू भुजे च यस्य स, विपुलबलयुतः=महद्बलसयुत, राक्षसौज=राक्षस्या जात घोरा-कृतित्वात्, लोकवीरस्य पुत्रः=लोके वीर शूर तस्य जगत्प्रख्यातशूरस्य पुत्र

---

के योग्य है। क्योंकि, यह—

ॐ सिंह के समान मुख वाला, सिंह के समान दाढो वाला, मदिरा के समान [ मादक ] आंखो वाला, चिकने और उन्नत कण्ठ वाला, भूरी भौहो वाला, श्येन पक्षी के समान नाक वाला, गजराज के समान ठोढी वाला, चमकीले और

---

१. दीर्घ-' इति पाठ ।

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः। उच्चैः शब्दापयामि भो भो मध्यम ! शीघ्रमागच्छ।

भीमः—भोः ! प्राप्तोऽस्मि।

घटोत्कचः—न खल्वयं ब्राह्मणवटुः। अहो दर्शनीयोऽयं पुरुषः। य एष—

---

सूनुरस्तीति, सुव्यक्तम्=सुस्पष्टम्। इह बह्वीनामुपमाना ससृष्टिः। स्रग्धरा वृत्तम्। तल्लक्षण तु—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्॥ २६॥

[ घटोत्कच के शरीर की गठन को देखकर भीम इस प्रकार उसका वर्णन प्रस्तुत करते हैं— ]

अन्वय—सिंहास्य, सिंहदंष्ट्र, मधुनिभनयन, स्निग्ध-गम्भीर कण्ठ, बभ्रुभ्रू, श्येननास, द्विरद-पति हनु, दीप्त विश्लिष्ट-केश, व्यूढोरा, वज्रमध्य, गज-वृषभ-गति, लम्ब-पीनांस-बाहु, विपुल बल-युत राक्षसीज, लोकवीरस्य, [ अयम् ] पुत्र सुव्यक्तम्॥ २६॥

पदार्थ—सिंहास्य =सिंह के समान मुख वाला, सिंह-दंष्ट्र =सिंह के समान दाढों वाला; मधु-निभ नयन =मदिरा के समान [ मादक ] आँखों वाला; स्निग्ध-गम्भीर-कण्ठ =चिकने और उन्नत कण्ठ [ अर्थात् ग्रीवा ] वाला, बभ्रु-भ्रू =भूरी भौहों वाला, श्येन-नास =श्येन [ =बाज ] पक्षी के समान [ लम्बी कुछ उठी हुई ] नाक वाला, द्विरदपति-हनु =गजराज के समान ठोढी वाला, दीप्त विश्लिष्ट-केश =चमकीले और बिखरे हुए बालों वाला, व्यूढ उरा =विस्तीर्ण वक्ष वाला, वज्रमध्य =वज्र के समान [कठोर] कटिप्रदेश, गजवृषभ गति =गजराज के समान [ मदमत्त ] चाल वाला;

---

बिखरे बालों वाला, विस्तीर्ण वक्ष वाला, वज्र के समान [ कठोर ] कटि-प्रदेश युक्त, गजराज के समान [ मदमत्त ] चाल वाला, लम्बी भुजाओं और विशाल कन्धों वाला, विपुल शक्ति सम्पन्न [ यह ] अवश्य ही किसी राक्षसी से उत्पन्न जगत् प्रसिद्ध योद्धा का पुत्र है॥ २६॥

घटोत्कच—ब्राह्मण-बालक तो देर कर रहा है। जोर से बुलाऊँ। हे मध्यम, हे मध्यम, शीघ्र आओ।

भीम—ओ, मैं आ गया।

घटोत्कच—यह तो ब्राह्मण बालक नहीं है। अहा, यह पुरुष तो दर्शन के योग्य है। जो, यह—

सिंहाकृतिः कनकतालसमानबाहुः
मध्ये तनुर्गरुडपक्षविलिप्तपक्षः[1]।
विष्णुर्भवेद् विकसिताम्बुजपत्रनेत्रो
नेत्रे ममाहरति बन्धुरिवागतोऽयम् ॥ २७ ॥

---

लम्ब-पीनांस-बाहु =लम्बी भुजाओं और विशाल कन्धों वाला; विपुल-बल-युत =अत्यन्त बलशाली; राक्षसीजः=राक्षसी से उत्पन्न; लोकवीरस्य=जगत् प्रसिद्ध योद्धा का, [ अयम्=यह ] पुत्र =पुत्र है; इति मुव्यक्तम्=यह स्पष्ट हो है ॥ २६ ॥

भीम दृष्ट्वा घटोत्कच स्वमनोभावं प्रकटयति—सिंहादिना । अयं पुरुषः सिंहाकृतिः=मृगेन्द्राकृति, सिंहस्य आकृतिरिव आकारो यस्य स ; कनकताल-समानबाहु =स्वर्णतालवृक्षसदृशबाहु, कनकस्य सुवर्णस्य ताल तालवृक्ष-तत्समानो बाहू भुजे यस्य स ; मध्ये=मध्यभागे, तनुः=कृश.; गरुडपक्षविलिप्त-पक्षः=गरुडपक्षाविव मसृणौ पार्श्वभागौ यस्य स इत्यर्थ । विकसिताम्बुजपत्र-नेत्रः=प्रफुल्लितपद्मदलसदृशलोचन, विकसितस्य अम्बुजस्य पत्रे दले इव नेत्रे यस्य स, किमयम् ?, विष्णुः भवेत्=अच्युत स्यात् ?; मम=घटोत्कचस्य; नेत्रे=चक्षुषी, आगत =आगतमात्रोऽयम्, न तु सम्भाषणादिना परीक्षात ; बन्धु-रिव=आत्मीयजन इव; आहरति=आकर्षयति, अनुराग जनयतीत्यर्थ । यथा किराते—'अमितस्त्व पृथासूनु स्नेहेन परितस्त्वर ।
अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मन ॥ ( ११.८ )
उपमालङ्कार । वसन्ततिलका वृत्तम् ॥ २७ ॥

[ घटोत्कच भीम के रूप का वर्णन इस प्रकार करता है— ]

अन्वय—सिंहाकृति, कनक-ताल समान बाहु, मध्ये, तनु, गरुड-पक्ष-विलिप्त-पक्ष, विकसित-अम्बुज-पत्र नेत्र, अयम्, विष्णु, भवेद् । आगत, बन्धु, इव, [ अयम् ] मम, नेत्रे, आहरति ॥ २७ ॥

---

सिंह के समान आकृति वाले, स्वर्ण के ताड वृक्ष के समान लम्बी भुजाओं वाले, मध्यभाग में कृश, गरुड के पङ्खों के समान स्निग्ध पार्श्व-भाग वाले, और प्रफुल्लित कमल की पङ्खुडियों के समान आँखों वाले यह सम्भवत भगवान् विष्णु हो सकते हैं जो पास आते हुए बन्धु के समान मेरी आंखों को आकृष्ट कर रहे हैं ॥ २७ ॥

---

१ 'विलिप्तवक्षा' इति वा पाठ ।

भो मध्यम ! त्वां खल्वह शब्दापयामि ।

भीमः—अतः खल्वहं प्राप्तः ।

घटोत्कचः—किं भवानपि मध्यमः ?

भीमः—न तावदपरः ।

मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः ।
मध्यमोऽहं क्षितौ[1] भद्र ! भ्रातॄणामपि मध्यमः ॥ २८ ॥

---

पदार्थ—सिंहाकृति =सिंह के समान आकृति वाला कनकताल समान-बाहु =सुवर्ण के ताड के पेड के समान [ लम्बी ] भुजाओ वाला, मध्ये = मध्यभाग मे, तनु =कृश, गरुड-पक्ष विलिप्त-पक्ष =गरुड के पङ्खो के समान चिकने पार्श्वभाग वाला, विकसित अम्बुज पत्र-नेत्र =खिली हुई कमल की पङ्खुडियो के समान आंखो वाला, अयम्=यह, विष्णु भवेत्=[ सम्भवत. ] भगवान् विष्णु हो सकते है । आगतः बन्धु इव-पास आते हुए बन्धु के समान, [अयम्=यह] मम नेत्रे=मेरी आँखो को, आहरति–आकर्षित कर रहा है ॥२७॥

अहमेव सर्वथा मध्यम: नान्य कोऽपि इति प्रतिपादयति भीमसेन –मध्यम इत्यादिना । अहम्=भीमसेन ; अवध्यानाम्=शत्रुभिर्हन्तुम् अशक्याना पाण्डवाना मध्ये मध्यमोऽस्मि इति शेष । पाण्डवाना चावध्यत्व प्रसिद्धम् । उत्सिक्ताना च–शौर्योद्धताना ( उत् + सिच् + क्त ) च मध्ये ! मध्यम =मध्यमपाण्डवोऽहम्; भद्र=हे सौम्य, क्षितौ=पृथिव्याम्, अह मध्यमः=अहमेव मध्यमत्वेन लोके प्रख्यात । भ्रातॄणामपि=युधिष्ठिरादीना मध्येऽपि अहम्, मध्यमः=पञ्चसु पाण्डवेषु मध्ये मध्यम पाण्डवो भीमसेन इत्यर्थं । अनुष्टुप् वृत्तम् ॥ २८ ॥

[ भीम अपना परिचय इस प्रकार देते है ]—

अन्वय—हे भद्र ! अवध्यानाम्, [ पाण्डवानाम्, मध्ये ] अहम्, मध्यम । च उत्सिक्तानाम्, [ अहम् ] मध्यम । क्षितौ, अहम्, मध्यम । भ्रातॄणाम्, अपि, [ अहम् एव ] मध्यम ॥ २८ ॥

---

हे मध्यम, मैं तो तुम्हे ही बुला रहा हूं ।

भीम—इसीलिए तो मैं आ गया ।

घटोत्कच—क्या आप भी 'मध्यम' हैं ।

भीम—फिर दूसरा तो नही ही है, क्योकि—

---

१ 'क्षिते' इति पाठ ।

घटोत्कच —भवितव्यम् ।
भीम.—अपि च,

मध्यम पञ्चभूताना पार्थिवानां च मध्यम ।
भवे[1] च मध्यमो लोके सर्वकार्येषु मध्यम ॥ २९ ॥

पदार्थ—हे भद्र=हे सौम्य ! अवध्यानाम्=शत्रुओ से न मारे जाने वाले, [पाण्डवानाम्, मध्ये=पाण्डवो के बीच मे] अहम्=मैं, मध्यम=मध्यम [पाण्डव] हूँ । च=और; उत्सिक्तानाम्=निष्कासितो के अथवा शौर्य मे गर्व करने वालो के बीच म [अहम्=मैं] मध्यम हूँ । क्षितौ=मध्यमलोक रूप इस पृथ्वी पर; अहम्=मैं; मध्यम=मध्यम [लोक का मनुष्य] हूँ । भ्रातॄणाम्=भाइयो के बीच, अपि=भी, [अहम् एव=मैं ही] मध्यम=मझला हूँ ॥ २८ ॥

आत्मनो मध्यमत्व पुन समर्थयति भीमसेन—मध्यम इत्यादिना । अहम्, पञ्चभूतानाम्=पृथिव्यप्तेजोवाय्वाकाशाना मध्ये, मध्यम.=पञ्चभूतेषु वायोर्मध्यमस्थानीयत्वेन तत्पुत्रोऽहमपि मध्यम । पार्थिवाना च=तथा पृथ्वीश्वराणा मम भ्रातॄणाम् अह मध्यम । अहम् लोके=अस्मिन् मृत्युलोके, भवे=भवो नाम मातृकुक्षेर्निर्गम तत्र मध्यम जन्मनाऽपि मध्यमोऽहमिति भाव । तथा, सर्वकार्येषु मध्यम =सर्वेषां जनाना कार्येषु, अह मध्यम =मध्यस्थः । एवमत्र भीमसेनस्य मध्यमत्वम् अष्टभि प्रकारै प्रतिपादितम् । अनुष्टुप् वृत्तम् ॥ २९ ॥

[अपनी उक्ति का स्पष्टीकरण करते हुए भीम कहते हैं]—

अन्वय—पञ्चभूताना [मध्ये अहम्] मध्यम ; च पार्थिवाना [मध्ये अहम्] मध्यम , च लोके भवे [अहम्] मध्यम , सर्वकार्येषु [अहम्] मध्यम ॥ २९ ॥

हे सौम्य, शत्रुओ से अवध्य [पाण्डवो मे] मैं मध्यम [पाण्डव] हूँ, और शौर्य मे गर्व करने वाले [पाण्डवो] के बीच मैं मध्यम [पाण्डव] हूँ । [मध्यमलोक रूप] इस पृथ्वी पर मैं मध्यम [लोक का मनुष्य] हूँ, [और अपने] भाइयो के बीच भी मैं मध्यम [मझला भाई] हूँ ॥ २८ ॥

घटोत्कच—होगे ।

भीम—और भी—

[पृथ्वी, अप, तेज, वायु व आकाश इन] पञ्चभूतो मे मध्यम [पृथ्वी व आकाश के मध्यगत वायु का पुत्र] हूँ, और भाई राजाओ के मध्य मैं मध्यम हूँ और ससार मे उत्पन्न होने वाले [अपने भाइयो] के बीच मैं [जन्मना] मध्यम हूँ, और सभी मानवो के कार्यों मे मैं मध्यम [मध्यस्थ] रहने वाला हूँ ॥ २९ ॥

[1] 'मये इति वा पाठ ।

वृद्धः—

मध्यमस्त्विति सम्प्रोक्ते नूनं पाण्डवमध्यम ।
अस्मान् मोक्तुमिहायातो [1]दर्पान्मृत्योरिवोत्थित ॥ ३० ॥

पदार्थ—पञ्चभूतानाम्=[पृथ्वी, अप, तेज, वायु और आकाश इन] पञ्चभूतो में [ पृथ्वी और आकाश के मध्य रहने वाली वायु का पुत्र ] [ अहम्=मैं ], मध्यम =मध्यम हूँ । च =और, पार्थिवानाम्=भाई राजाओ के [मध्ये अहम्=मध्य मैं ], मध्यम =मध्यम, च लोके भवे=और संसार में उत्पन्न होने वाले [अपने भाइयो] के बीच [अहम्=मैं] मध्यम=मध्यम हूँ । सर्वकार्येपु=सभी [मनुष्यो] के कार्यों मे, [अहम्=मैं], मध्यम =मध्यस्थ रहने वाला हूँ ॥२९॥

विमर्श—प्रस्तुत श्लोक और इसके पहले श्लोक मे चार-चार वार 'मध्यम' शब्द का प्रयोग महाकवि भास ने मात्र उस पर बल देने के लिए किया है। विभिन्न स्थलो मे इसका अर्थ भी विभिन्न प्रकार से किया जा सकता है। फिर भी सक्षेप मे मध्यम का अर्थ सभी के बीच 'प्रमुखता' का द्योतक है। एक ही शब्द की पुनरुक्ति कवि की अपनी एक कला है, जिसे उन्होने अन्य स्थलो मे भी किया है जैसे बाइसवें श्लोक मे 'परिष्वज' का प्रयोग और अन्तिम श्लोक मे 'प्रभव' शब्द का प्रयोग विभिन्न अर्थों मे कई बार किया गया है।

भीमेनात्मनो मध्यमत्वकथनस्याभिप्रायम् अभिज्ञाय वृद्ध. स्वगतमाह—मध्यम इत्यादिना । मध्यमस्तु इति सम्प्रोक्ते=सम्यगुच्चारिते सति, नूनम्=निश्चितम्, पाण्डवमध्यम.=पाण्डवेपु मध्यमत्वेन प्रसिद्ध भीमोऽयम् । राक्षसभयाद् अस्मान्, मोक्तुम्=मोचयितुम्, इह=अस्मिन् स्थाने, मृत्यो.=अन्तकस्य, दर्पात्=गर्वात्; उत्थित=उद्युक्त इव, आयात=आगत । उत्प्रेक्षालकार । अनुष्टुप् वृत्तम् ॥ ३० ॥

[ ब्राह्मण अपने मन मे विचार करता है कि ]—

अन्वय—[अहम्] मध्यम , इति, सम्प्रोक्ते, नूनम्, पाण्डवमध्यम । दर्पाद्, मृत्यो , इव अस्मात् [ राक्षसात् ], मोक्तुम्, उत्थित , इह, आयात ॥ ३० ॥

वृद्ध—

'मैं मध्यम हूँ'—ऐसा कहने से निश्चित रूप से [ यह ] पाण्डवो मे मध्यम [ भीम ] होंगे । मृत्यु के गर्वस्वरूप इस राक्षस से बचाने के लिए मानो उद्यत हुए से यहाँ आये हैं ॥ ३० ॥

---

१. 'दर्पान्मृत्युरिव' इति वा पाठ.।

( प्रविश्य )

मध्यमः—

अस्यामाचम्य पद्मिन्यां परलोकेषु दुर्लभम् ।
आत्मनैवात्मनो दत्तं पद्मपत्रोज्ज्वलं जलम् ॥ ३१ ॥

---

पदार्थ—[अहम्=मैं] मध्यमः=मध्यम हूँ, इति=ऐसा; सम्प्रोक्ते=कहने से, नूनम्=निश्चित रूप से, [ अयम्=यह ] पाण्डवमध्यमः=पाण्डवों में मध्यम [ भीम ] होंगे; दर्पाद् मृत्योः=मृत्यु के गर्व रूपी, अस्मात् [ राक्षसात् ]=इस [ राक्षस ] से; मोक्तुम्=बचाने के लिए; उत्थितः, इव=मानो उद्युक्त होकर; इह=यहाँ, आगतः=आये हैं ॥ ३० ॥

पिपासाशान्त्यर्थं जलाशयं समुपगतस्य मध्यमपुत्रस्य वचनम्—अस्यामित्यादि । अस्याम्=पुरोऽवस्थितायाम्; पद्मिन्याम्=सरसि, पद्मानि अस्या सन्ति इति पद्मिनी तस्याम्; परलोकेषु=स्वर्गादिषु लोकेषु, दुर्लभम्=दुःखेन लब्धुं योग्यम्; अप्राप्यमित्यर्थः । पद्मपत्रोज्ज्वलम्=कमलदलमिव उज्ज्वलम् अर्थात् निर्मलम्, जलम्=सलिलम्, आचम्य=पीत्वा, आत्मनैव=स्वेनैव, आत्मनः=स्वस्य, दत्तम्=अर्पितम् । 'सन्तानविहीनः जीवन्नेवात्मनः श्राद्धं कुर्याद्' इति बौधायनः । अनुष्टुप् वृत्तम् ॥ ३१ ॥

अन्वय—परलोकेषु, दुर्लभम्, अस्याम्, पद्मिन्याम् पद्म-पत्र-उज्ज्वलम्, जलम्, आचम्य, आत्मनैव, आत्मनः दत्तम् ॥ ३१ ॥

पदार्थ—अस्याम्=इस, परलोकेषु दुर्लभम्=परलोक में अप्राप्य, पद्मिन्याम्=कमलों से युक्त सरोवर के, पद्म-पत्र-उज्ज्वलम्=कमल की पङ्खुड़ियों के समान अर्थात् स्वच्छ, जलम्=जल को, आचम्य=आचमन करके, आत्मनैव=अपने से ही, आत्मनः=अपने को, दत्तम्=[ जल ] दे दिया है, क्योंकि पुत्र-विहीन होने से तर्पण कार्य की आशा नहीं है ॥ ३१ ॥

---

( प्रवेश करके )

मध्यम—

परलोक में अप्राप्य इस कमलों से युक्त सरोवर के कमल की पङ्खुड़ियों के समान अर्थात् स्वच्छ जल का आचमन करके अपने से ही अपने को ( जल ) दे दिया है [ क्योंकि पुत्रविहीन होने से तर्पण की आशा नहीं है ] ॥ ३१ ॥

( उपगम्य ) भोः पुरुष ! प्राप्तोऽस्मि ।

घटोत्कचः—[1]भवानिदानीं खल्वसि मध्यमः । मध्यम ! इत इतः ।

वृद्धः—( भीममुपगम्य ) भो मध्यम ! परित्रायस्व ब्राह्मणकुलम् ।

भीमः—न भेतव्य, न भेतव्यम् । मध्यमोऽहमभिवादये ।

वृद्धः—वायुरिव दीर्घायुर्भव ।

भीमः—अनुगृहीतोऽस्मि । कुतो भयमार्यस्य ।

वृद्धः—श्रूयताम् । अहं खलु कुरुराजेन युधिष्ठिरेणाधिष्ठितपूर्वे कुरुजाङ्गले यूपग्रामवास्तव्यो माठरसगोत्रश्च कल्पशाखाध्वर्युः केशवदासो नाम ब्राह्मणः । तस्य ममोत्तरस्या दिश्युद्यामकग्राम-वासी मातुल कौशिकसगोत्रो यज्ञबन्धुर्नामास्ति । तस्य पुत्रोप-

---

वायुरिव दीर्घायुर्भव = कल्पान्तकालजीवी भव, वायुर्हि प्राणाधिष्ठान-देवता । कुरुजाङ्गले = कुरुक्षेत्रे । माठरसगोत्र [2]—माठरेण ऋषिविशेषेण समान गोत्र यस्य स । कल्पशाखाध्वर्यु —कल्पो यज्ञविधानम्, तत्प्रतिपादिका शाखा कल्पशाखा, तस्या अध्वर्यु तदनुसरणपरो तदुक्तप्रयोगानुष्ठाननिपुण श्रौतकर्मसु ऋत्विग्विशेष इत्यर्थ. ।

---

( पास जाकर ) हे पुरुष, मैं आ गया ।

घटोत्कच—वस्तुत यहाँ तुम्ही मध्यम हो । हे मध्यम, इधर आओ, इधर आओ ।

वृद्ध—( भीमसेन के पास जाकर ) हे मध्यम, इस ब्राह्मणकुल का परित्राण करो ।

भीम—डरना नही चाहिए, डरना नही चाहिए । मैं मध्यम आपको प्रणाम करता हूँ ।

वृद्ध—वायु के समान दीर्घायु होवे ।

भीम—मैं अनुगृहीत हूँ । आपके भय का क्या कारण है ?

वृद्ध—सुनिए, मैं कुरुराज युधिष्ठिर से पहले शासित कुरुजाङ्गल [ =कुरुक्षेत्र ] में यूप ग्राम का रहने वाला माठरगोत्रीय कल्पशाखीय अध्वर्यु केशवदास नामक ब्राह्मण हूँ । उस ग्राम के उत्तर दिशा मे उद्यामक ग्राम वासी

---

१ 'भ्रातवान् इदानी खल्वसि' इति वा पाठ ।

२. तु० 'रैभ्यसगोत्र' स्वप्न० ६ पृ० २०७ । द्र० पा० महाभाष्य ।

**सीता**—ह विपरीओ खु धम्मो, ज जीवदि खु अअ पापरक्खसो।
[ह, विपरीत खलु धर्म, यद् जीवति खल्वय पापराक्षस ।]

**रावणः**—ननु देवि !

**सीता**—सत्तो सि। [शप्तोऽसि]

**रावण**—हहह, अहो पतिव्रतायास्तेज !

देवा सेन्द्रादयो भग्ना दानवाश्च मया रणे।
सोऽह मोह गतोऽस्म्यद्य सीतायास्त्रिभिरक्षरै ॥ १८ ॥

(नेपथ्ये)

---

हमिति—ह=खेदे ! विपरीत =विरुद्ध, पापराक्षस =पाप पापयुक्त चासौ राक्षस निशिचर, रावण इत्यर्थ ।

अन्वय —सेन्द्रादय देवा दानवा च मया रणे भग्ना । स अहम् अद्य सीताया त्रिभि अक्षरै मोह गत अस्मि।

देवा इति—सेन्द्रादय =इन्द्रादिभि सह, देवा =सुरा, दानवा = दैत्याश्च, मया=रावणेन, रणे=युद्धे, भग्ना =पराजिता, स =प्रसिद्ध, अह=रावण, अद्य=अस्मिन्दिवसे, सीताया =जानक्या, त्रिभि = त्रिसङ्ख्यकै, अक्षरै =वर्णै, 'शप्तोसि' इत्यात्मकै, मोह=मुग्धताम्, गत = प्राप्त, अस्मि। अनुष्टुप्छन्द ।

---

सीता—ओह ! धर्म भी बडा उल्टा है, जो पापी राक्षस (अभी) जी रहा है।

रावण—हे देवि !

सीता—(मेरे द्वारा) शाप दे दिये जाओगे।

रावण—ओह ! पतिव्रता का तेज (आश्चर्यजनक) है।

सम्पूर्ण इन्द्र इत्यादि देवता तथा राक्षस मेरे द्वारा युद्ध मे पराजित कर दिये गये, वही मैं आज सीता के (शप्तोऽसि—इन) तीन अक्षरो के द्वारा मुग्ध हो रहा हूँ।

[नेपथ्य मे]

जयतु देव । जयतु लङ्केश्वर । जयतु स्वामी । जयतु महाराज दश नाडिका पूर्णा । अतिक्रामति स्नानवेला । इत इतो महाराज ।

(निष्क्रान्तो सपरिवारो रावण)

हनूमान्—हन्त निर्गतो रावण, सुप्ताश्च राक्षसस्त्रिय । अयं कालो देवीमुपसर्पितुम् । (कोटरादवरुह्य) जयत्वविधवा ।

प्रेषितोऽहं नरेन्द्रेण रामेण विदितात्मना ।
त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा ॥ १९ ॥

---

जयत्विति—लङ्केश्वर =लङ्केश रावण नाडिका=घटिका, पूर्णा = समाप्ता, स्नानवेला=स्नानसमय, अतिक्रामति=अत्येति ।

हन्तेति—हन्त=खेदे । निर्गत =निर्यात सुप्ता =शयिता, राक्षसस्त्रिय =राक्षसानामसुराणा स्त्रिय नार्य, अयम्=एष, काल —समय, देवी=सीताम्, उपसर्पितु =उपयातुम् अविधवा=सौभाग्यवती ।

अन्वय —विदितात्मना त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा नरेन्द्रेण रामेण अहं प्रेषित ।

प्रेषित इति—विदितात्मना=ज्ञातधृति, त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा=त्वयि सीताया गत स्थित य स्नेह प्रणय तस्मात् य सन्ताप, दु ख तेन विक्लवीकृत विह्वलीकृत चेत मन यस्य तेन, नरेन्द्रेण=राज्ञा रामेण=राघवेण प्रेषित अस्मि=प्रहित अस्मि । अनुष्टुपछन्द ।

---

देव विजयी होवें, लङ्केश्वर विजयी होवें, स्वामी विजयी होवें, महाराज विजयी होवें । दस बज गया । स्नान का समय बीत रहा है । महाराज इधर, इधर से (चलिए) ।

( सपरिवार रावण निकल जाता है )

हनुमान्—अरे । रावण निकल गया और राक्षसों की स्त्रियाँ सो गयी । देवी (सीता) के समीप चलने का यह (उचित) समय है । (कोटर से उतर कर) सुहागिनी (आप) की जय हो ।

आप (सीता) के स्नेह के सन्ताप से व्याकुल हृदय वाले आत्मज्ञ राजा राम के द्वारा मैं भेजा गया हूँ ।

घटोत्कचः—अथ किम् । राहुरेव ।

भीम.—आ —

निवृत्तव्यवहारोऽस्य सदारस्तनयैः सह ।
सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः ॥ ३४ ॥

---

कीर्णस्य व्याप्तस्य, पत्नीकान्तप्रभस्य च=पत्नी कान्तप्रभेव मनोहरा ज्योत्स्नेव यस्य तस्य; वृद्धस्य-स्थविरस्य, विप्रचन्द्रस्य=विप्रश्चन्द्र इव विप्रचन्द्र तस्य ब्राह्मणेन्दो, राहुरिव[1]=चन्द्रग्रसनशीला ग्रह इव, 'तमस्तु राहु स्वर्भानु. सैंहिकेयो विधुन्तुद ' इत्यमर । उत्थितः=आगतः । सावयवोपमालङ्कार. । अनुष्टुप् वृत्तम् ॥ ३३ ॥

[ भीम वृद्ध ब्राह्मण की स्थिति इस प्रकार प्रकट करते है ]—

अन्वय—पुत्र-नक्षत्र-कीर्णस्य, च, पत्नीकान्त प्रभस्य, वृद्धस्य, विप्र-चन्द्रस्य, भवान्, राहु , इव, उत्थित. ॥ ३३ ॥

पदार्थ—पुत्र-नक्षत्र कीर्णस्य=नक्षत्र के समान पुत्रो से, च=और; पत्नी-कान्त-प्रभस्य=मनोहर ज्योत्स्ना के समान पत्नी से परिवृत, वृद्धस्य= वृद्ध रूपी इस, विप्र-चन्द्रस्य=ब्राह्मण चन्द्र के लिए; भवान्=आप, राहु· इव=राहु के समान; [ किं ] उत्थित =[ ग्रसने को क्यो ] उद्यत हैं ॥३३॥

भीम घटोत्कच वारयति–निवृत्तेत्यादिना । निवृत्तव्यवहार.=व्यवहाराद् निवृत्त· ( प० तत्पु० ), राजदन्तादित्वाद् साधु, कार्यकारित्वशक्तिक्षयाद् अपगतः व्यवहार ऐहिकव्यापारो यस्य स·, सर्वापराधे अवध्यत्वात्= सर्वविधापराधप्रयोगेऽपि वधानर्हत्वाद्, यथाह मनु —

---

नक्षत्र के समान पुत्रो से घिरे हुए और मनोहर ज्योत्स्ना के समान पत्नी से परिवृत वृद्धरूपी इस विप्र-चन्द्र के लिए आप राहु के समान [ ग्रसने को क्यों ] उद्यत हैं ? ॥ ३३ ॥

घटोत्कच—और क्या ? [ मैं राहु के समान नही किन्तु ] राहु ही हूँ ।

भीम—आह,

---

१. ( i ) तु० 'राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते'–दूत० ७ ।
( ii ) 'किं द्रष्टव्य शशाङ्कोऽयं राहोर्वदनमण्डले' बालचरित १.११ ।
( iii ) 'आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखम्' मालती ९.३९।

घटोत्कच.—न मुच्यते ।

भीम —(आत्मगतम्) भोः ! कस्य पुत्रेणानेन भवितव्यम् ।

भ्रातॄणां मम सर्वेषां कोऽयं भो ! गुणतस्कर. ।
दृष्ट्वैतद् बालशौण्डीर्यं सौभद्रस्य स्मराम्यहम् ॥ ३५ ॥

'न जातु ब्राह्मण हन्यात् सर्वपापेष्वपि स्थितम् ।' ( ८. ३८० ) सदार.= सपत्नीक , तनयैः=पुत्रै सह, अयम्=पुरोऽस्यमान., द्विजसत्तमः=द्विजेषु विप्रेषु सत्तम अतिप्रशस्त. ब्राह्मणश्रेष्ठ, मुच्यताम्=परित्यज्यताम् । अनुष्टुप् वृत्तम् ॥ ३४ ॥

[ घटोत्कच के यह कहने पर कि 'हाँ' मैं राहु ही हूँ''' भीम उसे इस प्रकार समझाते हैं ]—

अन्वय—निवृत्त-व्यवहारः, सर्वापराधे, अवध्यत्वात्, सदार , तनयैः , सह, अयम्, द्विजसत्तम, मुच्यताम् ॥ ३४ ॥

पदार्थ—निवृत्तव्यवहार =[ वृद्ध होने के कारण ] सांसारिक कार्यों से जो निवृत्त हो चुका है, सर्वापराधे=दोषों का समुदाय भी विद्यमान होने पर; अवध्यत्वात्=ब्राह्मण अवध्य होने से, सदार =स्त्री के सहित; तनयैः =पुत्रों के साथ, अयम्=इस; द्विजसत्तम =ब्राह्मणश्रेष्ठ को; मुच्यताम्=छोड दो ॥ ३४ ॥

विमर्श—मनु के अनुसार बहुत पापी भी होने पर ब्राह्मण अवध्य है। उनके मत से उसे दूसरे देश मे छोड देना चाहिए । ( मनु० ८ ३८० ) ।

मया वारितोऽपि अयमेव दृढमकल्प इति कस्यचित् पाण्डवस्यैव पुत्र इत्याशङ्क्य भीमस्य स्वगतोक्ति.—भ्रातॄणामित्यादिना । भोः इति विस्मये । मम=भीमस्य; सर्वेषां भ्रातॄणाम्=युधिष्ठिरादीना सर्वेषा बान्धवानाम्, गुणतस्करः=गुणचोर , गुणानुकारीत्यर्थ , अयम्=पुरोवर्ती पुरुष , कः=कोऽसावित्यर्थ । अहम्, एतद्बालशौण्डीर्यम्=एतस्य सन्निहितस्य बालस्य शौण्डीर्यम् औद्धत्य दृष्ट्वा, सौभद्रस्य=कृष्णभगिन्या सुभद्राया अपत्यं पुमान्

दोषों का सकुल विद्यमान रहने पर भी ब्राह्मण के अवध्य होने से, स्त्री व पुत्रों के सहित इस ब्राह्मणश्रेष्ठ को छोड दो ॥ ३४ ॥

घटोत्कच—मैं नहीं छोडता ।

भीम—( मन ही मन ) ओह, यह किसका पुत्र हो सकता है ?

( प्रकाशम् ) भोः पुरुष ! मुच्यताम् ।

घटोत्कचः—न मुच्यते ।

मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता ।
न मुच्यते तथा ह्येष गृहीतो मातुराज्ञया ॥ ३६ ॥

---

सौभद्रस्तस्य अर्जुनपुत्रस्य अभिमन्यो , स्मरामि = स्मरण करोमि । 'अधीगर्थदयेशां कर्मणि' (पा० सू० २ ३ ५२) इत्यनेन शेषत्वविवक्षया कर्मणि षष्ठी । अस्य गर्वोक्ति अभिमन्युसदृश इति भाव । स्मरणालङ्कार । अनुष्टुप् वृत्तम् ॥

[ घटोत्कच का औद्धत्य देखकर भीम अपनी सम्भावना इस प्रकार प्रकट करते हैं—]

अन्वय—भो !, मम, सर्वेषा, भ्रातृणाम्, गुण-तस्कर , अयम्, क ? एतद् बाल-शौण्डीर्यम्, दृष्ट्वा, अहम्, सौभद्रस्य, स्मरामि ॥ ३५ ॥

पदार्थ—भो !, मम = अरे ! मेरे, सर्वेषाम् = सभी, भ्रातृणाम् = भाइयो के; गुण तस्कर = गुणो को चुराने वाला अयम्-यह, क = कौन है ? एतद् = इसके, बालशौण्डीर्यम् = बालकोचित औद्धत्य को, दृष्ट्वा = देखकर, अहम् = मुझे, सौभद्रस्य-सुभद्रा के पुत्र अभिमन्यु का; स्मरामि-स्मरण आ रहा है ॥३५॥

घटोत्कच आत्मन औद्धत्य प्रदर्शयन्नाह—मुच्यतामित्यादिना । मे = मम घटोत्कचस्य, पिता-जनक , अपि, यदि = चेत्, विस्रब्धम्-विश्वासयुक्त यथा भवति तथा, मुच्यताम् = परित्यज्यताम्, इति ब्रवीति = इत्य वदति, तथापि, न मुच्यते = मया न परित्यज्यते । तथा हि = यत , एष -ब्राह्मणपुत्र. मातु. आज्ञया-जनन्या निदेशात्; गृहीत -मया परिगृहीत । अनुष्टुप् वृत्तम् ॥३६॥

अन्वय—यदि मे पिता 'विश्रब्ध मुच्यताम्' इति ब्रवीति, तथा न मुच्यते । हि, एष , मातु , आज्ञया, गृहीत ॥ ३६ ॥

---

अर मेरे सभी भाइयो के गुणो को चुराने वाला यह कौन है ? इसके बालोचित औद्धत्य को देखकर मुझे सुभद्रा के पुत्र अभिमन्यु का स्मरण आ रहा है ॥३५॥

( प्रकट ) हे पुरुष, छोड दो ।

घटोत्कच—मैं नही छोडता ।

यदि मेरे पिता भी विश्वस्त रूप से 'छोड दो'-ऐसा कहें, फिर भी मैं नही छोडूँगा, क्योकि यह [मध्यम पुत्र मेरी] माता की आज्ञा से गृहीत है ॥ ३६ ॥

भीम —( सहर्षमात्मगतम् ) एवम्, हिडिम्बाया. पुत्रोऽयम् । सदृशो ह्यस्य गर्वः ।

रूपं सत्त्वं बलं चैव पितृभि सदृशं बहु ।
प्रजासु वीतकारुण्यं मनश्चैवास्य कीदृशम् ॥ ३९ ॥

( प्रकाशम् ) भो पुरुष ! मुच्यताम् ।

घटोत्कच —न मुच्यते ।

भीम —भो ब्राह्मण ! गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः ।

द्वितीय —मा मा भवानेवम् ।

---

पाण्डवकुलोत्पन्नोऽपि घटोत्कच कथमेव निर्दय इत्याह भीमसेन —रूपमित्यादिना । अस्य=घटोत्कचस्य, रूपम्=आकृति ; सत्त्वम्=पराक्रम ; बलम्=सामर्थ्यम्, पितृभि =युधिष्ठिरादिभि जनकैं ; बहु=अत्यर्थम्; सदृशम्=तुल्यम्, किन्तु, प्रजासु=प्रजाजनेषु, वीतकारुण्यम्=निर्दयम्, वीत विगत कारुण्य यस्मात् ( बहु० ) तत्, मनः=चित्तम्, कीदृशम्=कथम् ? अस्य मन कुत्सित न तु पितृसदृशमित्यर्थं । अनुष्टुप् वृत्तम् ॥ ३९ ॥

[ घटोत्कच के विषय मे भीम मन मे यह सोचता है कि ]—

अन्वय—अस्य, रूपम्, सत्त्वम्, च, बलम्, बहु, पितृभि , एव, सदृशम्, [ किन्तु ] प्रजासु, वीतकारुण्यम्, मन कीदृशम् ॥ ३९ ॥

पदार्थ —अस्य=इस [ लडके ] का, रूपम्, सत्त्वम्=रूप, पराक्रम, च बलम्=और शक्ति, बहु=सभी कुछ; पितृभि , एव=माता पिता के ही; सदृशम्=तुल्य है [ किन्तु ], प्रजासु=प्राणियो के प्रति; वीत-कारुण्यम्=दयाविहीन, मन =हृदय वाला, कीदृशम् [ जातम् ] कैसे हो गया ॥ ३९ ॥

---

भीम—( प्रसन्नता के साथ मन ही मन ) तो यह हिडिम्बा का पुत्र है । तब तो इसका गर्व अनुरूप ही है । क्योकि—

इसका रूप, पराक्रम और शक्ति सभी कुछ माता-पिता के ही सदृश है (किन्तु) प्राणियो के प्रति दयाविहीन हृदय वाला यह कैसे हो गया ? ॥ ३९ ॥

( प्रकट ) हे पुरुष, छोड दो ।

घटोत्कच—मैं नही छोडता ।

भीम—हे ब्राह्मण, अपने पुत्र को ग्रहण करो । मैं ही इसका अनुगमन करूँगा ।

द्वितीय ( पुत्र )—नही, नही, आप ऐसा न करें ।

त्यक्ता प्रागेव मे प्राणा गुरुप्राणेष्वपेक्षया ।
युवा रूपगुणोपेतो भवांस्तिष्ठतु भूतले ॥ ४० ॥

भीम—आर्य ! मा मैवम् । क्षत्रियकुलोत्पन्नोऽहम् । पूज्यतम खलु ब्राह्मण । तस्मान्मच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

घटोत्कच—[ आत्मगतम् ] एवम्, क्षत्रियोऽयम् । तेन गर्व । भवतु, इममेव हत्वा नेष्यामि । [ प्रकाशम् ] अथ केनाय वारितः ?

भीमः—मया ।

---

द्विजस्य मध्यम पुत्र भीम वारयन्नाह—त्यक्ता इत्यादिना । गुरुप्राणेषु=पूज्यानां जीवनेषु, अपेक्षया, मे=मम, प्राणाः=असव , प्रागेव=पूर्वमेव, त्यक्ताः=विमुक्ता , [ अत ] युवा=तरुण , भवान्-भीम , रूपगुणोपेत—रूपेण सौन्दर्येण तथा दयादिना गुणेन उपत युक्त , भूतले-पृथिव्याम्, तिष्ठतु=दीर्घकाल यावत् प्राणैर्युक्तोऽवतिष्ठतु । अनुष्टुप् वृत्तम् ॥ ४० ॥

अन्वय—गुरु प्राणेषु, अपेक्षया, मे, प्राणा , प्राक्, एव त्यक्ता । [ अत ] युवा, भवान्, रूप गुणोपेत , भूतले, तिष्ठतु ॥ ४० ॥

पदार्थ—गुरु प्राणेषु=गुरुओ के प्राणो की, अपेक्षया=अपक्षा से, मे, प्राणा =अपने प्राणो का; प्राक् एव=पहले ही से, त्यक्ता.=मैंन त्याग किया है । [ अत ] युवा भवान्=युवक आप, रूप-गुणोपेत =रूप और गुण से युक्त होकर, भूतले=पृथ्वी पर, तिष्ठतु=रहे ॥ ४० ॥

---

गुरु जनो के प्राणो के बदले म अपने प्राणो का पहले से ही मैंने त्याग किया है । अत रूप एव गुणो से सम्पन्न युवा आप पृथ्वी पर रहे ॥ ४० ॥

भीम—आर्य, ऐसा न कहे । मैं क्षत्रिय कुल मे उत्पन्न हूँ और ब्राह्मण तो सबसे पूज्य होते हैं । अत मैं अपने ही शरीर से ब्राह्मण शरीर को बदलने का इच्छुक हूँ ।

घटोत्कच—( मन ही मन ) तो यह क्षत्रिय है । इसीलिए इसे इतना दम्भ है । ठीक है, मैं इसी को मारकर ले जाऊँगा । ( प्रकट ) तो यह किसके द्वारा रोका गया है ?

भीम—मेरे द्वारा ।

घटोत्कचः—किं त्वया ?

भीमः—अथ किम् ।

घटोत्कच —तेन हि भवानेवागच्छतु ।

भीम —एवम्, अतिवीर्यबल नानुगच्छामि। यदि ते शक्तिरस्ति, बलात्कारेण मा नय ।

घटोत्कचः—किं मा प्रत्यभिजानीते भवान् ?

भीमः—मत्पुत्र इति जाने ।

घटोत्कच —कथ कथ तव पुत्रोऽहम् ?

भीमः—कथं रुष्यति, मर्षयतु, मर्षयतु भवान्। सर्वा प्रजा क्षत्रियाणा पुत्रशब्देनाभिधीयन्ते । अत एव मयाभिहितम् ।

घटोत्कचः—भीतानामायुध गृहीतम् ।

भीम.—

---

भीतानाम् आयुधम्=मयणायाुरोधोऽय भावमेव सूचयति । अत एव भयार्तानां पन्था ।

भीम सगर्व मयस्य स्वरूप पृच्छति—शपामीत्यादिना । हे भद्र=हे सौम्य, अहं भीम , सत्येन, शपामि=शपथ करोमि, भयम्[1]=मयनामक

---

घटोत्कच—क्या, तुम्हारे द्वारा ?

भीम—और क्या ?

घटोत्कच—तो आप ही चलिए ।

भीम—ऐसा, बलिष्ठ और पराक्रमी मैं इस प्रकार अनुगमन नहीं करूँगा। यदि तुम्हारे पास शक्ति हो तो मुझे बलपूर्वक ले चलो ।

घटोत्कच—आप नहीं जानते कि मैं कौन हूँ ?

भीम—हाँ, मैं जानता हूँ कि 'तुम मेरे बेटे हो ।'

घटोत्कच—कैसे, मैं आपका पुत्र कैसे ?

भीम—क्यों रुष्ट होते हैं ? हमें क्षमा करें, क्षमा करें, क्योंकि सारी प्रजा क्षत्रियों द्वारा 'पुत्र' शब्द से ही अभिहित होती है। इसीलिए मेरे द्वारा ऐसा कहा गया ।

घटोत्कच—आपने तो डरपोक लोगों का आयुध ग्रहण कर लिया ।

---

१. तु० 'किमेतद् भो भय नाम भवतोऽद्य मया श्रुतम्'—बाल० ३ ८ ।

शपामि सत्येन भयं न जाने
ज्ञातुं तदिच्छामि भवत्समीपे ।
किंरूपमेतद् वद भद्र ! तस्य
गुणागुणज्ञः सदृशं प्रपत्स्ये ॥ ४१ ॥

घटोत्कचः—एष ते भयमुपदिशामि, गृह्यतामायुधम् ।
भीम.—आयुधमिति । गृहीतमेतत् ।
घटोत्कच·—कथमिव ।

---

पदार्थ, न जाने=कीदृग् तदिति न जानामि। तद्=भयम्, भवत्समीपे=त्वदन्तिके, ज्ञातुम्=अवगन्तुम्, इच्छामि=गच्छामि, एतद्=भयस्य, किं रूपम्—किमाकारं च, वद=ब्रूहि, हि, तस्य=भयस्य, गुणागुणज्ञः=गुणदोषाभिज्ञ, भूत्वा, सदृशम्=तदनुरूपम्, प्रपत्स्ये=करिष्यामि। उपजाति वृत्तम् ॥ ४१ ॥

[घटोत्कच के व्यवसाय को जानने की इच्छा से भीम इस प्रकार पूछते हैं]—

अन्वय—हे भद्र !, [ अहम् ], सत्येन, शपामि, [ यत् ], भयम् न जाने, तत्, ज्ञातुम्, भवत्, समीपे, इच्छामि। एतत् रूपम्, किम् ? वद। तस्य, गुणागुणज्ञ, सदृशम्, प्रपत्स्ये ॥ ४१ ॥

पदार्थ—हे भद्र=हे सौम्य !' [अहम्=मैं] सत्येन=सचमुच, शपामि=शपथ खाता हूँ। [ यत्=कि ], भयम्=भय को न जाने=मैं नहीं जानता हूँ। तत्=उसीको, ज्ञातुम्=जानने के लिए, भवत् समीपे=आप के समीप; इच्छामि=इच्छा कर रहा हूँ। एतत्=इसका; रूपम्=रूप, किम्=क्या है ? वद=कहो, तस्य=उसके, गुणागुणज्ञ=गुणों और अवगुणों को जानने के बाद; सदृशम्, प्रपत्स्ये=जैसा होगा वैसा करेंगे ॥ ४१ ॥

---

भीम—हे सौम्य, मैं सचमुच शपथ खाता हूँ कि भय को मैं नहीं जानता। अत आपके समीप उसी को जानने के लिए इच्छुक हूँ। इसका रूप क्या है ? कहो। उसके गुणों और अवगुणों को जानने के बाद जैसा होगा वैसा करेंगे ॥४१॥

घटोत्कच—ठीक है, मैं बताता हूँ कि 'डर क्या है।' अपना आयुध ले लो।

भीम—आयुध ? लो यह ले लिया।

घटोत्कच—किस तरह ?

भीमः—

काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः।
अयं तु दक्षिणो बाहुरायुधं सदृशं मम॥ ४२॥

घटोत्कचः—इदमुपपन्नं पितुर्मे भीमसेनस्य।

भीम.—अथ कोऽयं भीमो नाम?

---

कथमहं सायुध इति भीमसेन कथयति–काञ्चनेत्यादिना। रिपूणाम् = शत्रूणाम्, निग्रहे = दमने, रत =संलग्न, काञ्चन-स्तम्भसदृश =स्वर्णस्तम्भ-तुल्य, काञ्चनस्य सुवर्णस्य स्तम्भ तेन सदृश, अयम् = शरीरवर्ती, दक्षिण = वामेतर, बाहु =भुज, मम–भीमसेनस्य, सहजम्[1] = सहजात स्वाभाविकम्; आयुधम्=शस्त्रम्। अत आयुधस्यान्यस्य न आवश्यकता—इति भाव। उपमा-लङ्कार। अनुष्टुप् वृत्तम्॥ ४२॥

[ अन्य अस्त्रों को अनावश्यक समझते हुए भीम अपने हाथ को ही शस्त्र रूप में बताते हैं ]—

अन्वय—काञ्चनस्तम्भ सदृश, रिपूणा, निग्रहे, रत, अयम्, दक्षिण बाहु, मम, सहजम्, आयुधम् [ अस्ति ]॥ ४२॥

पदार्थ—काञ्चन स्तम्भ सदृश = सुवर्ण के खम्भे के समान, रिपूणाम् = शत्रुओं का, निग्रहे = दमन करने मे, रत =संलग्न, अयम् = यह, दक्षिण बाहु = दाहिना हाथ, मम = मेरा, सहजम् = स्वाभाविक, आयुधम् = शस्त्र, [अस्ति = है ]॥ ४२॥

---

भीम—स्वर्ण स्तम्भ के समान शत्रुओं का दमन करने मे संलग्न यह दाहिना हाथ ही मेरा स्वाभाविक शस्त्र है॥ ४२॥

घटोत्कच—यह तो मेरे पिता भीमसेन के लिए सम्भव है।

भीम—तो, तो यह 'भीम' कौन है?

---

१ तु० (i) 'सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ'—पञ्चरात्र २ २५।
(ii) 'गिरितटकठिनांसौ एव बाहू ममैतौ प्रहरणमपरं तु त्वादृशां [दुर्बलानाम्]'—बाल० ३ ११।
(iii) 'आर्यक भीमस्यानुकरिष्यामि शस्त्रं बाहुर्भविष्यति'—मृच्छ० २ १७।

विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः।
एतेषु कथ्यतां भद्र ! केन ते सदृशः पिता ॥ ४३ ॥

घटोत्कचः—सर्वैः।

भीमः—धिगनृतमेतत्।

घटोत्कचः—कथम् ? कथम् अनृतमित्याह। क्षिपसि मे गुरुम्।

---

कोशः—रिपूणाम्—'रिपौ वैरिसपत्नारि द्विषद्द्वेषणदुर्हृदः' अमरकोषः।
'कोऽयं भीमो नाम' इति पृच्छति भीमसेनः—विश्वेत्यादिना। विश्वकर्ता—ब्रह्मा, विश्वस्य जगतः कर्ता निर्मातेति भावः। शिवः—महेश्वरः, कृष्णः—विष्णुः, कर्षति जनेभ्यः दुःखान् यः सः कृष्णः, 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इत्यमरः। शक्रः—इन्द्रः, 'जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः' इत्यमरः। शक्तिधरः—स्कन्दः 'धरतीति'धरः भवते, धरः कुमारः, षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः' इत्यमरः। यमः—कृतान्तः, 'कृतान्तो यमुनाभ्राता शमनो यमराड् यमः' इत्यमरः। एतेषु—देवविशेषेषु मध्ये, ते—तव, पिता—जनकः, केन—देवेन, सदृशः—तुल्यः, अस्ति इति शेषः, भद्र—हे सौम्य, कथ्यताम्—उच्यताम् एष्वन्यतमेन सदृशप्रभावशाली यदि यः कोऽपि स्यात् तमहं वीरं गणयेयम्, न तु ततो हीनगुणमिति भावः। अनुष्टुप् वृत्तम् ॥४३॥

अन्वयः—विश्वकर्ता, शिवः, कृष्णः, शक्रः, शक्तिधरः, यमः—हे भद्र ! कथ्यताम् एतेषु ते पिता केन सदृशः ? ॥ ४३ ॥

पदार्थ—विश्वकर्ता=जगत् के रचयिता ( ब्रह्मा ), शिवः=भगवान् शङ्कर, कृष्णः=विष्णु, शक्रः=इन्द्र, शक्तिधरः=कुमार कार्तिकेय, यमः=यमराज, एतेषु=इन (देवताओं) के बीच, हे भद्र !=हे सौम्य, कथ्यताम्=कहो, ते पिता=तुम्हारे पिता केन सदृशः=किसके सदृश, वर्तते—हैं ॥ ४३ ॥

सर्वैः=पूर्वोक्तैः षड्भिः। क्षिपसि=निन्दसि। प्रहरामि=ताडयामि, गिरिकूटम्=पर्वतशृङ्गम् ॥

---

जगत् के कर्ता ब्रह्मा, भगवान् शङ्कर, विष्णु, इन्द्र, कुमार कार्तिकेय व यमराज—इन देवों के मध्य, हे सौम्य, कहो तुम्हारे पिता किसके सदृश हैं ?

घटोत्कच—सभी के समान हैं।

भीम—ओह, झूठ, यह बिलकुल झूठ है।

घटोत्कच—कैसे, यह कथन झूठ कैसे है ?

भवतु, इमं स्थूलं वृक्षमुत्पाट्य प्रहरामि। ( उत्पाटय - प्रहरति ) कथमनेनापि न शक्यते हन्तुम्। किन्नु खलु करिष्ये। भवतु, दृष्टम्। एतद् गिरिकूटमुत्पाट्य प्रहरामि।

शैलकूटं मयाक्षिप्तं प्राणानादाय यास्यति।

भीमः—

रुष्टोऽपि कुञ्जरो वन्यो न व्याघ्रं धर्षयेत् वने ॥ ४४ ॥

घटोत्कचः—( प्रहृत्य ) कथमनेनापि न शक्यते हन्तुम्। किन्नु खलु करिष्ये। भवतु, दृष्टम्।

---

मया=घटोत्कचेन, आक्षिप्तम्=प्रक्षिप्तम्, शैलकूटम्=गिरिशिखरम्; अस्य, प्राणान्=असून्, आदाय=गृहीत्वा; यास्यति=गमिष्यति। वने=अरण्ये; वन्य.=वने भव वन्य, रुष्ट अपि=कुपितोऽपि, कुञ्जरः=गज, व्याघ्रम्=शार्दूलम्; न धर्षयेत्[1]=न परिभवेत्। लोकोक्त्यलङ्कार। तल्लक्षण तु–'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते।' अनुष्टुप् वृत्तम् ॥ ४४ ॥

अन्वय—मया, आक्षिप्तम्, [ इदम् ] शैलकूटम्, [ तव ] प्राणान्, आदाय, [एव] यास्यति। रुष्ट, अपि, वन्य, कुञ्जर, वने, व्याघ्रम्, न धर्षयेत् ॥४४॥

पदार्थ—मया=मेरे द्वारा; आक्षिप्तम्=फेंका गया, [ इदम् ] शैलकूटम्=यह पर्वत-शिखर, [तव] प्राणान्=तुम्हारे प्राण, आदाय [एव]=लेकर ( ही ), यास्यति=जायगा। रुष्ट अपि=क्रुद्ध होकर भी, वन्य=जङ्गली, कुञ्जर=हाथी, वने=जङ्गल मे; व्याघ्रम्=सिंह को, न धर्षयेत्=भर्त्सना नहीं करता है ॥४४॥

---

तो तुम हमारे पूज्य की निन्दा करते हो। अच्छा तो इस विशाल वृक्ष को उखाड कर प्रहार करूँ। ( उखाड कर प्रहार करता है ) कैसे ? मैं तो इससे भी इसे नहीं मार सकता। तो क्या किया जाय। अच्छा, समझा। इस पहाड की शिखर को ही उखाड कर प्रहार करूँ।

मेरे द्वारा फेंका गया यह पर्वत-शिखर [अब] तुम्हारे प्राण लेकर ही जायगा।

भीम—किन्तु,

क्रुद्ध होकर भी जङ्गली हाथी जङ्गल मे सिंह का धर्षण नहीं करता ॥४४॥

घटोत्कच—( प्रहार करके ) कैसे ? मैं तो इससे भी इसे मारने मे समर्थ नहीं हूँ। क्या करूँ ? अच्छा, समझा।

---

१. तु० 'न व्याघ्र मृगशिशव. प्रधर्षयन्ति–'प्रतिमा० ५.१८।

गंज इव दृढपाशैः पीडितो मद्भुजाभ्याम् ।

भीम —( आत्मगतम् ) कथं गृहीतोऽस्म्यनेन । भो सुयोधन ! वर्धते खलु शत्रुपक्षः । कृतरक्षो भव । ( प्रकाशम् ) भो पुरुष ! अवहितो भव ।

घटोत्कच —अवहितोऽस्मि ।

भीमः—( नियुद्धबन्धमवधूय )

व्यपनय बलदर्पं दृष्टसारोऽसि वीर !

---

उल्लङ्घ्य=अतिक्रम्य, मद्भुजाभ्याम्=मम वाहुभ्याम्, पाडित =दृढ बद्ध ; दृढपाशैः=दृढरज्जुभि बद्ध , गज इव=हस्तीव, कथम्=केन प्रकारेण, व्रजसि=गच्छसि, मम भुजपाशमुल्लङ्घ्य कथमपि गन्तुं न शक्नोषीत्यर्थ. । 'गज इव दृढपाशैः' इत्युपमालङ्कारः ॥

वर्धते खलु=शत्रुपक्ष वृद्धि प्राप्नोति खलु, मत्सूनो शक्त्या सहायभूतया त्वत्पक्षादभ्यधिकबलो भवतीत्यर्थ । अवधूय=तिरस्कृत्य ॥

भीम स्वपरिश्रमलाघव प्रकाशयन्नाह—व्यपनयेत्यादिना । हे वीर=हे पराक्रमशालिन्, दृष्टसार =प्रत्यक्षीकृतबल , दृष्ट सारो यस्य स , 'सारो बले स्थिरांशे च' इत्यमर । एवभूतस्त्वम्, असि । अत , बलदर्पम्=बलस्य विक्रमस्य दर्पं गर्वम् व्यपनय=परित्यज । हि=यत , बाहुयुद्धे=मल्लयुद्धे मुष्टियुद्धे वा, बाह्वो युद्ध तस्मिन्, मम=भीमसेनस्य, परिखेद =परिश्रम , न विद्यते=न वर्तते । मालिनी वृत्तम् ॥ ४६ ॥

अन्वय—दृढपाशैः , गज, इव, मद्भुजाभ्याम्, पीडितः, बाह्वो. वीर्यम्, उल्लङ्घ्य, त्वम्, इह, कथम् व्रजसि ।

पदार्थ—दृढपाशै.=सुदृढ बन्धन मे बँधे हुए, गज इव=हाथी के समान; मद्भुजाभ्याम्=मेरी भुजाओं से, पीडित =बँधे हुए, बाह्वो =मेरी भुजाओ की, वीर्यम्=शक्ति का, उल्लङ्घ्य=उल्लङ्घन करके, त्वम् इह=तुम इस वन मे,

---

भीम—( मन ही मन ) इससे मैं कैसे पकड लिया गया ? ओ दुर्योधन तुम्हारा शत्रुपक्ष बढ रहा है । अब अपनी रक्षा के लिए सतर्क हो जाओ । ( प्रकट ) हे पुरुष, अपनी रक्षा मे तैयार हो जाओ ।

घटोत्कच—हाँ, मैं चौकस हूँ ।

भीम—( बाहुपाश को छुडाकर )—

न हि मम परिखेदो विद्यते बाहुयुद्धे ॥ ४६ ॥

घटोत्कचः—कथमनेनापि न शक्यते हन्तुम्। किन्नु खलु करिष्ये। भवतु, दृष्टम्। अस्ति मातृप्रसादलब्धो मायापाशः। तेन बद्ध्वैनं नेष्यामि। कुतः खल्वापः। भो गिरे। आपस्तावत्। हन्त स्रवति। ( आचम्य मन्त्रं जपति ) भोः पुरुष !

मायापाशेन बद्धस्त्वं विवशो न गमिष्यसि।

---

कथम्=किस प्रकार; व्रजसि=जा सकते हो ?

अन्वय—हे वीर ! बल-दर्पम्, व्यपनय। दृष्ट-सार, असि; हि, बाहुयुद्धे मम, परिखेद, न, विद्यते ॥ ४६ ॥

पदार्थ—हे वीर !=हे पराक्रमी, बलदर्पम्=अपने बल का घमण्ड, व्यपनय=छोड दो, दृष्टसार असि=तुम्हारी शक्ति देख ली गई। हि=क्योंकि, बाहु-युद्धे=मल्लयुद्ध में, मम=मुझे, परिखेद =परिश्रम, न विद्यते=नहीं हुआ ॥ ४६ ॥

कुतः खल्वाप [1] ? आपस्तावत् 'स्रवन्तु' इति शेष। स्रवति अर्थात् गिरिणाप्रदत्ता।

मायापाशस्य प्रभाव वर्णयति घटोत्कच —मायेत्यादिना। मायापाशेन—मायामय पाश मायापाश. तेन मायाया पाशेन अर्थात् ऐन्द्रजालिक-प्रयोगानुष्ठानेन बद्ध सन् त्वम् इदानीं, विवशः=परतन्त्र ; विगत वश स्वातन्त्र्य यस्य स ; न गमिष्यसि=अंग-चलनशक्ति-विरहात् यत्र तत्र गन्तुं न सक्षमो भविष्यसि; अत अधुना, उत्सवे—वर्षारम्भे अनुष्ठेयोत्सवे, शक्रध्वज इव=इन्द्र-

---

हे वीर, अपने बल का दम्भ छोड दो। तुम्हारी शक्ति देख ली गई है क्योंकि मल्लयुद्ध मे मुझे परिश्रम नही करना पडा ॥ ४६ ॥

घटोत्कच—क्या मैं इससे भी इसे नही मार सकता। फिर क्या करूँ ? अच्छा, समझ गया। मेरे पास तो माता के प्रसाद से प्राप्त एक माया-पाश भी है। उससे ही बाँधकर इसे ले जाऊँगा। किन्तु जल कहाँ से प्राप्त करें ? हे गिरि, मुझे जल दो। अहा, यह बहने लगा। ( आचमन करके मन्त्र जपता है ) हे पुरुष,—

माया पाश से बँधे हुए परतन्त्र तुम अब कहीं न जा सकोगे और

---

१. तु० पञ्चरात्र, दूतवाक्य, प्रतिज्ञा, अभिषेक, प्रतिमा।

राजसे रज्जुभिर्बद्धः शक्रध्वज इवोत्सवे ॥ ४७ ॥

( इति मायया बध्नाति )

भीमः—कथं मायापाशेन बद्धोऽस्मि । किमिदानीं करिष्ये । अस्ति महेश्वरप्रसादलब्धो मायापाशमोक्षो मन्त्रः । तं जपामि । कुतः खल्वापः ? भवतु, भो ब्राह्मणकुमार ! आनय कमण्डलुगता अपः ।

वृद्धः—इमा आपः ।

---

ध्वज इव, शक्रस्य इन्द्रस्य ध्वजः केतुः इव, रज्जुभिः बद्धः राजसे=शोभसे । परित्यक्तशक्तिविरहात् त्वं यष्टिरिव शोभसे इत्यर्थः इन्द्रध्वजो नाम वृष्ट्यर्थं राज्ञा पूज्य इन्द्रसम्बन्धी कोऽपि ध्वजो वेणुयष्टिमय । तदुक्तं यथा भविष्योत्तरपुराणे-

एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ।

पर्जन्यः कामवर्षी स्यात् तस्मिन् राष्ट्रे न संशयः ।

शक्रध्वज इवेत्युपमालङ्कारः । अनुष्टुप् वृत्तम् ॥ ४७ ॥

अन्वय—मायापाशेन, बद्धः, विवशः, त्वम्, अनुगमिष्यसि । उत्सवे, रज्जुभिः, बद्धः, शक्रध्वज, इव, राजसे ॥ ४७ ॥

पदार्थ—मायापाशेन=इन्द्रजालिक बन्धन के द्वारा, बद्धः=बँधे हुए, विवशः=परतन्त्र होकर, त्वम्=तुम, अनुगमिष्यसि=मेरा अनुगमन करोगे । उत्सवे=सावत्सरिक उत्सव मे, रज्जुभिः=रस्सियो से, बद्धः=बँधे हुए, शक्रध्वज इव=इन्द्र की ध्वजा के समान, राजसे=शोभित होगे ॥ ४७ ॥

---

सावत्सरिक उत्सव मे रस्सियों से बँधे हुए इन्द्र की ध्वजा के समान शोभित होगे ॥ ४७ ॥

( इस प्रकार माया से बाँधता है )

भीम—अरे, क्या मैं मायापाश से बँध गया ? अब क्या करूँ ? अच्छा, समझ गया । मेरे पास तो भगवान् शङ्कर के प्रसाद से प्राप्त मायापाश से छुटकारे का मन्त्र है । उसको ही जपता हूँ । किन्तु जल कहाँ है ? ठीक है, हे ब्राह्मण कुमार, कमण्डलु का जल लाओ ।

वृद्ध—यह जल लीजिए ।

( भीम जल लेकर और आचमन करके मन्त्र जपकर माया को हटाते हैं )

( भीम आचम्य मन्त्रं जप्त्वा माया मोचयति )

घटोत्कचः—अये पतितः पाशः। किमिदानीं करिष्ये। भवतु, दृष्टम्। भो पुरुष! पूर्वसमयं स्मर।

भीमः—समय इति। एष स्मरामि। गच्छाग्रतः।

( उभौ परिक्रामतः )

वृद्धः—पुत्रका! किं कुर्मः। अयं गच्छति वृकोदरः।

आक्रम्य राक्षसमिमं ज्वलदुग्ररूप-
मुग्रेण बाहुबलवीर्यगुणेन युक्तम्।

---

समयानुरोधात् अनुगच्छन्तो भीमसेनस्य पराक्रमं वृद्धो वर्णयति—आक्रम्येत्यादिना। ज्वलदुग्ररूपम्=प्रज्वलितभयङ्कररूपम्; ज्वलत् उग्रं भयङ्करं रूपं स्वरूपं यस्य तम्, उग्रेण=घोरेण, बाहुबलवीर्यगुणेन युक्तम्=भुजबल-पराक्रमगुणेन सहितम्, इमम्=पुरो दृश्यमानम्, राक्षसम्=घटोत्कचम्; आक्रम्य=अभिभूय, एषः=भीमसेन, शनकैः=मन्दं मन्दम्, सलीलम्=लीलया सहितम्, शीघ्रम्=वेगपाति, आसारवर्षम्=धारासम्पातवृष्टिम्, 'धारासम्पात आसारः' इत्यमरः। अवधूय=तिरस्कृत्य, गोवृषभ इव=गोषु वृषभः महोक्ष इव, वृषश्रेष्ठो वा, प्रयाति=गच्छति। यथा गोवृषभः धारासम्पातवृष्टिं तिरस्कृत्य स्वेच्छया सलीलं गच्छति, तथायं भीमसेनोऽपि राक्षसबाधाम् अवधूय विस्रब्धम् अनुसरतीत्यर्थः। गोवृषभ इवेत्युपमालङ्कारः। वसन्ततिलका वृत्तम्॥

[भीम के जाने पर खेद युक्त वृद्ध अपनी व्यथा इस प्रकार प्रकट करता है–]

अन्वय—ज्वलदुग्ररूपम्, उग्रेण, बाहु-बल-वीर्य गुणेन, युक्तम्, इमम्, राक्षसम्, आक्रम्य, एषः, शनकैः, असार वर्षम्, शीघ्रम्, अवधूय, गोवृषभ, इव, सलीलम्, प्रयाति॥ ४८॥

पदार्थ—ज्वलद् उग्र-रूपम्=प्रदीप्त और उग्र रूप वाले, उग्रेण=अत्यन्त

---

घटोत्कच—अरे, यह पाश तो छूट गया। अब क्या करूँ? अच्छा, समझ गया। हे पुरुष, पहले की हुई शर्त का स्मरण करो।

भीम—शपथ? अच्छा, मैं स्मरण करता हूँ। ठीक है, आगे चलो।

( दोनों जाते हैं )

वृद्ध—हे पुत्रो! हम लोग क्या करें? यह भीमसेन तो जा रहे हैं। प्रदीप्त और उग्र रूप वाले, अत्यन्त प्रचण्ड, भुजाओं के बल एवं शौर्य से

एष प्रयाति शनकैरवधूय शीघ्र-
मासारवर्षमिव गोवृषभः सलीलः ॥ ४८ ॥

घटोत्कच—इह तिष्ठ । त्वदागमनमम्बायै निवेदयामि ।
भीमः—बाढम् । गच्छ ।
घटोत्कचः—( उपसृत्य ) अम्ब, अभिवादये घटोत्कचोऽहम् । चिराभिलषितो भवत्या आहारार्थमानीतो मानुष ।
( प्रविश्य )
हिडिम्बा—जाद ! चिर जीव । कीदिसो माणुसो आणीदो । [ जात चिरं जीव । कीदृशो मानुष आनीतः ] ?
घटोत्कचः—भवति ! वाङ्मात्रेण मानुषो, न वीर्येण ।

---

प्रचण्ड, बाहु बल-वीर्य गुणेन=भुजाओं के बल एवं शौर्य से, युक्तम्=युक्त, इमम्=इस; राक्षसम्=राक्षस को, आक्रम्य=हराकर, एष=यह [भीम], शनकै=धीरे-धीरे; सलीलम्=लीला के सहित, शीघ्रम्=वेग से गिरने वाली, आसारवर्षम्=मूसलाधार वृष्टि को, अवधूय=तिरस्कृत करके, गोवृषभ इव=वृषभ के समान प्रयाति=जा रहे हैं ॥ ४८ ॥

घटोत्कचोऽहम्=घटोह ( घट+ऊहम् ) घटवद् वितर्क्यम् अस्य—तदुप लक्षित शिर यस्य स घटोहास्य; स चासौ उत्कचश्च । रूपमात्रेण मानुष—आकृत्या एव मानव, न वीर्येण=न पराक्रमेण । अत्र काकूत्या घटोत्कच भीमसेनस्य निन्दा करोति । 'वाङ्मात्रेण' इति पाठान्तरे जात्यभिलापकशब्दमात्रेणेत्यर्थं इति गणपतिशास्त्रिणा व्याख्यातम् ।

---

युक्त इस राक्षस को अभिभूत करके यह [भीम] धीरे-धीरे उसी प्रकार लीला-सहित जा रहे हैं जैसे वेग से गिरने वाली मूसलाधार वृष्टि की परवाह न करके श्रेष्ठ वृषभ जाता है ॥ ४८ ॥

घटोत्कच—यहीं रुको । मैं तुम्हारे आगमन की सूचना माता को दे दूँ ।
भीम—ठीक है, जाओ ।
घटोत्कच—( समीप जाकर ) माँ, यह मैं घटोत्कच प्रणाम करता हूँ । बहुत दिनों से आप द्वारा अभिलषित मनुष्य आपके आहार के लिये लाया हूँ ।
( हिडिम्बा का प्रवेश )
हिडिम्बा—पुत्र, चिरञ्जीवी होओ । किस प्रकार का मनुष्य लाये हो ?
घटोत्कच—वह कहने का ही मनुष्य है, बल से नहीं ।

हिडिम्बा—किं वह्मणो। [ किं ब्राह्मणः ]।

घटोत्कच —न ब्राह्मण ।

हिडिम्बा—आदु थेरो। [ अथवा स्थविरः ]।

घटोत्कच.—न वृद्ध ।

हिडिम्बा—किं वालो। [ किं बालः ]।

घटोत्कच —न बाल ।

हिडिम्बा—जइ एव्व पेक्खामि दाव णं। [ यद्येव पश्यामि तावदेनम् ]।

( उभौ परिक्रामत )

हिडिम्बा—किं एसो माणुसो आणीदो। [ किमेष मानुष आनीत ]।

घटोत्कच —भवति ! कोऽयम् ।

हिडिम्बा—उम्मत्तअ ! दव्वद खु अअ। [ उन्मत्तक ! दैवत खल्वयम् ]।

घटोत्कच —आः कस्य दैवतम् ?

---

उन्मत्तक—ह भ्रातनित्त ।

---

हिडिम्बा—क्या ब्राह्मण है ?

घटोत्कच—ब्राह्मण नही है।

हिडिम्बा—तो क्या वृद्ध है ?

घटोत्कच—वृद्ध भी नही है।

हिडिम्बा—तो क्या वालक है।

घटोत्कच—वालक भी नही है।

हिडिम्बा—यदि ऐसा है तो इसे मैं देखूंगी।

( दोनो जाते है )

हिडिम्बा—क्या यही मनुष्य लाये हो ?

घटोत्कच—माँ, यह कौन है ?

हिडिम्बा—अरे जडमति, यह हम लोगों के देवता हैं।

घटोत्कच—आह, किसके देवता हैं ?

हिडिम्बा--तव अ मम अ। [ तव च मम च ]।
घटोत्कच--क प्रत्यय ?
हिडिम्बा-एसो पच्चओ। जेदु अय्यउत्त। [ एष प्रत्ययः। जयत्वार्यपुत्र ]।
भीम. ( विलोक्य ) का पुनरियम्। अये, देवी हिडिम्बा।

अस्माकं भ्रष्टराज्यानां भ्रमतां गहने वने।
जातकारुण्यया देवि ! सन्तापो नाशितस्त्वया ॥ ४९ ॥

हिडिम्बे ! किमिदम्।
हिडिम्बा--( कर्णे ) अय्यउत्त ईदिसं विअ। [ आर्यपुत्र ! ईदृशमिव ]।

---

जतुगृहदाहानन्तरम् अरण्यवासकाले हिडिम्बया उपकृतमात्मान स्मरतो भीमसेनस्य कृतज्ञतासूचक वचनम्--अस्माकमिति। हे देवि=हे हिडिम्बे; भ्रष्टराज्यानाम्=भ्रष्ट च्युत राज्य येभ्य तेषा विनष्टराज्यानाम्; गहने=दुर्गमे, वने=अरण्ये, भ्रमताम्=इतस्तत सञ्चरताम्, अस्माकम्=युधिष्ठिरादीना भ्रातृणाम्, जातकारुण्यया=उद्भूतदयया वा, त्वया=भवत्या हिडिम्बया; संतापः=क्लेश ; नाशित =शमित । अनुष्टुप् वृत्तम् ॥ ४९ ॥

अन्वय--हे देवि !, भ्रष्टराज्यानाम् भ्रमताम्, गहने, वने, अस्माकम्, जातकारुण्यया, सताप , त्वया, नाशित ॥ ४९ ॥

पदार्थ--हे देवि !=हे देवि, भ्रष्टराज्यानाम्=विनष्ट राज्य वाले; अस्माकम्=हम लोगो के, गहने वने=गहनवन मे, भ्रमताम्=घूमते हुए, जातकारुण्यया=उत्पन्न दयालुता के कारण, त्वया=तुम्हारे द्वारा; सताप=हमारे क्लेश, नाशित =नष्ट कर दिये गये ॥ ४९ ॥

---

हिडिम्बा--तुम्हारे और मेरे।
घटोत्कच--क्या प्रमाण है ?
हिडिम्बा--यही प्रमाण है कि 'आर्यपुत्र की जय हो।'
भीम--( देखकर ) यह कौन है ? अरे, देवी हिडिम्बा।
हे देवि, विनष्ट राज्य वाले हम लोगो के गहन वन मे घूमते हुए उत्पन्न दयालुता के कारण तुम्हारे द्वारा हमारे क्लेश नष्ट कर दिये गये ॥ ४९ ॥
हिडिम्बे, यह क्या है ?
हिडिम्बा--( कान मे ) आर्यपुत्र, यह ऐसा ही है।

भीमः—जात्या राक्षसी, न समुदाचारेण ।

हिडिम्बा—उम्मत्तअ ! अभिवादेहि पिदरं [ उन्मत्तक ! अभिवादय पितरम् ] ।

घटोत्कच —भोस्तात !

अज्ञानात्तु मया पूर्वं यद्भवान्नाभिवादितः ।
अस्य पुत्रापराधस्य प्रसादं कर्तुमर्हसि ॥ ५० ॥

अहं स धार्तराष्ट्रवनदवाग्निर्घटोत्कचोऽभिवादये । पुत्रचापलं क्षन्तुमर्हसि ।

---

घटोत्कच भीमम् अभिवादयन् स्वापराधस्य मार्जनं प्रार्थयति—[1]अज्ञानादित्यादिना । मया=घटोत्कचेन, भवान्=पूज्य भीमतात ; यत् अज्ञानात्=तातोऽयमिति परिचयविरहात्, पूर्वम्=प्राक्, न अभिवादितः=प्रणामादिना समुदाचारेण न सत्कृतः ; अस्य पुत्रापराधस्य=अनभिवादनरूपस्य पुत्रकृतस्यागसः ; प्रसादम्=अनुग्रहम्, कर्तुम्=विधातुम्; अर्हसि=योग्योऽसि । अनुष्टुप् वृत्तम् ॥ ५० ॥

अन्वय—मया, अज्ञानात्, पूर्वं यत् भवान् न अभिवादितः, अस्य, पुत्रापराधस्य, प्रसादम्, कर्तुम्, अर्हसि ॥ ५० ॥

पदार्थ—मया-मेरे द्वारा, अज्ञानात्-अज्ञान के कारण, पूर्वम्-पहले, यत्=जो, भवान्=आपका, न अभिवादितः=अभिवादन नहीं किया गया, अस्य=इस, पुत्रापराधस्य=पुत्र के द्वारा किये गये अपराध को, प्रसादम्=क्षमा, कर्तुम्-करने के लिए, अर्हसि=योग्य होइए [1]अर्थात् मेरा अपराध क्षमा कीजिए और मेरा प्रणाम स्वीकार कीजिए ॥ ५० ॥

---

भीम—तुम जन्म से राक्षसी हो, न कि आचरण से ।

हिडिम्बा—ओ जडमति, अपने पिता का अभिवादन करो ।

घटोत्कच—ओ तात—

अज्ञान के कारण मेरे द्वारा पहले जो आपका अभिवादन नहीं किया गया
पुत्र द्वारा किये गये इस अपराध को क्षमा कीजिए ॥ ५० ॥

धृतराष्ट्रवंशरूपी वन के लिए वनाग्नि के समान मैं घटोत्कच -आपको

---

१. तु० पञ्चरात्र २ ६८ ।

५ म० व्या०

भीमः—एह्येहि पुत्र ! व्यतिक्रमकृतं क्षान्तमेव । ( इति परिष्वज्य ) अयं सः धार्तराष्ट्रवनदवाग्निः । पुत्रापेक्षीणि खलु पितृहृदयानि । पुत्र ! अतिबलपराक्रमो भव ।

घटोत्कचः—अनुगृहीतोऽस्मि ।

वृद्धः—एवम्, भीमसेनपुत्रोऽयं घटोत्कचः ।

भीमः—पुत्र ! अभिवादयात्रभवन्तं केशवदासम् ।

घटोत्कचः—भगवन् ! अभिवादये ।

वृद्धः—पितृसदृशगुणकीर्तिर्भव ।

घटोत्कचः—अनुगृहीतोऽस्मि ।

वृद्धः—भो वृकोदर ! रक्षितमस्मत्कुलं स्वकुलमुद्धृतं च । गच्छामस्तावत् ।

---

धार्तराष्ट्रवनदवाग्निः=दुर्योधनादयः धृतराष्ट्रस्य पुत्राः, ते धार्तराष्ट्रा एव वनम्, तस्य दवाग्निः वनाग्निः ।

---

प्रणाम करता हूँ । पुत्र-कृत चपलता को क्षमा करें ।

भीम—आओ, आओ पुत्र, तुम्हारे द्वारा किये गये अपराध को तो पहले ही क्षमा कर दिया गया । ( आलिङ्गन करके ) यही वह धृतराष्ट्रवंशरूपी वन की दावाग्नि है । पिता का हृदय तो सर्वदा पुत्रापेक्षी ही होता है । पुत्र, अत्यन्त बलवान् और पराक्रमी होओ ।

घटोत्कच—मैं अनुगृहीत हूँ ।

वृद्ध—इस प्रकार यह भीमसेन का पुत्र घटोत्कच है ।

भीम—पुत्र, इन पूजनीय केशवदास का अभिवादन करो ।

घटोत्कच—भगवन्, मैं आपको प्रणाम करता हूँ ।

वृद्ध—पिता के समान गुण एवं कीर्ति वाले होओ ।

घटोत्कच—मैं अनुगृहीत हूँ ।

वृद्ध—हे भीम, आपने हमारे कुल की रक्षा की, और अपने कुल का भी उद्धार किया । अब हम लोग चलें ।

भीमः—

अनुग्रहात् तु भवतः सर्वमासीदिदं शुभम्।
आश्रमोऽदूरतोऽस्माकं तत्र विश्रम्य गम्यताम् ॥ ५१ ॥

वृद्ध—कृतमातिथ्यमनेन जीवितप्रदानेन। तस्माद् गच्छामस्तावत्।

भीम.—गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय।

वृद्ध.—बाढम्। प्रथमः कल्पः।

---

भीम ब्राह्मणस्य सत्कारं कुर्वन्नाह—अनुग्रहादित्यादि। इदं सर्वम्=पाण्डवकुलोद्धरणं स्वकुलरक्षणञ्चेदं सकलम्, भवतः=तव ब्राह्मणस्य, अनुग्रहात्=अनुकम्पात, शुभम्=मङ्गलम्, आसीत्=अभवत्, भवत्परित्राणार्थमागतस्य मम भीमस्य दारपुत्रसमागमसिद्धया मांगलिकमभवदिदं सर्वं। अस्माकम्=पाण्डवानाम्, आश्रम =आवास, अदूरत =सन्निकट एव वर्तते। तत्र=आश्रमे, विश्रम्य=मदीयातिथ्यस्वीकारादिना मार्गसञ्चरणपरिश्रमम् अपनीय, गम्यताम्=सुखपूर्वक गन्तव्यदेशं प्रति प्रस्थीयताम्। अनुष्टुप् वृत्तम् ॥ ५१ ॥

अन्वय—भवत, अनुग्रहात्, इदम्, सर्वम्, शुभम्, आसीत्। अस्माकम्, आश्रम, अदूरत [ वर्तते, अत ] तत्र, विश्रम्य, गम्यताम् ॥ ५१ ॥

पदार्थ—भवत =आपकी, अनुग्रहात्=अनुकम्पा से, इदम्=यह, सर्वम्=सब कुछ, शुभम्=शुभ ही, आसीत्=हुआ। अस्माकम्=हमलोगों का, आश्रम =निवासस्थान, अदूरत [ वर्तते ]=दूर नहीं [ है ]। [ अत ] तत्र=वहाँ, विश्रम्य=विश्राम करके, गम्यताम्=यात्रा कीजिए ॥ ५१ ॥

---

भीम—आपकी अनुकम्पा से यह सब कुछ शुभ ही हुआ। हम लोगों का आश्रम यहाँ से दूर नहीं है। अत वहाँ विश्राम करके फिर आगे यात्रा करें ॥ ५१ ॥

वृद्ध—इस जीवन-दान के द्वारा तो आपने सम्पूर्ण आतिथ्य कर ही दिया। अत हम लोग चलें।

भीम—कुटुम्बसहित पुन दर्शन देने के लिए आप जायें।

वृद्ध—अच्छा, बहुत अच्छा विचार है।

( सपुत्रत्रयकलत्रो निष्कान्त. केशवदास )

**भीमः—हिडिम्बे ! इतस्तावत् । वत्स ! घटोत्कच ! इतस्तावत् । तत्रभवन्त केशवदासमाश्रमपदद्वारमात्रमपि सम्भावयिष्यामः।**

[ भरतवाक्यम् ]

**यथा नदीनां प्रभवः समुद्रो**
**यथाहुतीनां प्रभवो हुताश ।**

---

आश्रमपदद्वारमात्रम्=आश्रमद्वारावधिकम् । सम्भावयिष्यामः= अनुगमिष्याम, अर्थात् अनुगमनेन सत्करिष्यामः ।

'प्रशस्ति शुभशमनम्'—इत्युक्तरूप शुभशमन प्रयोगान्ते प्रयुञ्जान आह— भरतवाक्यम्=भरतस्य नटस्य वाक्य वचनम् । नाटकाभिनयसमाप्तौ सामाजिकेभ्यो नटेनाशीर्दीयते इत्यर्थः ।

नट शुभाशसन करोति—यथेत्यादिना । यथा समुद्र =येन प्रकारेण सरित्पति, 'समुद्रोऽब्धिरकूपार पारावार सरित्पति ' इत्यमर. । नदीनाम्= सरिताम्, प्रभव -स्वामी उत्पत्तिलयहेतुत्वात्, यथा हुताशः=येन प्रकारेण, हुतम् अश्नातीति हुताश अग्नि, आहुतीनाम्=होमानाम्, प्रभव =स्वामी भोक्तृत्वात् । यथा मनः=येन प्रकारेण चित्तम् इन्द्रियाणाम्=चक्षुरादीनाम्, प्रभवम्=स्वामी प्रेरकत्वात्, तथा=तेनैव प्रकारेण, भगवान्=भग ऐश्वर्यादि षट्क सद्वान्,

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्रिय ।
ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा ॥" विष्णुपुराणे इत्युक्तत्वात् ।

उपेन्द्रः=इन्द्रावरज, भगवान् विष्णुरित्यर्थ । 'उपेन्द्रइन्द्रावरजश्चक्रपाणिश्चतुर्भुज ' इत्यमर, न =अस्माकम्, प्रभु =ईश्वर भवेदिति शेष । मालारूपकालङ्कार । उपेन्द्रवज्रावृत्तम् । तल्लक्षण तु– उपेन्द्रवज्रा जतजास्ततो गौ' ॥५२॥

---

( अपने तीनो पुत्रो और पत्नी के सहित केशवदास का निष्क्रमण )

भीम—ओ हिडिम्बे, इधर आओ । वत्स, घटोत्कच, इधर आओ । इन आदरणीय केशवदास को हम लोग आश्रम के द्वार तक तो पहुँचा दें ।

[ उत्पत्ति और लय के कारण ] जैसे नदियो का स्वामी समुद्र है, भोक्ता होने के कारण ] जैसे आहुतियो का स्वामी अग्नि है और [ प्रेरक

( ततः प्रविशति यथानिर्दिष्टो दुर्योधनः )

दुर्योधनः—

> उद्धूतरोषमिव मे हृदयं सहर्षं
> प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
> इच्छामि पाण्डवबले वरवारणाना-
> मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ।। ४ ।।

---

दुकूलेन क्षौमेण सूक्ष्मवस्त्रेण वा कृतम्=विहितम्, उत्तरीयं=प्रावारः येन स तथोक्तः, सच्छत्रचामरः=सत् समीचीनं छत्रं चामरवरश्च यस्मिन् स शोभनच्छत्रव्यजनवरः, रचिताङ्गरागः=रचितः अङ्गरागः अङ्गानुलेपनं येन सः विहिताङ्गानुलेपनः विभूषणमणिद्युतिरञ्जिताङ्गः=विभूषणमणिद्युतिभिः आभरणरत्नकान्तिभिः रञ्जितानि रूषितानि अङ्गानि यस्य सः, आभरणोत्पलमणिकान्तिशोभितविग्रहः, श्रीमान् श्रीः=अस्ति अस्य श्रीमान् शोभायुक्तः, [ यः एषः =दुर्योधनः सः ] नक्षत्रमध्ये=नक्षत्राणां मध्ये तस्मिन्, उडुगणपरिवृतः, पर्वगतः=पर्वणि गतः, पूर्णिमां प्राप्तः, शशाङ्कः इव=शशः मृगः अङ्के=क्रोडे यस्य सः, चन्द्रः इव, प्रियदर्शनत्वात् शोभते इति शेषः । उपमालङ्कारः । वसन्ततिलकावृत्तम् ।। ३ ।

टिप्पणी— दुकूलं तु क्षौमेऽपि सूक्ष्मवाससि इति केशवस्वामी । द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं चेत्यमरः ।

अन्वयः—उद्धूतरोषमिव मे हृदयं सहर्षम् इमं रणोत्सवं प्राप्तम् इति सहसा विचिन्त्य पाण्डवबले वरवारणानां मुखानि उत्कृत्तदन्तमुसलानि कर्तुम् इच्छामि । ४ ।।

संस्कृत टीका—उद्धूतरोषमिव=उद्धूतः निरस्तः रोषः=कोपः

---

[ इसके बाद उपर्युक्त प्रकार की छटा से सम्पन्न दुर्योधन का प्रवेश ]

दुर्योधन—इस युद्धोत्सव के एकाएक उपस्थित हो जाने पर विचार करके मेरा हृदय प्रसन्न होकर मानो क्रोधरहित हो गया है । अब मैं पाण्डव-सेना के श्रेष्ठ गजराजों के मूसलाकार दन्तों को उखाड़ फेंकना चाहता हूँ ।। ४ ।।

काञ्चुकीयः—जयतु महाराजः। महाराजशासनात् समानीतं सर्वराजमण्डलम्।

दुर्योधनः—सम्यक् कृतम्। प्रविश त्वमवरोधनम्।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (निष्क्रान्तः)

---

पाण्डवविषयो येन तद्, विनष्टक्रोधमिव, मे=मम, हृदय=चित्त, सहर्ष=हर्षयुक्तं भवति। इवेति सम्भावनायाम्। तेन रोषस्य सतोऽप्युद्भूतमदयभासमानतोक्ता, सा च चित्तवृत्त्यन्तरेणाभिभवादित्याशयः। एवं च रोषन्ययकारेण हर्षं उदित इति तात्पर्यम्। कथं हर्षोदयस्तत्राह—इमं=वर्तमान, रणोत्सव=रणस्य उत्सवः तम्, युद्धमेवानन्दहेतुत्वाद् उत्सवम्, संग्राममहम्, प्राप्तम्=समागतम्, इति सहसा विचिन्त्य=इति झाक विमृश्य, अतः पाण्डवबले=पाण्डवानां बल तस्मिन्, पाण्डवानां सैन्ये, वरवारणानां=प्रशस्तगजानाम्, वराश्च ते वारणाः तेषाम्, मुखानि=आननानि, उत्कृत्तदन्तमुसलानि=उत्कृत्ताः छिन्नाः दन्तमुसला, दन्ता मुसला इव येषु तानि तथाभूतानि, उत्पाटितरदानि, कर्तुम्=विधातुम्, इच्छामि=ईहे। एवञ्च इच्छायाः फलप्राप्तिकाल प्रत्यासन्नो युद्धस्यासन्नत्वादिति निश्चयो हर्षोदये कारणमित्युक्तं भवति। 'इच्छा हि' इति क्वचित् पाठ। तथा हि शब्दो हेतौ, यस्मात् कारणादित्यर्थः। इच्छा=काम, ममास्तीत्यर्थगम्यम्। अतः अस्मिन् रणे पाण्डवसैनिकगजानां विनाश करोमीति विवेकः। उपमालङ्कारः। वसन्ततिलकावृत्तम् ॥ ४ ॥

टिप्पणी—हृदयं—'चित्तं तु चेतो हृदयम्' इत्यमरः। उत्सवः-'महस्तूत्सवतेजसो'—इत्यमर।

संस्कृत टीका—जयत्विति। समानीतम्=आहृतम्। सम्यगित्यादि।

---

काञ्चुकीय—महाराज की जय हो। महाराज की आज्ञा से अखिल राजमण्डल को बुला लिया गया है।

दुर्योधन—बहुत अच्छा किया। अब तुम अन्तःपुर में जाओ।

काञ्चुकीय—जैसी महाराज की आज्ञा। (चला जाता है)

दुर्योधनः—आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीसमुदयः। अस्य कः सेनापतिर्भवितुमर्हति ? किमाहतुर्भवन्तौ—महान् खल्वयमर्थः। मन्त्रयित्वा वक्तव्यमिति।

सदृशमेतत्। तदागम्यतां मन्त्रशालामेव प्रविशामः। आचार्य ! अभिवादये। प्रविशतु भवान् मन्त्रशालाम्। पितामह ! अभिवादये। प्रविशतु भवान् मन्त्रशालाम्। मातुल ! अभिवादये। प्रविशतु

---

अवरोधनम्=अन्तःपुरम्। आर्यावित्यादि। वैकर्णवर्षदेवौ=राजविशेषौ, वैकर्तनवर्षदेवाविति क्वचित् पाठः। एकादशाक्षौहिणीबलसमुदयः=एकादश या अक्षौहिण्यः, सेनापरिमाणविशेषाः ता एव बलानि सैन्यानि तेषां समुदयः सङ्घातः।

टिप्पणी—'त्रिहयं पञ्चपादातं यदेकरथकुञ्जरम्।
सैन्यं सा पत्तिरेतस्मात्त्रैगुण्यात् स्युर्यथाक्रमम्॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः।
अनीकिनीत्यनीकिन्यः पुनरक्षौहिणी दश॥"
—इति वैजयन्तीकोशः।

संस्कृत टीका—किमाहतुरित्यादि। एतच्च पृष्टयोः रङ्गमपृष्टयोः प्रतिवचनस्यानुवादभङ्ग्या प्रकाशनम्। इदमाकाशभाषितमित्युच्यते। यदाह दशरूपके—

'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्॥'

सदृशं=युक्तम्। तदागम्यतमित्यादीनि=आहूतागतान् द्रोणभीष्मादीन्

---

दुर्योधन—हे आर्य वैकर्ण एवं वर्षदेव ! बतलाइए—जो मेरी ग्यारह अक्षौहिणी सेना है, कौन इसका सेनापति होने योग्य है ? क्या आप लोग कहते हैं ? वस्तुतः यह विषय महत्त्वपूर्ण है। अतः मन्त्रणा करके ही इस सम्बन्ध में वक्तव्य दें।

यह उचित ही है। तो आइए, मन्त्रशाला [ सभाभवन ] में ही प्रवेश करें। आचार्य ! आपको मैं प्रणाम करता हूँ। आप मन्त्रशाला में प्रवेश

भवान् मन्त्रशालाम्। आर्यौ वैकर्णवर्षदेवौ! प्रविशतां भवन्तौ। भो भो. सर्वक्षत्रिया.! स्वैरं प्रविशन्तु भवन्तः। वयस्य! कर्ण! प्रविशामस्तावत्।

( प्रविश्य )

। आचार्य! एतत् कूर्मासनम्, आस्यताम्। पितामह! एतत् सिंहासनम्, आस्यताम्। मातुल! एतच्चर्मासनम्, आस्यताम्। आर्यौ वैकर्णवर्षदेवौ! आसातां भवन्तौ। भो भो. सर्वक्षत्रियाः! स्वैरमासतां भवन्त.। किमिति किमिति महाराजो नास्त इति। अहो सेवाधर्मः। नन्वयमहमासे। वयस्य कर्ण! त्वमप्यास्स्व। (उपविश्य)

---

प्रति सत्कारवाक्यानि। कूर्मासनम्=कूर्माकाराङ्कितम् आसनम्, स्वैरं=नि.शङ्कम्।

किमितीति। किमिति किमिति=कुतः कुतः, असितु शङ्कमानानिव सर्वक्षत्रियान् पश्यन् पृच्छति। शङ्कन्त इति क्रियाध्याहारः। तैरुक्तं शङ्काहेतुमनुवादमङ्गया प्रकाशयति—महाराज इत्यादि। अत्र इतिशब्दानन्तरं 'किं ब्रूथे'ति शेषः। सेवाधर्मः=सेव्यानुरोधसमुदाचारः, अनुपविष्टे सेव्ये अनुपवेशनलक्षण.। ननु=इति अनुनये। वयस्य=हे सखे!।

---

करें। पितामह! मैं आपको प्रणाम करता हूँ। आप मन्त्रशाला मे प्रवेश करें। मामा! आपका अभिवादन करता हूँ। आप मन्त्रशाला मे प्रवेश करें। आर्य वैकर्ण और वर्षदेव! आप दोनो भी प्रवेश करें। हे हे समस्त क्षत्रिय राजाओ! आप सब भी स्वेच्छापूर्वक [ शनै शनै ] प्रवेश करें। हे मित्र कर्ण! सब तो हम भी प्रविष्ट होएँ।

( प्रवेश करके )

आचार्य! यह कूर्मासन है इस पर आप बैठें। पितामह! यह सिंहासन है इस पर आप बैठिए। मामा! ( यह चर्मासन है इस पर आप बैठिए ) आर्य वैकर्ण और वर्षदेव! आप दोनो [ यथेच्छ ] बैठें। हे हे समस्त क्षत्रियगण! आप भी स्वेच्छापूर्वक बैठ जाइए। यह क्या? यह क्या? महाराज नहीं बैठेंगे अहो सेवाधर्म ( धन्य है )। अच्छा मैं भी यहीं बैठ

आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीबलसमुदय । अस्य कः सेनापतिर्भवितुमर्हतीति ।' किमाहतुर्भवन्तौ—अत्रभवान् गान्धारराजो वक्ष्यतीति । भवतु, मातुलेनाभिधीयताम् । किमाह मातुलः—अत्रभवति गाङ्गेये स्थिते कोऽन्य. सेनापतिर्भवितुमर्हतीति । सम्यगाह मातुलः । भवतु भवतु, पितामह एव भवतु । वयमप्येतदभिलपाम' ।

सेनानिनादपटहस्वनशङ्खनादै-
चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयै
सार्धं पतन्तु हृदयानि नराधिपानाम् ॥ ५ ॥

---

अत्रेत्यादि । अत्रभवान्=पूज्य, गान्धारराज.=शकुनि, गान्धाराणा राजा । 'राजाहस्सखिभ्यष्टच्' इति समासान्तः ।

अत्रभवतीत्यादि । गाङ्गेये=गङ्गाया अपत्यं पुमान् गाङ्गेयः भीष्मः । तस्मिन् । वयमपीत्यादि स्थाने 'अहमप्येनदभिलपामीति' क्वचित् पाठः ।

अन्वय.—चण्डानिलाहतमहोदधिनादकल्पै. सेनानिनादपटहस्वनशंखनादैः ( उपलक्षितै ) गाङ्गेयमूर्ध्निपतितै. अभिषेकतोयैः सार्धं नराधिपाना हृदयानि पतन्तु ॥ ५ ॥

---

जाता हूँ । मित्र कर्ण ! तुम भी यही बैठ जाओ ।

[ बैठकर ]

आर्य वैकर्ण और वर्षदेव ! बतलाइए-हमारी ग्यारह अक्षौहिणी सेना है, कौन इसका सेनापति होने योग्य है ? क्या कहा आप लोगो ने—माननीय गान्धार देश के राजा बतलाएँगे ? तो अच्छा मामा ही कहें । क्या कहा मामा ?—श्रीमान् गङ्गा तनय (=भीष्म) के होते हुए और कौन सेनापति होने के योग्य हो सकता है ?

मामा ने ठीक ही कहा । अच्छा, अच्छा, पितामह ही [सेनापति] होवें । हम भी यही चाहते है कि—

प्रचण्ड प्रभञ्जन [झंझावात] से विक्षुब्ध महासागर के समान सेना के

दरस्तव पुरुषोत्तम । स गोपालकस्तव पुरुषोत्तम । बार्हद्रथापहृत-विषयककीर्तिभोगस्तव पुरुषोत्तम । अहो पार्थिवासन्नमाश्रितस्य भृत्यजनस्य समुदाचार । सगर्वं खल्वस्य वचनम् । आ अपध्वस ।

काञ्चुकीय—प्रसीदतु महाराज । सम्भ्रमेण समुदाचारो विस्मृत । ( पादयो पतति ) ।

---

श्रीकृष्णस्य पुरुषोत्तमत्वविशेषण निसर्गद्वेषित्वादसहमान आह—मेत्यादि । मा तावदिति प्रतिषेधोऽनिष्टवचनविषय । किंशब्द आक्षेपे, कोपाद् द्विरुक्ति । आक्षेप्य तु पुरुषोत्तमत्वम् । तच्च विरुद्धधर्मोद्भावनया त्रि खण्डयति—१ कसभृत्य =कसस्य सेवक । २ दामोदर =दाम रज्जु उदरे यस्य निबद्ध चौर्यनिवारणाय जनन्या स, तथाभूत —आभ्या विशेषणाभ्या नीचवृत्तित्वम् आबालदुश्शीलत्व चोक्तम् । तव पुरुषोत्तम =त्वत्पक्षे पुरुषोत्तम । नीचवृत्ति दुश्शील च जन त्व पुरुषोत्तम मन्यसे, धिक् त्वमित्यभिप्राय । ३ गोपालक =आभीर । अनेन कुलहीनता सूचिता । बार्हद्रथापहृतविषयकीर्तिभोग =बार्हद्रथेन जरासन्धेन अपहृत विषयो देश कीर्तिर्भोगश्च यस्य स तथा । एनेन शौर्यहीनतोक्ता । पार्थिवासन्नम् आश्रितस्य =राजान्तिक सेवमानस्य, समुदाचार =व्यवहारक्रम , आ =इति कोपे । अपध्वस =नष्टो भव मदन्तिकात् मद्समापसरेत्यर्थ । अनुदात्तेत्त्व लक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदम् ।

प्रसीदत्वित्यादि । सम्भ्रमेण=त्वरया ।

---

[रस्सी से बाधा गया] दामोदर ही तुम्हारा पुरुषोत्तम है ? वह गौओं का पालक ही तुम्हारा पुरुषोत्तम है ? बृहद्रथ के पुत्र जरासन्ध ने जिसका राज्य कीर्ति और ऐश्वर्य छीन लिया था वया वही तुम्हारा पुरुषोत्तम है ? आश्चर्य है कि राजाओं के सन्निकट रहने वाले [ तुच्छ ] सेवकों का भी ऐसा [ अनुचित ] आचरण हो सकता है । यह वाणी तो बडी गर्वीली है । यहाँ से दूर हटो ।

काञ्चुकीय—महाराज प्रसन्न हो, महाराज प्रसन्न हो । हडबडाहट के कारण मैं अपने आचरण को भूल गया था । [ चरणों पर गिरता है ]

दुर्योधन —सम्भ्रम इति । आ. मनुष्याणामस्त्येव सम्भ्रमः । उत्तिष्ठोत्तिष्ठ ।

काञ्चुकीय.—अनुगृहीतोऽस्मि ।

दुर्योधनः—इदानीं प्रसन्नोऽस्मि । क एष दूत प्राप्त ।

काञ्चुकीय.—दूत. प्राप्त. केशव. ।

दुर्योधन —केशव इति । एवमेष्टव्यम् । अयमेव समुदाचार । भो भो राजान ! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्त । अर्घ्यप्रदानेन पूजयितव्य. केशव इति । न मे रोचते । ग्रहणमस्यात्र हित पश्यामि ।

---

सम्भ्रमेति । आ=इति स्मरणे । अमनुष्याणामिति पाठे मनुष्यभासानामित्यर्थः ।

इदानीमित्यादि । क एष =इति प्रश्नो न्याय्य समुदाचार भावयितुम् ।

केशव इति । एवम् एष्टव्य=निर्विशेषणनामधेयमात्रग्रहणलक्षण एव प्रकार एषतुमर्ह इत्यर्थः । किं युक्तम्=कीदृश सम्भावनमनुरूपम् । अर्घ्यदानेन=अर्घाय पूजायै हितम् अर्घ्यम् तस्य प्रदानेन न रोचते=अर्थात् पूजनम्; ग्रहण=बन्दीकरणम् ।

---

दुर्योधन—सम्भ्रम ! आह मनुष्य के आने से इतनी हड़बड़ाहट, उठो, उठो ।

काञ्चुकीय—अनुगृहीत हूँ ।

दुर्योधन—अब मैं प्रसन्न हूँ । कौन सा दूत आया है ?

काञ्चुकीय—केशव नामक दूत आया है ।

दुर्योधन—'केशव' यह, हाँ ऐसे कहना चाहिए । यही आचरण ठीक है । हे राजाओ ! दूत रूप में आए केशव के प्रति क्या [व्यवहार] उचित है ? आप लोगों ने क्या कहा कि अर्घ्यदान आदि से केशव का सम्मान करना चाहिए । यह मुझे पसन्द नहीं है । मैं तो उसे बन्दी बनाने में ही अपना हित समझता हूँ ।

ग्रहणमुपगते तु वासुभद्रे
हृतनयना इव पाण्डवा भवेयु ।
गतिमतिरहितेषु पाण्डवेषु
क्षितिरखिलापि भवेन्ममासपत्ना ॥ ६ ॥

अपि च योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण

---

टिप्पणी—एष्टव्य —इच्छार्थकस्य इष्धातोः तव्यत् प्रत्ययः ।

अन्वयः—ग्रहणमुपगते च वासुभद्रे पाण्डवा हृतनयना इव भवेयु । पाण्डवेषु गतिमति रहितेषु अखिलापि क्षितिः असपत्ना मम भवेत् ॥ ६ ॥

संस्कृत टीका—ग्रहणस्य हितत्वमुपपादयति—ग्रहणमिति । ग्रहण-मुपगते=ग्रहण बन्दीकरणम्, उपगते प्राप्ते सति वासुभद्रे=कृष्णे, पाण्डवा=युधिष्ठिरादय, हृतनयना इव=नेत्रहीना इव, हृतानि नयनानि येषा ते, विनष्टचक्षुषः इव यथा स्यात् तथा, भवेयु=स्यु । पाण्डवेषु= पाण्डुपुत्रेषु सत्सु गतिमतिरहितेषु=गतिश्च मतिश्च तयोः रहिता, तेषु पथप्रदर्शकबुद्धिदातृरहितेषु, अथवा गत्या शरणेन कृष्णात्मना मत्या कृष्णदीय-मानया बुद्धया च रहितेषु सत्सु अखिलापि=समस्तापि, क्षिति=भूमि, मम=दुर्योधनस्य, असपत्ना=विपक्षरहिता, निश्शत्रु सती वा, भवेत्= स्यात् । मार्गविना शत्रूणामसहायतया युद्धेऽनुद्योगात् प्राणपरित्यागाद् वेति भावः । अथवा, मम भवेत्=ममैव भवेत्, मदेकस्वामिका भवेत् । पुष्पिताग्रा-वृत्तम् ॥ ६ ॥

टिप्पणी—वासुभद्रे–वासुदेवनामैकदेशस्य वासुशब्दस्य सौम्यार्थकभद्र पदयुक्तस्याय प्रयोगः, रामभद्रवत् । यद्वा, 'विनापि प्रत्ययं पूर्वोत्तरपदवत्तव्य' इतिपाणिनिशासनात् वासुपद वासुदेवपदबोधकमिति विवेक ।

संस्कृत टीका—प्रत्युत्थानमात्रेणापि कृष्ण सम्भावयितुर्दण्डमा-

---

वासुदेव के बन्दी बन जाने पर पाण्डव नेत्र-हीन से हो जायँगे और उनके [शारीरिक] गति एव मति से हीन हो जाने पर यह समग्र पृथ्वी मेरे लिए शत्रुहीन हो जायगी ॥ ६ ॥

और भी, जो यहाँ केशव के सम्मान मे खड़ा होगा । वह बारह स्वर्ण-

दण्ड्यः। तदप्रमत्ता भवन्तु भवन्तः। को नु खलु ममाप्रत्युत्थानस्योपायः। हन्त दृष्ट उपायः। बादरायण ! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम्। (अपवार्य) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य।

काञ्चुकीयः—यदाज्ञापयति महाराज। (निष्क्रम्य प्रविश्य) जयतु महाराजः। अयं स चित्रपटः।

दुर्योधनः—ममाग्रतः प्रसारय।

---

विवृति—अपि चेत्यादि। अत्र = सभामध्ये। प्रत्युपास्यति = प्रत्युत्थानसमुदाचारमनुष्ठास्यति। द्वादशसुवर्णभारेण = सुवर्णः कर्षः द्वादशकर्षात्मको नाणकविशेषो द्वादशसुवर्णं इति व्यपदिष्टः, द्वादशसुवर्णानां भारः पलसहस्रद्वयं द्वादशसुवर्णभारः, तेन, दण्ड्यः = दण्डयितुं योग्यः, दण्डनीय इत्यर्थः। महतो दण्डस्य विधानं प्रत्युत्थानस्य महापराधत्वबोधनार्थम्। प्रत्युत्थातुः परस्य विहितदण्डोऽपि कृष्णसम्मुखदर्शने अप्रत्युत्थानमात्मना कर्तुमशक्यं मन्यमानश्चिन्तयति—कोन्वित्यादि। चित्रपटः = आलेख्यपटः, ननु = इति सम्भ्रमे, तस्मिन् = चित्रपटे, एवञ्च कृष्णदर्शनच्छद्मना प्रत्युत्थानं परिहरिष्यामीत्यभिप्रायः।

ममेत्यादि। प्रसारय = विस्तारय, अर्थात् चित्रपटम्। अहो इत्यादि। एष = आलिखितः, दुःशासनः, कैशहस्ते = कचकलापे।

टिप्पणी—द्वादशसुवर्ण०—'सुवर्णो ना स्वर्णकर्षे' इति मेदिनी। 'भारः

---

मुद्रा के दण्ड के योग्य होगा। अतः आप लोग सावधान रहें। [स्वगत] मेरे न उठने का कौन सा उपाय हो सकता है ? ठीक है, एक उपाय सूझा। [प्रकट में] अरे बादरायण ! वह चित्रपट तो ले आओ जिसमें द्रौपदी का चीरहरण चित्रित किया गया है। [हटाकर] उसी पर दृष्टि जमाकर केशव के आने पर भी नहीं उठूँगा।

काञ्चुकीय—महाराज की जो आज्ञा। [निकलकर और फिर पुनः प्रवेश करके] महाराज की जय हो। यह वह चित्रपट है।

दुर्योधन—इसे मेरे समक्ष फैला दो।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (प्रसारयति)

दुर्योधन—अहो दर्शनीयोऽय चित्रपट। एष दु.शासनो द्रौपदीं केशहस्ते गृहीतवान्। एषा खलु द्रौपदी,—

दु.शासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते॥ ७॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्ष सभास्तम्भ तुलयति। एष युधिष्ठिर,

---

सहस्रद्वितय पलाना च गरिम्ण च' इति यादवः।

अन्वय —दु शासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना (द्रौपदी) राहुवक्त्रान्तरगता चन्द्रलेखा इव शोभते॥ ७॥

संस्कृत टीका—(एषा द्रौपदी) दु शासनपरामृष्टा=दुश्शासनकरगता, दुश्शासनेन-दुर्योधनकनिष्ठभ्रात्रा, परामृष्टा=केशाकृष्टा सती, सम्भ्रमोत्फुल्ललोचना=सम्भ्रमेण सवेगेन उत्फुल्ले अति विकसिते लोचने यस्या' सा, सक्षुभितविकसितनेत्रा, राहुवक्त्रान्तरगता=राहोः वक्त्रं तस्य अन्तरगता=राहुवदनमध्यप्राप्ता, चन्द्रलेखा=चन्द्रस्य, लेखा, इन्दुकला, इव=यथा, शोभते=प्रतिभाति॥ ७॥

संस्कृत टीका—एष इत्यादि। भीम =भीमसेन, सर्वराजसमक्षं=सर्वराजानां सर्वेषां राज्ञां प्रत्यक्ष यथा भवति तथा। प्रवृद्धामर्ष=सवृद्धकोप.,

---

काञ्चुकीय—जो महाराज की आज्ञा। [फैला देता है]

दुर्योधन—अहा! यह चित्रपट वस्तुत दर्शनीय है। यह दु शासन है, जिसने द्रौपदी के केशो को हाथो मे पकड रक्खा है। यह द्रौपदी है जो—

दु शासन से आक्रान्त होने पर भय से नेत्र विस्फारित किए हुए इस समय मानो राहु के जबडे मे फसी हुई चन्द्रकला के समान शोभा पा रही है॥ ७॥

यह दुरात्मा भीम है जो अखिल राजसमूह के सामने अपमानित होती हुई द्रौपदी को देखकर प्रचण्ड क्रोध मे भरकर मन्त्रशाला के स्तम्भ को उखाड़ने की चेष्टा मे है। यह युधिष्ठिर है जो,

सत्यधर्मघृणायुक्तो ,द्यूतविभ्रष्टचेतनः ।
करोत्यपाङ्गविक्षेपैः शान्तामर्षं वृकोदरम् ॥ ८ ॥

एष इदानीमर्जुनः,

रोषाकुलाक्षः स्फुरिताधरोष्ठ-
स्तृणाय मत्वा रिपुमण्डलं तत् ।
उत्सादयिष्यन्निव सर्वराज्ञः
शनैः समाकर्षति गाण्डिवज्याम् ॥ ९ ॥

---

तुलयति = चलयति । यद्वा, उन्मिमीते = उन्मानमिह तारतम्यपरीक्षणं, किमनेन स्तम्भेन शत्रून् प्रहरेयं किममुना स्तम्भेनेति तत्सारफल्गुता दृष्ट्या पर्यालोचयतीत्यर्थः , युधिष्ठिरः = धर्मसूनुः ।

अन्वयः—सत्यधर्मघृणायुक्तो द्यूतविभ्रष्टचेतनः ( युधिष्ठिरः ) अपाङ्गविक्षेपैः वृकोदरं शान्तामर्षं करोति ॥ ८ ॥

संस्कृत टीका — सत्यधर्मघृणायुक्त = घृणा अकार्यविषया जुगुप्सा, सत्यश्च धर्मश्च घृणा च ताभिः युक्तः, सत्यधर्मदयासहितः, द्यूतविभ्रष्टचेतनः = द्यूतेन अक्षक्रीडया तन्निमित्तपराजयेनेत्यर्थः, विभ्रष्टा = नष्टा, चेतना संविद् यस्य सः, एवभूतः एषः विश्रुतगतः, युधिष्ठिरः, अपाङ्गविक्षेपैः = सेङ्गितैः कटाक्षावलोकनैः, अपाङ्गानां—कटाक्षाणां विक्षेपाः— प्रक्षेपाः तैः, वृकोदरं = भीमं, वृकः—वृकनामाग्निः, उदरे जठरे, यस्य तम्, शान्तामर्षं = शान्तः–उपशमितः, अमर्षः क्रोधः यस्य तम्, शमितकोपं, करोति = विदधाति ॥ ८ ॥

टिप्पणी—घृणा—'घृणा जुगुप्साकृपयोः' इति मेदिनी ॥ ८ ॥

अन्वयः—रोषाकुलाक्षः स्फुरिताधरोष्ठः अर्जुनः तत् रिपुमण्डलं तृणाय मत्वा सर्वराज्ञः उत्सादयन्निव शनैः गाण्डिवज्यां समाकर्षति ॥ ९ ॥

---

सत्य, धर्म और दया से युक्त होकर भी जूए के खेलने से मतिभ्रष्ट हो, आँखों के इशारे से ही भीम के क्रोध को शान्त कर रहा है ॥ ८ ॥

और, अब यह अर्जुन है, जिसके—

नेत्र क्रोध से व्याकुल हो रहे हैं, अधरोष्ठ ( क्रोध के कारण ) फड़क रहे

एप युधिष्ठिरोऽर्जुनं निवारयति। एतौ नकुलसहदेवौ,
कृतपरिकरवन्धौ चर्मनिस्त्रिंशहस्तौ
परुपितमुखरागौ स्पष्टदष्टाधरोष्ठौ।

---

संस्कृत टीका—क्रमश अर्जुनमपि विशिनष्टि—रोपाकुलेत्यादिना। रोपाकुलाक्ष.—रोपेण क्रोधेन आकुले व्याप्ते, अक्षिणी—नेत्रे यस्य स:, स्फुरिताधरोष्ठ = अधरोष्ठ:-अधरदन्तच्छद येन स, एव: अर्जुन:, तत् = तत्कालीनं, रिपुमण्डलं = रिपूणा मण्डलं, शत्रुराजकं, तृणाय मत्वा = अकिञ्चित्कर ज्ञात्वा, तृणमिवानादृत्येत्यर्थ., सर्वराज्ञ.—सर्वे च ते राजान. सर्वराजान:, तान्, सर्वान् द्रौपदीपरिभवस्य कर्तृन् अनुमन्तॄन् द्रष्टृश्च नृपान्, उत्सादयन्निव = ध्वंसयिष्यन्निव, शनै: = मन्द यथा स्यात् तथा, गाण्डिवज्या = गाण्डिवाख्यस्य चापस्य मौर्वीम्, समाकर्षति = सम्यक् प्रकारेण आकर्षणं करोति ॥ ९ ॥

टिप्पणी—तृणाय—'मन्यकर्मण्यनादरे' इति चतुर्थी। सर्वराज्ञ.—'राजाहस्सखिभ्य.' इति समासान्तस्याकरणमनित्यत्वात्। 'सर्वराजान्' इत्येव क्वचित् पाठ.। उत्सादयन्निव—उद् + सद् + णिच् + लृट् (शतृ प्रत्यय:), 'लृट: सद्वा' इति लृट: शत्रादेश: प्रकृत्यर्थस्य समाकर्षणक्रियां प्रति फलत्वविवक्षया। (क) अत्र उत्प्रेक्षालङ्कार:। (ख) उपजातिवृत्तम् ॥ ९ ॥

संस्कृत टीका—एप इत्यादि। निवारयति = अर्थात् युद्धोद्यमात्।

अन्वय:—कृतपरिकरबन्धौ चर्मनिस्त्रिंशहस्तौ परुपितमुखरागौ स्पष्ट-

---

हैं, और जो समस्त राजमण्डल को तृणवत् समझ रहा है, उन सब राजाओं को नष्ट भ्रष्ट कर देने की इच्छा से धीरे-धीरे गाण्डीव की डोरी को खींच रहा है ॥ ९ ॥

यह युधिष्ठिर अर्जुन को रोक रहा है। यह दोनो नकुल और सहदेव हैं—

जिन दोनो ने कमर कस ली है और जिन दोनों ने ढाल और तलवार संभाल ली है, जिन दोनो के मुंह कठोर वर्ण अर्थात् रक्त वर्ण के हो रहे हैं

विगतमरणशङ्कौ सत्वरं भ्रातरं मे
हरिमिव मृगपोतौ तेजसाभिप्रयातौ ॥ १० ॥

एष युधिष्ठिर कुमारावुपेत्य निवारयति—

---

दष्टाधरोष्ठौ विगतमरणशङ्कौ सत्वरं मे भ्रातरं मृगपोतौ हरिमिव तेजसा अभिप्रयातौ ॥ १० ॥

संस्कृत टीका—कृतपरिकरबन्धौ=कृत परिकरबन्धः प्रगाढगात्रबन्धः याभ्यां तौ, चर्मनिस्त्रिंशहस्तौ=चर्मनिस्त्रिंशौ फलकखड्गौ हस्तयोर्ययोस्तौ—फलकखड्गौ पाणौ, पल्लवितमुखरागौ=पल्लवितः परुषो रक्षः कृतः मुखरागो मुखप्रकाशो ययोस्तौ—ताम्राननौ, स्पष्टदष्टाधरोष्ठौ=स्पष्टं दन्तेन दष्टः अधरोष्ठः ययोस्तौ—चर्विताधरोष्ठौ, विगतमरणशङ्कौ=विगता विनष्टा मरणस्य मृत्योः शङ्का सन्देहः ययोस्तौ, सत्वरं, मे=मम दुर्योधनस्य, भ्रातरं=दुःशासनम् मृगपोतौ=हरिणडिम्भौ, मृगस्य पोतः तौ हरिमिव=सिंहमिव, तेजसा=वीर्येण, अभिप्रयातौ=प्रत्यवस्थितौ। अत्र मृग-पोतोपमया नकुलसहदेवयोरभियानस्योपहास्यत्वं द्योतितम्। उपमालङ्कारः। मालिनीवृत्तम् ॥ १० ॥

टिप्पणी—तु० 'न व्याघ्रं मृगशिशवः प्रधर्षयन्ति। (प्रतिमा० ५।१८), यथ लम्बसटः सिंहो मृगेण विनिपात्यते (अभिषेक० ३ २०)। सत्वरम्—त्वरया सह वर्तते सत्वरम्—शीघ्रमेव। चर्म०—चर्म च निस्त्रिंशश्च चर्मनिस्त्रिंशौ (द्व० स०) चर्मनिस्त्रिंशौ हस्तयोः ययोः तौ (बहु०)। निस्त्रिंश—निर्गतः त्रिंशद्भ्योऽङ्गुलिभ्य इति निस्+त्रिंशद्+डच ॥ १० ॥

---

और जो अपने अधरोष्ठ को स्पष्ट रूप से दाँतों से दबाए हुए उसी प्रकार मरण भय की चिन्ता से रहित ये मृगशावक अपने तेज से मेरे भाई पर शीघ्रता से आक्रमण कर रहे हैं जैसे हरिण के बच्चे सिंह पर ॥ १० ॥

यह युधिष्ठिर दोनों कुमारों के पास जाकर उन्हें रोक रहा है।

नीचोऽहमेव विपरीतमति कथं वा
रोषं परित्यजतमद्य नयानयज्ञौ।
द्यूताधिकारमवमानममृष्यमाणा
सत्त्वाधिकेषु वचनीयपराक्रमा स्यु ॥ ११ ॥

---

अन्वय — विपरीतमति, नीच कथम् अद्य नयानयज्ञौ रोषं परित्यजतम्, द्यूताधिकारम् अवमानम् अमृष्यमाणा सत्त्वाधिकेषु वचनीयपराक्रमा स्यु. ॥ ११ ॥

संस्कृत टीका—नकुलसहदेवौ निवारयता धर्मजेन सभाया पुरा यदुक्तं वाक्य, तत् प्रकृतानुगुण्यात् स्मरति—नीच इति। विपरीतमति =विपरीता आत्मयोगक्षेमप्रतिकूला मति द्यूतगोचरा यस्य स तथाभूत, अहमेव= युधिष्ठिर एव, नीच = अधम. भवामीति शेषः। वा=अन्यथाशब्दार्थे, नीचत्वाभावे इत्यर्थ, कथ=केन हेतुना, अद्य=इदानी, द्यूतपराजितसमुदाचारानुष्ठानयोग्येऽस्मिन् समये इत्यर्थः। नयानयज्ञौ=नयम् अनयञ्च जानीत', द्यूतनीत्यनीतिवेदिनौ, युवा, रोष=क्रोध, परित्यजत=परिजहीतं, द्यूत विजितैर्नामिदृश परिभवः सोढव्य एव, न तु पराक्रमेण सद्य प्रतिकर्तुं योग्य इति भाव.। पराक्रमेण को दोषस्तत्राह—द्यूताधिकारं=द्यूतस्य-कैतवस्य अधिकार—क्रीडासामर्थ्यम्, द्यूतेन अधिक्रियते प्रस्तूयत इति द्यूताधिकार', त द्यूतनिमित्तकमित्यर्थ, अवमानम्=अपमानम्, अमृष्यमाणा =असहमाना, अर्थात् विक्रमेण प्रतिकर्तुं सद्यो व्यवस्यन्त पुरुषाः, सत्त्वाधिकेषु= सत्त्वं पराक्रम तेनाधिकेषु महापराक्रमशालिषु मध्ये, वचनीयपराक्रमाः= वचनीय' अकालप्रयोगान्निन्द्य पराक्रम. विक्रमो येषां ते तथोक्ता; स्युः=( केन प्रकारेण ) भवेयु.। वसन्ततिलका छन्द ॥ ११ ॥

---

मैं ही नीच हूँ नही तो मेरी मति विपरीत कैसे हो जाती। तुम दोनो नीति और अनीति को जानते हो अत. आज रोष को त्याग दो। अन्यथा द्यूतजन्य अपकार को न सहने के कारण हम लोग ही अधिक पराक्रमशील लोगो के द्वारा निन्दनीय पराक्रम वाले माने जायेंगे ॥ ११ ॥

इति। एष गान्धारराजः,

अक्षान् क्षिपन् स कितवः प्रहसन् सगर्वं
सङ्कोचयन्निव मुदं द्विषतां स्वकीर्त्या।
स्वैरासनो द्रुपदराजसुतां रुदन्तीं
काक्षेण पश्यति लिखत्यपि गां नयज्ञः ॥ १२ ॥

---

अन्वयः—कितवः स अक्षान् क्षिपन् सगर्वं प्रहसन् स्वकीर्त्या द्विषतां मुदं सङ्कोचयन्निव स्वैरासनः (सन्) रुदन्तीं द्रुपदराजसुतां काक्षेण पश्यति नयज्ञः स गामपि लिखति ॥ १२ ॥

संस्कृत टीका—गान्धारराजं विशिनष्टि—अक्षानिति। कितवः=द्यूत, स =शकुनि, अक्षान्=पाशकान्, क्षिपन्=प्रसारयन्, सगर्वं=गर्वेण सहितं सदर्पं, प्रहसन्=हास्यं कुर्वन्, स्वकीर्त्या=स्वस्य कीर्तिः तया, आत्मयशसा अक्षदेवननैपुण्यजन्मना, द्विषतां=शत्रूणां, पाण्डवानां, मुदं=हर्षं, मोदनम् इति मुद् ताम्, सङ्कोचयन्निव=निवारयन्निव, स्वैरासनः=स्वैरं स्वच्छन्दम् आसनम्—उपवेशनस्थानं यस्य सः, यद्वा—स्वच्छन्दम् अगणितगुरुजनसान्निध्यम् आसनम् उपवेशप्रकारो यस्य स, स्वच्छन्दोपविष्टः सन्, रुदन्तीं=अश्रुमुञ्चन्तीम्, द्रुपदराजसुता=द्रुपदानां राजा, तस्य सुता, ताम्—द्रुपराजकुमारीं द्रौपदीं, काक्षेण=अपाङ्गेन, अक्षिकोणेन, पश्यति=अवलोकयति, नयज्ञः=नीतिज्ञः, सः=मम मातुलः, शकुनिरित्यर्थः, गामपि=(कुत्सितेन पाशकेन) भूमिं, लिखति च=उट्टङ्कयति ॥ १२ ॥

टिप्पणी—काक्षेण—अक्षिकोणेन पश्यति। अत्रगणपतिशास्त्रिणः—

---

यह गान्धारराज हैं,

जो जुए में तथा कूटनीति में कुशल गर्व के साथ हँसते हुए, पासों को फेंकते हुए तथा अपनी कीर्ति से शत्रुओं के हर्ष को सकुचित करते हुए अपने आसन पर बैठे-बैठे रोती हुई द्रौपदी को तिरछी दृष्टि से देखता है और पृथ्वी पर (पांसे से) रेखा भी खींच रहा है (अथवा अपनी कुत्सित दृष्टि से पृथ्वी पर रेखाएँ खींच रहा है) ॥ १२ ॥

एतावाचार्यपितामहौ ता दृष्ट्वा लज्जायमानौ पटान्तान्तर्हितमुखौ स्थितौ। अहो अस्य वर्णाढ्यता। अहो भावोपपन्नता। अहो युक्त लेखता। सुव्यक्तमालिखितोऽयं चित्रपट। प्रीतोऽस्मि। कोऽत्र।

काञ्चुकीय —जयतु महाराज।

दुर्योधन —बादरायण! अनीयता स विहगवाहनमात्रविस्मितो दूत।

---

'अक्षम् इन्द्रिय तच्च प्रकृतेऽक्षिरूपम्। ईषदक्ष काक्षम्, 'ईषदर्थे' पा० सू० ६ ३ १०५ इति को कादेश।' लिखत्यपि मां—अत्र 'लिखत्यभिख' इत्यव पाठ। सम्मुखस्यमाकाशमित्यर्थ, आकाशे दृष्टिं स्थाप्य स्वाभिप्राय निश्चिनोतीवेति भाव। नयश्च—'नयौ नीतिद्यूतविशेषयो' इति मेदिनी॥ १२॥

संस्कृत टीका—ता=द्रौपदीमित्यर्थ, लज्जायमानौ=लज्जामनुभवन्तौ। पटान्तान्तर्हितमुखौ=वस्त्राप्रच्छन्नवदनौ, अहो=इति श्लाघायाम्, अस्य=चित्रपटस्य, वर्णाढ्यता=वर्णसम्पन्नता, भावोपपन्नता=भावेन स्वभावेन आलेखनीयवस्तुगतेन, चित्रकाराभिप्रायेण वा उपपन्नता सवादिता युक्तलेखता=युक्त अन्यूनानतिरिक्त लेखो रेखन यस्मिन् स युक्तलेख तस्य भावस्तत्ता लेखौचित्यम्।

बादरायणेत्यादि। विहगवाहनमात्रविस्मित=विहग पक्षी गरुड तद्रूप वाहन तन्मात्रेण विस्मित गर्वित, दूत=सन्देशहर, कृष्ण इति

---

यह हैं आचार्य और पितामह जो द्रौपदी को देखकर लज्जित होते हुए वस्त्रों मे मुँह छुपाये हुए हैं। इस चित्र के रगो की श्रेष्ठता प्रशसनीय है, अभिव्यञ्जना और समुचित चित्रकारी (कितनी प्रभावमयी है) कितनी भावो की सुस्पष्टता है इस चित्रपट मे! मैं प्रसन्न हो गया हूँ। कोई है यहाँ?

कञ्चुकी—महाराज की जय हो।

दुर्योधन—बादरायण! उस दूत को ले आओ जिसका वाहन पक्षी (गरुड) है और जो आश्चर्यान्वित हो रहा है।

काञ्चुकीय —यदाज्ञापयति महाराज । ( निष्क्रान्त )

दुर्योधन —वयस्य कर्ण !

प्राप्त किलाद्य वचनादिह पाण्डवाना
दौत्येन भृत्य इव कृष्णमति स कृष्ण ।
श्रोतु सखे ! त्वमपि सज्जय कर्ण ! कर्णौ
नारीमृदूनि वचनानि युधिष्ठिरस्य ॥ १३ ॥

---

यावत् ।

टिप्पणी—पटान्तान्त०—पटस्य वस्त्रस्य अन्तेन अञ्चलेन अन्तर्हिते आच्छादिते मुखे याभ्या तादृशौ । वर्णाढ्यता—वर्णाना रञ्जकद्रव्याणाम् आढ्यता सम्पन्नता । वर्णस्य आढ्यता ( ष० त० ) । आढ्यता—आ+ध्यै+क=आढ्य, तस्य भाव आढ्यता, आढ्य+तल् । भावोपपन्नता—भावेन उपपन्नता ( तृ० त० ) । उपपन्न —उप+पद्+क्त, उपपन्न तस्य भावे तल् । विहग०—विहायसा गच्छतीति विहग ( गम्+ड ) स एव वाहन यस्य विहगवाहनम् ( कर्म० ), तदेव विहगवाहनमात्र ( नित्य० ), तेन विस्मित ( तृ० त० ) ।

अन्वय —अद्य इह कृष्णमति स कृष्ण पाण्डवानां वचनात् दौत्येन भृत्य इव प्राप्त किल । हे सखे ! कर्ण त्वमपि नारीमृदूनि युधिष्ठिरस्य वचनानि श्रोतु कर्णौ सज्जय ॥ १३ ॥

संस्कृत टीका—अद्य=सम्प्रति, स कृष्णमति =मलिनबुद्धि , कृष्णा कलुषिता मति बुद्धि यस्य स स =प्रसिद्ध कृष्ण =वासुदेव , पाण्डवाना=पाण्डुपुत्राणां, वचनात्=वचसा, दौत्येन=दूतस्य भाव , तेन

---

कञ्चुकी—जैसी महाराज की आज्ञा । (प्रस्थान)

दुर्योधन—मित्र कर्ण !

पाण्डवों के कहने पर यह कृष्ण बुद्धि कृष्ण यहाँ दूत बनकर सेवक के समान आया है । अत हे कर्ण, तुम भी नारियों के समान कोमल युधिष्ठिर की वाणी को सुनने के लिये अपने कानों को तैयार रखो ॥ १३ ॥

( ततः प्रविशति वासुदेवः काञ्चुकीयश्च । )

वासुदेव —अद्य खलु धर्मराजवचनाद् धनञ्जयाकृत्रिममित्रतया चाहवदर्पमनुक्तग्राहिणं सुयोधनं प्रति मयाप्यनुचितदौत्यसमयोऽनुष्ठितः । अद्य च,

---

दूतकार्येण, भृत्यः इव = दासः इव, प्राप्तः, किल = सम्प्राप्तः, अतः हे सखे ! = मित्र ! कर्ण = राधेय, त्वमपि = भवानपि, युधिष्ठिरस्य = पाण्डवज्येष्ठस्य, नारीमृदूनि = स्त्रीवचनविकलवानि, नारी इव मृदूनि, वचनानि = स्त्रीवत् कोमलानि वचांसि, श्रोतुं = आकर्णयितुं, कर्णौ = निजश्रोत्रे, सज्जय = प्रसञ्जय । अत्र उपमालङ्कारः । वसन्ततिलकावृत्तम् ॥ १३ ॥

टिप्पणी—कृष्णमतिः—कृष्णा मतिर्यस्य सः (बहु०) । भृत्यः--बिभर्ति इति भृत्यः—भृ + क्यप्—तुक् च । दौत्येन—दूतस्य भावः दौत्यम्—दूत + ष्यञ् । नारीमृदूनि—नार्याः वचनानि इव मृदूनि (मध्यमपद०) ॥ १३ ॥

संस्कृत टीका—धर्मराजवचनात् = धर्मराजस्य युधिष्ठिरस्य वचनात्, धनञ्जयाकृत्रिममित्रतया च = धनञ्जयस्य अर्जुनस्य अकृत्रिमं निरुपाधिकं मित्रं सुहृद् तस्य भावस्तत्ता (स्वाभाविकी मित्रता), तथा च, आहवदर्पम् = आहवे युद्धे दर्पः अहङ्कारो यस्य तम्, अनुक्तग्राहिणम् = उक्तावधीरिणम्, मयापि, अनुचितदौत्यसमयः अनुष्ठितः = अननुष्ठितपूर्वानुचितकर्मणापि कृतः, समयशब्द आचारे सङ्केते वा ।

टिप्पणी — आहवदर्पम्—आह्वयन्तेऽरयोऽत्र इति आहवः रणः, आहवस्य दर्पः यस्य तम् ( बहु० ), आ + ह्वे + अप् ( सम्प्रसारणे गुण ), दृप् + घञ् = अच् वा । अनुक्तग्राहिणं—उक्तं न गृह्णाति उक्तं अवधीरयति इति अनुक्तग्राही तम् । सुयोधनम्--सुखेन युध्यतेऽसौ, सुयो-

---

( तब वासुदेव और कञ्चुकी प्रवेश करते हैं )

वासुदेव—धर्मराज युधिष्ठिर के कहने पर और धनञ्जय ( अर्जुन ) की सच्ची मित्रता के कारण मैं आज समराभिमानी और दूसरों की बात न मानने वाले दुर्योधन के पास अनुचित दूतकार्य के लिए आया हूँ ।

कृष्णापराभवभुवा रिपुवाहिनीभ—
कुम्भस्थलीदलनतीक्ष्णगदाधरस्य ।
भीमस्य कोपशिखिना युधि पार्थपत्रि—
चण्डानिलैश्च कुरुकानन विनष्टम् ॥ १४ ॥

---

युद्ध—युध् + क्विप्, सप्तमी। अनुचितदोहलसमयः—न उचित अनुचितः दोहदस्य समयः आचारः, दोहदसमयः (ष० त०) अनुचितः। अनुष्ठित—अनु + स्था + क्त।

अन्वय—कृष्णापराभवभुवा रिपुवाहिनीभकुम्भस्थलीदलनतीक्ष्णगदाधरस्य भीमस्य कोपशिखिना पार्थपत्रिचण्डानिलैश्च कुरुकानन युधि विनष्टम् ॥ १४ ॥

संस्कृत टीका—कृष्णापराभवभुवा=कृष्णायाः द्रौपद्याः पराभवः तिरस्कारः, तस्मात् भूः उत्पत्तिः तेन, द्रौपदीतिरस्कारसमानोत्पन्नेन रिपुवाहिनीभकुम्भस्थलीदलनतीक्ष्णगदाधरस्य=रिपुवाहिनीभाना रिपुवाहिनी, रिपुसैन्यं, तत्रत्यानाम् इभानां गजानां कुम्भस्थल्याः मस्तकपिण्डस्य दलने पातने तीक्ष्णा निर्दया या गदा आयुधविशेषः तस्याः धरस्य धारयितु भीमस्य=वायुपुत्रस्य, कोपशिखिना=कोपाग्निना, कोप एव शिखी, तेन क्रोधवह्निना, पार्थपत्रिचण्डानिलैश्च=पार्थस्य अर्जुनस्य पत्रिणः बाणा एव चण्डानिलाः=तीक्ष्णवायवः, तैश्च, अर्जुनबाणरूपैश्चण्डमारुतैश्च, कुरुकानन=कुरवः एव कुरुमेव वनो बहुशाखत्वात् वनं, तस्य वनम्, कौरवारण्यम्, युधि=संग्रामे, महाभारते, विनष्टम्=नाशं प्राप्तम् पश्यामीति शेषः। भाविन्येनाभिमतस्य विनाशस्य भूतत्ववचनम् अचिरात्तदुत्पत्तिज्ञापनार्थम्। अत्र साङ्गरूपकालङ्कारः। वसन्ततिलकावृत्तम् ॥ १४ ॥

---

द्रौपदी के अपमान से उत्पन्न होने वाली, शत्रु की सेना के गजराजों के गण्डस्थलों को विदीर्ण करने वाली तीक्ष्ण गदा का धारण करने वाले भीम की क्रोधाग्नि से तथा अर्जुन के बाणों की प्रचण्ड वायु के झोंकों से युद्ध में कुरुवनकानन नष्ट हो जायगा ॥ १४ ॥

इद सुयोधनशिबिरम्। इह हि.—

आवासा पार्थिवाना सुरपुरसदृशा स्वच्छन्दविहिता
विस्तीर्णा शस्त्रशाला बहुविधकरणै शस्त्रैरुपचिता।
हेषन्ते मन्दुरास्थास्तुरगवरघटा बृहन्ति करिण
ऐश्वर्यं स्फीतमेतत् स्वजनपरिभवादासन्नविलयम् ॥ १५ ॥

---

टिप्पणी—वाहिनी—वाह अस्ति अस्या इति, वाह + इनि + ङीप। कोपशिखिना—शिखा अस्यास्तीति शिखी (शिखा+इनि), कोप एव शिखी अग्नि कोपशिखी, तेन। पार्थ—पृथाया अपत्य पुमान्, पार्थ—पृथा+अण्। पत्र पक्ष अस्यास्तीति पत्री (पत्र+इनि)। चण्डानिला—चण्डाश्च ते अनिला चण्डानिला ॥ १४ ॥

अन्वय—सुरपुरसदृशा स्वच्छन्दविहिता पार्थिवाना आवासा बहुविधकरणै शस्त्रै उपचिता विस्तीर्णा शस्त्रशाला मन्दुरस्था, तुरगवरघटा हेषन्ते करिण बृहन्ति एतत् स्फीत ऐश्वर्य स्वजनपरिभवात् आसन्नविलयम् दृश्यते ॥ १५ ॥

संस्कृत टीका—सुरपुरसदृशा = अमरपुरतुल्या, सुराणा देवाना पुराणि नगराणि तै सदृशा तुल्या, स्वच्छन्दविहिता = स्वतन्त्रनिर्मिता, स्वच्छन्देन स्वेच्छया विहिता निर्मिता, पार्थिवाना = पृथिव्या ईश्वरा, तेषा नृपाणाम्, आवासा = निवासस्थानानि बहुविधकरणै = बहुप्रकारसाधनै, शस्त्रै = आयुधै, उपचिता = वृद्धिङ्गता, विस्तीर्णा = विशाला शस्त्रशाला = शस्त्राणाम् आयुधाना शाला गृहाणि, आयुधागाराणि, मन्दुरस्था = मन्दुराया वाजिशालाया अश्वशालास्था, तुरगवरघटा = अश्वश्रेष्ठ

---

यह सुयोधन की छावनी है। यहाँ पर राजाओ के निवास स्थान अमरावती के समान स्वच्छन्द बने हैं। विशाल शस्त्रशाला अनेक प्रकार के शस्त्रो से सगृहीत है। अश्वशाला मे श्रेष्ठ अश्व हिनहिना रहे हैं और गजशाला मे गजराज चिग्घाड रहे हैं। यह विशाल वैभव केवल आत्मीयजनो के अनादर करने के कारण ही नष्ट होने के कगार पर है ॥ १५ ॥

भो !

दुष्टवादी गुणद्वेषी शठः स्वजननिर्दयः ।
सुयोधनो हि मां दृष्ट्वा नैव कार्यं करिष्यति ॥ १६ ॥

---

समूहाः, हेषन्ते=शब्दायन्ते, ह्रेषन्ते, करिणः=गजाः, बृंहन्ति=गर्जन्ति, एतत्=पुरतो दृश्यमानम्, स्फीतम्=प्रवृद्धम् ऐश्वर्यम्=गृहतुरगादिवैभव-मित्यर्थः, स्वजनपरिभवात्=स्वजनानां स्वबन्धूनां परिभवः तिरस्कारः, तस्मात् कुटुम्बानादरात्, आसन्नविलयम्=आसन्नो विलयो यस्य तत्, विनाशोन्मुखं, दृश्यते इति शेषः । अत्र उपमालङ्कारः । सुवदनावृत्तम् । तल्लक्षणम्—ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना ॥ १५ ॥

टिप्पणी—मन्दुरस्थाः—'वाजिशाला तु मन्दुरा' इत्यमरः । तुरगवर-घटाः—तुरेण वेगेन गच्छतीति तुरगः, तुरगेषु वराः तुरगवराः. (स० त०), तेषां घटाः समूहाः । हेषन्ते—'अश्वानां हेषा ह्रेषा तु निःस्वनः' इत्यमरः । बृंहन्ति—बृंहणं करिगर्जितमित्यमरः । स्फीतम्—स्फाय (वृद्धि करना)+क्त, स्फीभावः । इह तृतीयपादान्तलघोर्वैकल्पिकं गुरुत्वं बोद्धव्यम् ॥ १५ ॥

अन्वयः—दुष्टवादी गुणद्वेषी शठः स्वजननिर्दयः सुयोधनः मां दृष्ट्वा हि कार्यं नैव करिष्यति ॥ १६ ॥

संस्कृत टीका—दुष्टवादी=अप्रियवक्ता, दुष्टं कर्णकटु वदति भाषते इति दुष्टवादी, गुणद्वेषी=गुणान् सद्भावान् द्वेष्टि इति गुणद्वेषी क्षमादि-गुणद्वेष्टा शठः=धूर्तः स्वजननिर्दयः=स्वजनेषु स्वकीयेषु जनेषु निर्दयः दयारहितः, निष्कृपः, सुयोधनः=दुर्योधनः, माम्=केशवं, दृष्ट्वा=अवलोक्य, हि=इति निश्चये, कार्यं=कौरवपाण्डवसन्धिरूपं प्रयोजनम्, नैव करिष्यति=कथमपि न विधास्यति । अनुष्टुप्छन्दः ॥ १६ ॥

टिप्पणी—दुष्टवादी—दुष्टं वदितुं शीलं यस्य सः (उप० स०) । गुण-

---

अरे !

यह कटुभाषी, गुणद्वेषी, स्वजनों के प्रति क्रूर दुरात्मा दुर्योधन मुझे देखकर कभी भी कार्य (कर्त्तव्य) नहीं करेगा ॥ १६ ॥

भो बादरायण ! किं प्रवेष्टव्यम् ।

काञ्चुकीयः—अथ किमथ किम् । प्रवेष्टुमर्हति पद्मनाभः ।

वासुदेवः—( प्रविश्य ) कथं कथं मां दृष्ट्वा सम्भ्रान्ताः सर्वक्षत्रियाः । अलमलं सम्भ्रमेण । स्वैरमासतां भवन्तः ।

दुर्योधनः—कथं कथं केशवं दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण । स्मरणीयः पूर्वमाश्रावितो दण्डः । नन्वहमाज्ञप्ता ।

वासुदेवः—भोः सुयोधन ! किमास्से ।

दुर्योधनः—( आसनात् पतित्वा आत्मगतम् ) सुव्यक्तं प्राप्त एव

---

द्वेषी—गुणेषु द्वेषो यस्य सः (बहु०) गुणविरोधी । स्वजननिर्दयः—निर्गता दया यस्मात् स ( 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति पञ्चमीसमासः ) ।

संस्कृत टीका—भोः=इति विषादसूचनार्थम् । किं मया प्रवेष्टव्यम्, अथ किम् अथ किम्=अङ्गीकारे द्विरुक्तिः. सम्भ्रमे वा । पद्मनाभ =पद्म कमलं नाभौ यस्य (बहु०); क्षीरसागरशयनसमये तस्य नाभेः सकमलात् । सम्भ्रान्ताः=प्रत्युत्थाने व्यग्राः । अहम्=इति स्वाज्ञानुष्ठापननियन्तृत्व द्योतयति । किमास्से=कुशली वर्तसे किमित्यर्थः । कुशलप्रश्नसमुदाचार ईदृशो भासनाटकेषूपलभ्यते ।

---

हे बादरायण ! क्या प्रवेश करना चाहिए ?

कञ्चुकी—हाँ अवश्य ! पद्मनाभ प्रवेश करें (प्रवेश करने के योग्य ) हैं ।

वासुदेव—( प्रवेश करके ) अरे यह क्या ! सभी क्षत्रिय मुझे देखकर क्यों संभ्रान्त हो गये हैं ! अरे आप सम्भ्रम न करें । आप लोग स्वच्छन्द बैठिये ।

दुर्योधन—अरे ! केशव को देखकर क्यों सम्भ्रान्त हो गये ! संभ्रम न करें । क्या तुम्हे पूर्वघोषित दण्डाज्ञा भूल गयी । निश्चय ही आज्ञा करने वाला मैं हूँ ।

वासुदेव—( पास जाकर ) हे दुर्योधन ! आप कैसे बैठे हैं ?

केशव ।

उत्साहेन मतिं कृत्वाप्यासीनोऽस्मि समाहितः ।
केशवस्य प्रभावेण चलितोऽस्म्यासनादहम् ॥ १७ ॥

अहो बहुमायोऽयं दूतः । ( प्रकाशम् ) भो दूत ! एतदासनमास्यताम् ।

---

आसनात् पतित्वेति । पतित्वा—अत्र पतनं च ससम्भ्रमं चलनम्, सम्भ्रमे च केशवप्राप्तिज्ञानं निमित्तम् ।

अन्वयः—उत्साहेन मतिं कृत्वा अपि समाहितः (सन्) आसीनोऽस्मि । केशवस्य प्रभावेण अहम् आसनात् चालितोऽस्मि ॥ १६ ॥

संस्कृत टीका—अत्र आसनादचलने प्रयत्नमास्थितस्यापि मम कृष्णप्राप्तिज्ञानमात्रेण ससम्भ्रमं यच्चलनं मञ्जातं तद् कृष्णस्य माहात्म्यादित्याह—उत्साहेनेति । उत्साहेन=उत्साहगुणयुक्तेन, अविशङ्कयेत्यर्थः, मतिम्=बुद्धिं, अनुत्थाननिश्चयम्, कृत्वा=विधाय, अपि=च समाहित ( सन् )=अविक्षिप्तचित्त, सावधान सन्, आसीनोऽस्मि=उपविष्टोऽस्मि । (तथापि अहम्) केशवस्य=नारायणस्य, प्रभावेण=माहात्म्येन, तेजोविशेषेणेत्यर्थ, अहम्=दुर्योधन, आसनात्=निजोपवेशनस्थानात्, सिंहासनादित्यर्थः, चलितोऽस्मि=सम्भ्रमोत्थितोऽस्मि ॥ अनुष्टुप्छन्द ॥ १७ ॥

टिप्पणी—उत्साहेन—उत्=सह् + घञ् । मति—मन् + क्तिन् । समाहित—सम् + आ + धा + क्त ।

संस्कृत टीका—अहो इत्यादि । बहुमाय=बह्वी बहुप्रकारा माया शाम्बरी यस्य सः ।

---

दुर्योधन—( आसन से गिरकर, स्वगत हो ) स्पष्ट है कि केशव आ गये ।

बड़े उत्साह, के साथ संकल्प करके मैं सावधान होकर बैठा था, परन्तु केशव के प्रभाव से मैं आसन से विचलित हो गया ॥ १७ ॥

अरे ! यह दूत बहुत मायावी (जादूगर) है । (प्रकट मे) ओ दूत ! इस आसन पर बैठो ।

वासुदेव—आचार्य ! आस्यताम्। गाङ्गेयप्रमुखा राजान ! स्वैरमासता भवन्त । वयमप्युपविशाम । (उपविश्य) अहो दर्शनीयोऽय चित्रपट । मा तावत्। द्रौपदीकेशधर्षणमत्रालिखितम्।

अहो नु खलु

सुयोधनोऽय स्वजनावमान पराक्रम पश्यति बालिशत्वात्।

को नाम लोके स्वयमात्मदोषमुद्घाटयेन्नष्टघृण सभासु ॥ १८ ॥

---

प्रत्युत्थानापचारेणात्मान सम्भावय द्रोणभीष्मादीन् प्रसित्सकुर्वन्नाह—आचार्येत्यादि। गाङ्गेयप्रमुखा =भीष्मप्रमुखा मुख प्रगत मुख्य। आपातदर्शनप्रवृत्त द्रौपदीकेशाकर्षणलिखितचित्रपटप्रेक्षणसलग्नदुर्योधन केशव आक्षिपति—मा तावदिति। अहो नु खलु=इति आश्चर्ये।

टिप्पणी—बहुमाय—बह्वी माया यस्य (बहु०)। गाङ्गेयप्रमुखा—गाङ्गेय भीष्म प्रमुखो येषा ते।

अन्वय—अय सुयोधन बालिशत्वात् स्वजनावमान पराक्रम पश्यति। लोके को नाम नष्टघृण सभासु स्वयम् आत्मदोषम् उद्घाटयेत् ॥ १८ ॥

संस्कृत टीका—अय=एष, दुष्टमति, सुयोधन =दुर्योधन, बालिशत्वात्=बालिश मूर्ख तस्य भाव बालिशत्व मौर्ख्यम्, तस्मात् मूर्खत्वात्, स्वजनावमानम्=स्वबन्धूनाम् अवमानम् अपमानम्, आत्मीयजनावमानम्, पराक्रम पश्यति=शौर्य (मन्यते), अवलोकयति, विचारयतीत्यर्थ, लोके=भुवने, को नाम=बुद्धिमान् कोऽन्य, नष्टघृण=नष्टा अपगता घृणा दया यस्य स, विगतकृप, निर्जुगुप्स, सभासु=राजपरिषत्सु, स्वय=स्वैनै-

---

वासुदेव—आचार्य ! बैठिये। भीष्म प्रभृति राजाओ !

आप सब स्वेच्छा से बैठ जाइये। हम भी बैठ जाते हैं। (बैठकर) अहो ! यह चित्रपट दर्शनीय है। परन्तु रहने दो, इसमे तो द्रौपदी के केशवस्त्राकर्षण का चित्र अकित है। अहो निस्सदेह !

दुर्योधन मूर्खता के कारण अपने बन्धुओ के अपमान को पराक्रम समझता है। नही तो इस ससार में कौन ऐसा निर्लज्ज व्यक्ति है, कि जो अपने दोषो को इस प्रकार सभा के बीच उद्घाटित करेगा ? ॥ १८ ॥

सर्वाः अपनीयतामेष चित्रपटः।

दुर्योधनः—बादरायण ! अपनीयतां किल चित्रपटः।

काञ्चुकीयः—यदाज्ञापयति महाराजः। ( अपनयति। )

दुर्योधनः—भो दूत !

धर्मात्मजो वायुसुतश्च भीमो
भ्राताऽर्जुनो मे त्रिदशेन्द्रसूनुः।
यमौ च तावश्विसुतौ विनीतौ
सर्वे सभृत्याः कुशलोपपन्नाः ॥ १९ ॥

---

वेत्यर्थः, आत्मदोषं—आत्मनः स्वस्य दोषं पापम्, उद्घाटयेद्—प्रकाशयेद्। दुर्योधनं विहाय कोऽन्यः जनः एवंविधं कार्यं कर्तुं शक्नोतीति विवेकः ॥ १८ ॥

टिप्पणी—वाग्मित्वात् — वाच्+इन् वाचि (वाणि) रमति इति वाग्मिनः, वाचि+रमो+क—इ—म। वाग्मिनस्य भावः वाग्मित्वम्। आत्मदोषं—आत्मना स्वस्य दोषम्, दुष्+घञ्। उद्घाटयेत्—उद्+घट्+णिच्+विधिलिङ् ॥ १८ ॥

अन्वयः—धर्मात्मजः वायुसुतः भीमश्च त्रिदशेन्द्रसूनुः मे भ्राता अर्जुनः च विनीतौ अश्विसुतौ तौ यमौ च सभृत्याः सर्वे कुशलोपपन्नाः (सन्ति) ॥ १९ ॥

संस्कृत टीका—दुर्योधनः दूतं कुशलवार्तां पृच्छति-धर्मात्मज इत्यादि। भोः दूत ! धर्मात्मजः—धर्मस्य यमस्य आत्मजः सुतः धर्मपुत्रः, युधिष्ठिरः, वायुसुतः—वायोः पवनस्य सुतः पुत्रः, भीमः च—वृकोदरः, त्रिदशेन्द्रसूनुः—

---

अरे ! दूर करिये इस चित्रपट को।

दुर्योधन—बादरायण ! इस चित्रपट को हटा दो।

कञ्चुकी—महाराज की जो आज्ञा ! ( ले जाता है )।

दुर्योधन—हे दूत !

धर्मपुत्र युधिष्ठिर, वायुपुत्र भीम, मेरे भ्राता सुरेन्द्रसुत अर्जुन और अश्विनीकुमार के दोनों विनयशील पुत्र नकुल और सहदेव, सब अपने सेवकों सहित कुशल से तो हैं ? ॥ १९ ॥

वासुदेव.—सदृशमेतद् गान्धारीपुत्रस्य। अथ किमथ किम्। कुशलिन सर्वे। भवतो राज्ये शरीरे बाह्याभ्यन्तरे च कुशलमनामय च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादय पाण्डवा —

अनुभूत महद् दुःखं सपूर्णं समयः स च।
अस्माकमपि धर्म्यं यद् दायाद्य तद् विभज्यताम् ॥ २० ॥

---

त्रिदशानामिन्द्र तस्य सूनु:, देवेन्द्रपुत्र, मे=मम, भ्राता=बन्धु; अर्जुन च, विनीतौ=विनम्रौ, अश्विसुतौ=अश्विनो: सुतौ, अश्विनीकुमारपुत्रौ, तौ च, यमौ=सहजातौ, नकुलसहदेवावित्यर्थ, सभृत्या=सपरिजना, सर्वे=अशेषा, कुशलोपपन्ना=कुशलं कल्याणं, उपपन्ना युक्ता:, सकुशला. सन्ति किमिति शेष, इह प्रश्नकाकु = उपजाति वृत्तम् ॥ १९ ॥

टिप्पणी—त्रिदशेन्द्रसूनु—तिस्र. दशा. अवस्था बाल्यकैशोरप्रौढावस्था. येषा ते त्रिदशा. देवा, तेषाम् इन्द्र अधिपति, तस्य सूनु। अश्विसुतौ—अश्विनो: सुतौ (ष० त०)

सस्कृत टीका—सदृशमित्यादि। अथ किम्=इत्यङ्गीकारे। बाह्याभ्यन्तरे=शरीरे च बहिर्भवे आभ्यन्तरभवे देहे च। तत्राभ्यन्तरं शरीरं मन। अनामयम्=आरोग्यम्।

टिप्पणी—बाह्याभ्यन्तरे—बाह्यश्च आभ्यन्तर च तयो: समाहार: बाह्याभ्यन्तरम्। अनामयम्—न आमय (नञ स०)।

अन्वय:—महद् दुःखम् अनुभूतं स च समयः सम्पूर्णः। अस्माकमपि यद् धर्म्यं यद दायाद्य (अस्ति) तद् विभज्यताम् ॥ २० ॥

---

वासुदेव—गान्धारी पुत्र के लिए ऐसा (व्यवहार) उचित ही है। हाँ अवश्य। वे सब कुशल से हैं। आपके शरीर और राज्य की बाहरी तथा भीतरी कुशलता एव आरोग्य को पूँछकर युधिष्ठिर प्रभृति पाण्डवो ने निवेदन किया है—

हम लोगो ने बहुत कष्ट उठाये हैं और उस (अज्ञातवास की) प्रतिज्ञा की अवधि समाप्त हो चुकी है, इसलिये अब हमारा न्यायोचित पैतृक राज्य बाँट दिया जावे ॥ २० ॥

इति ।

दुर्योधन —कथं कथं दायाद्यमिति ।

वने पितृव्यो मृगयाप्रसङ्गत-
कृतापराधो मुनिशापमाप्तवान् ।
तदाप्रभृत्येव स दारनिस्पृहः
परात्मजानां पितृतां कथं व्रजेत् ॥ २१ ॥

---

संस्कृत टीका—दूतकार्यं कुर्वन् श्रीकृष्ण. युधिष्ठिरादीना वार्ताम् उद्देश्यं च दुर्योधन प्रति प्रकाशयति—अनुभूतमित्यादि । महत=अत्यन्तं, दुःखम्=कष्टम्, अनुभूत५=भुक्तम्, स. च समय =त्रयोदशवर्ष-पर्यन्तं वनवास, पूर्वनिर्धारितः काल: इत्यर्थः, सम्पूर्णः=पूर्णता गतः, धर्मातीत. । अस्माकमपि=पाण्डवानामपि, यत्, धर्म्यम्=धर्मादनपेतम् धर्म्यं तदनुसारि, दायाद्यम्=दाय. कुलधनं तद्रूपम् आद्यम् आदनीयं भोग्यं वस्तु, पितृरिक्थम्, विभज्यताम्=विभागं कृत्वा अस्मभ्यं देहीति विवेकः । अनुष्टुप् छन्दः ॥ २० ॥

टिप्पणी—स च समय.—एकवर्षाज्ञातवाससङ्कुलसचिवो द्वादशवर्षवन-वाससङ्केतः । धर्म्यम्=धर्मात् अनपेतम्, धर्मेण प्राप्यम्, धर्म=यत् । दायाद्यम्—दायं विभजनीयं धनम्, दायाद्यम्, दाय+आ+दा+क, दायाद+ष्यञ् । 'दायाद्यं=पितृरिक्थम्, दाय कुलधन दायरूपम् अदनीयं भोग्यं वस्तु दायाद्यमिति व्युत्पत्ति.' इति गणपतिशास्त्रिणः ।

संस्कृत टीका—कथमित्यादि । इति शब्दानन्तरम् उच्यत इति शेषः । एवञ्च पार्थाना दायाद्यमेव नास्तीत्यर्थ ।

अन्वय—पितृव्य वने मृगया प्रसङ्गतः कृतापराध. (सन्) मुनिशापम् आप्तवान् तदा प्रभृत्येव दारनिस्पृह स परात्मजाना पितृतां कथं

---

दुर्योधन—कैसा ? पैतृक-राज्य कैसा ?

मृगया में तत्पर हमारे चाचा पाण्डु को मुनि के प्रति ( हत्या का ) अपराध करने पर शाप लगा था। तभी से वे स्त्रियों के प्रति विरक्त हो

व्रजेत् ॥ २१ ॥

संस्कृत टीका—अस्माभिर्भुज्यमानं पितृव्यस्य पाण्डोर्धनं पार्थान् प्रति तदा दायाद्यं स्याद्, यदि पाण्डुस्तेषां पिता स्यात्। स तु तान् प्रति पितैव न भवतीत्याह—वन इति। पितृव्य=पितृभ्राता पाण्डुः, वने=अरण्ये, मृगयाप्रसङ्गत =आखेटप्रसक्त्या, कृतापराध =कृत विहित अपराध. येन स मृग्या सह, मृगरूपं धृत्वा क्रीडतः किन्दमाख्यस्य मुनेर्वधरूप अपराध (सन्), मुनिशापम्=मुने किन्दमाख्ये शाप श्रापम् अर्थात् 'पत्नीससर्गे मरिष्यसी' इत्येवमात्मक मुनेर्निग्रहवचनम्, आसवान्=प्राप्तवान्। तदा प्रभृत्येव=तत् समयादारभ्यैव, स=मम पितृव्य पाण्डु, दारनिस्पृह =दारेभ्य निर्गता स्पृहा यस्य स, स्त्रीप्रसङ्ग रहित सजात इति शेष। अत, परात्मजाना=परेषाम् अन्येषा धर्म वायुशक्राश्विनाम् आत्मजा. पुत्रा परात्मजा, तेषाम्, परैर्जातानां पुत्राणाम्, पितृता=जनकभावम्, कथम्=केन प्रकारेण, व्रजेत्=प्राप्नुयात्, नैव व्रजेदित्यर्थ। वशस्थ वृत्तम् ॥ २१ ॥

टिप्पणी—दारनिस्पृह —न स्पृहा यस्य निस्पृह, दारेषु स्त्रीषु निस्पृह दारनिस्पृह पितृताम्—पितु भाव पितृता, पितृ+तल्+टाप। (क) कृतापराध —कस्मिश्चित् समये किन्दमनामा महर्षि मृगरूप धृत्वा क्रीडां चकार। तदा आखेटमन्विष्यमाण नृपति पाण्डु तौ दृष्ट्वा मृगञ्च मत्वा शरैर्जघान। स च महर्षि मृगरूप विहाय तस्मै त्वमपि यदा स्त्रीप्रसङ्ग करिष्यसि तदा पञ्चत्व प्राप्स्यसीति' शाप ददौ (द्र० महाभा० आदि० १२३)।

पितृता—पितृधनभावत्व कथ व्रजेत् अर्थात् ये औरसा पुत्रा तेषामेव पित्र्य धन नान्यजातानामिति दुर्योधनस्याशय। (ख) एक बार जगल मे मुनि किन्दम मृगरूप में अपनी प्रिया के साथ सभोग मे सलग्न थे। राजा

गये थे। अत वह अन्य (देवादिको) के पुत्रो के साथ पितृत्व सबन्ध कैसे बना सकते हैं? ॥ २१ ॥

वासुदेव —पुराविद भवन्त पृच्छामि ।
विचित्रवीर्यो विषयी विपत्ति क्षयेण यात पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष लभेत राज्य जनक कथ ते ॥ २२ ॥

---

पाण्डु ने मृगया करते हुए इस मृग का वध कर दिया। मरने से पहले ऋषि ने मृगरूप को त्यागकर उन्हे शाप दे दिया कि 'तुम ज्यो ही स्त्री का आलिङ्गन करोगे, तभी तुम्हारी मृत्यु हो जाएगी।' अत उन्होने मृत्यु के भय से स्त्रीप्रसङ्ग का परित्याग कर दिया था। उनकी पत्नी कुन्ती एव माद्री ने देवताओ से सन्तान प्राप्त की थी।

अत दुर्योधन का आशय यह है कि तब पाण्डु उनके पिता कैसे बन सकते थे [ द्र० महाभा० आदि० १२३ ]।

सस्कृत टीका—पुरेत्यादि। पुराविद = पुरावृत्तम्,

टिप्पणी—पुराविद-पुराण वेत्ति इति पुराविद्, यद्वा, पुरा वेत्तीति त प्राग्वेत्तारम्। पुरा + विद् + क्विप्।

अन्वय —विषयी विचित्रवीर्य क्षयेण विपत्ति यात पुन व्यासेन अम्बिकाया जात एष धृतराष्ट्र ते जनक राज्य कथ लभेत ? ॥ २२ ॥

सस्कृत टीका—विषयी = विषयासक्त, विचित्रवीर्य = तव पितामह, क्षयेण = क्षयरोगेण, विपत्ति = मृत्यु यात = प्राप्त, पुन = पश्चात् तद् मरणानन्तर व्यासेन = महर्षिणा द्वैपायनेन, अम्बिकाया = विचित्रवीर्य-भार्यायाम्, जात = उत्पन्न, एष = अयम्, धृतराष्ट्र, ते = तव, जनक = पिता, राज्यम् = मण्डलाधिपत्यम्, अपितुविचित्रवीर्यस्य, कथ = केन न्यायेन, क्या भीत्येश्वर्य, लभेत = प्राप्येत, सोऽप्यनधिकारीति भाव ॥ २२ ॥

---

वासुदेव—पूर्वजों के इतिहास को अच्छी तरह जानने वाले आप से मैं पूछता हूँ—

विलासी विचित्रवीर्य राजयक्ष्मा से (ग्रस्त हो) मृत्यु को प्राप्त हुआ। तब व्यास के सयोग से उत्पन्न तुम्हारे पिता धृतराष्ट्र कैसे राज्य को प्राप्त कर सकते हैं ? ॥ २२ ॥

मा मा भवान्—

एवं परस्परविरोधविवर्धनेन
शीघ्रं भवेत् कुरुकुलं नृप ! नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषं
यत् त्वा युधिष्ठिरमुखाः प्रणयाद् ब्रुवन्ति ॥ २३ ॥

---

टिप्पणी—विषयी—विषयः अस्ति अस्य इति, विषय+इनि। विपत्ति—वि+पद्+क्तिन्। कथं लभेत=यदि परात्मजो धृतराष्ट्रो विचित्रवीर्यस्य क्षेत्रजः पुत्रः इति कृत्वा 'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥' इति शास्त्रात् क्षेत्रिरिक्थं लभेत, तर्हि पार्था अपि क्षेत्रजाः पाण्डोः क्षेत्रिभूतस्य रिक्थं लभेरन्नेवेति भावः ॥ २२ ॥

संस्कृत टीका—मा मा भवान्=मा मा कथयत्वित्यर्थगम्यम् ।

अन्वयः—हे नृप ! एवं परस्परविरोधविवर्धनेन शीघ्रं कुरुकुलं नामशेषं भवेत्। भवान् रोषम् अपकृष्य तत्कर्तुम् अर्हति, यत् त्वाम् युधिष्ठिरमुखाः प्रणयात् ब्रुवन्ति ॥ २३ ॥

संस्कृत टीका—कथने दोषमाह—एवं परस्परमिति। हे नृप=हे राजन्, एवम्=इत्थम्, परस्परविरोधविवर्धनेन=परस्परस्य विरोधः वैरभावः, तस्य विवर्धनं, तेन, मिथः वैरभावेन (सर्वं) कुरुकुलम्=कुरूणां कुलं, कौरववंशः, शीघ्रम्=झटिति, नामशेषम्=नष्टम्, नाम्ना संज्ञया शेषम् अवशिष्टम्, भवेत्=स्यात्, सर्वस्य विनाशे नाम्न एवावशिष्टत्वादिति भावः। तत्=तस्मात् कारणात् भवान्=दुर्योधनः, रोषम्=

---

नहीं, नहीं, ऐसा मत कहो।

हे नृप ! इस प्रकार आपस में विरोध बढ़ाने से इस कुरुवंश का शीघ्र ही नामशेष रह जायगा। इसलिए क्रोध को छोड़कर आपको वही करना उचित है जो युधिष्ठिर आदि पाण्डव प्रेम के कारण आपको करने के लिए कहते हैं ॥ २३ ॥

दुर्योधन —भो दूत ! न जानाति भवान् राज्यव्यवहारम् ।

राज्य नाम नृपात्मजै सहृदयैर्जित्वा रिपून् भुज्यते
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ।
काङ्क्षा चेन्नृपतित्वमाप्तुमचिरात् कुर्वन्तु ते साहस
स्वैर वा प्रविशन्तु शान्तमतिभिर्जुष्ट शमायाश्रमम् ॥ २४॥

समर्थम् अपहृत्य=विहाय नियम्य, तत्कर्तुं —विधातु, भवान् अर्हति=योग्योऽस्ति। यत=वाक्य, त्वा=भवन्तम्, युधिष्ठरमुखा =युधिष्ठिर धमपुत्र, युधिष्ठिर मुखम् आदि येषा ते, प्रणयात्=स्नेहाद् प्रेमत, ब्रुवन्ति=कथयन्ति । वसन्ततिलकावृत्तम् ॥ २३ ॥

टिप्पणी—नृप—नृन् पातीति नृप भूपाल, तत्सम्बुद्धौ । नामशेष-नाम एव शेषो यस्य तत् । अपकृष्य—अप+कृष+ल्यप ।

सस्कृत टीका—भो दूतेत्यादि । भवानिति अराजकुलप्रसूतत्व द्योतयति । अत एव राज्यव्यवहारानभिज्ञत्वयाचोयुक्तिरुपपन्नतरा । राजत्व हि यदुकुलस्य खण्डित पूर्वपुरुषययातिशापात् ।

अन्वय —सहृदयै नृपात्मजै रिपून् जित्वा राज्य नाम भुज्यते । लोके तत् न तु याच्यते पुन न च वा दीनाय दीयते । नृपतित्वम् आप्तु काङ्क्षा चेत् ते अचिरात् साहस कुर्वन्तु वा शमाय शान्तमतिभि जुष्ट आश्रम स्वैर प्रविशन्तु ॥ २४ ॥

सस्कृत टीका—सहृदयै =सचित्तै , समुन्नतचित्तैरित्यर्थ , नृपात्मजै = नृपस्य औरसै पुत्रै , रिपून्=शत्रून् जित्वा=अभिभूय, राज्य नाम=

---

दुर्योधन —ऐ दूत ! तुम राज्य व्यवहार भी नही जानते ।

सहृदय राजपुत्र शत्रुओ को जीतकर राज्य का उपभोग करते हैं । राज्य ससार मे न तो माँगा ही जाता है (क्योंकि माँगने से नहीं मिलता) और न ही दीन याचकों को दिया ही जाता है । यदि उन्ह राजत्व प्राप्त करने की कामना है तो तुरन्त साहस से काम लें अथवा शम के सेवनार्थ वे शान्तबुद्धि मुनियों से सेवित आश्रम मे प्रवेश करें ( अर्थात् तपस्वी हो जावें )॥ २४ ॥

वासुदेव —भो सुयोधन ! अलं बन्धुजने परुषमभिधातुम् ।

पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम् ।
वञ्चयेद् य सुहृद्बन्धून् स भवेद् विफलश्रम ॥ २५ ॥

---

विषयो नाम, नाम इति सम्भावनायाम्, भुज्यते=अनुभूयते, यथास्माभि-स्तथेत्यर्थं । लोके=भुवने तत्=राज्य, न तु याच्यते=नैव भिक्ष्यते । यथा पार्थैस्तथेत्यर्थं वा=अन्यथा, दीनाय=दरिद्राय न तु पुन दीयते=नैवप्रदीयते । एव राज्यव्यवहारस्य स्थितौ पार्थैर्यत् कर्तव्य तद् बोधयति—नृपतित्व=राज्यम्, आप्तु=लब्धु, काङ्क्षा=इच्छा, चेत्=अस्ति यदि, ते=पार्था, अचिरात्=अविलम्बम्, साहस=युद्धम्, कुर्वन्तु=विदधतु अर्थादस्माभि सह । वा=पक्षान्तरे, राज्येप्साभावे इत्यर्थ । शमाय=शान्त्यर्थम् शान्तमतिभि=निर्मत्सरबुद्धिभि अर्थाद् मुनिभि, जुष्ट=सेवितम्, आश्रम=मुनिगृह, स्वैर=स्वच्छन्दम् प्रविशन्तु=गच्छन्तु । विना युद्ध नाह किञ्चिदपि दातुमिच्छामीति भाव । शार्दूलविक्रीडित छन्द ॥ २४ ॥

टिप्पणी—सहृदयै —हृदयेन सह वर्तते इति सहृदया , तै (बहु०) नृपतित्वम्—नृपते भाव नृपतित्वम् । नृपति+त्व । शान्तमतय —शान्ता मति येषा ते (बहु०) शान्तमतय तै । जुष्टम्—जुष+क्त ।

सस्कृत टीका—अलमित्यादि । अलमलम्=न युज्यत इत्यर्थेऽलशब्द । द्विरुक्तिर्वार्ढ्याय । परुषम्=निष्ठुरम् ।

अन्वय —य पुण्यसञ्चयसम्प्राप्ता नृपश्रियम् अधिगम्य सुहृद्बन्धून् वञ्चयेत् स विफलश्रम भवेत् ॥ २५ ॥

---

वासुदेव—हे सुयोधन ! अपने बान्धवो के प्रति ऐसे कठोर वचन न कहो ।

पुण्य कर्मों के सञ्चय से प्राप्त होने वाली राज्यलक्ष्मी को पाकर जो सहृदय बन्धुजनो ( अथवा मित्रो ) को धोखा देता है उसका सारा परिश्रम व्यर्थ जाता है ॥ २५ ॥

दुर्योधनः—

स्यालं तव गुरोर्भूपं कसं प्रति न ते दया।
कथमस्माकमेव स्यात् तेषु नित्यापकारिषु ॥ २६ ॥

---

संस्कृत टीका—यः=पुरुषः, पुण्यसञ्चयसम्प्राप्ताम्=सञ्चितपुण्योपनताम्, पुण्यानाम् सुकृतानां सञ्चयः तेन प्राप्ता अधिगता ताम्, नृपश्रियम्=नृपस्य राज्ञः श्री लक्ष्मीः ताम, राज्यलक्ष्मीम्, अधिगम्य=सम्प्राप्य, सुहृद्बन्धून्=मित्रज्ञातीन्, वञ्चयेत्=प्रतारयेत्, नृपश्रीसविभागेन नानुगृह्णीयात्, स, विफलश्रमः=व्यर्थपरिश्रमः, भवेत्=स्यात्। अर्थात् स्वबन्धुभि विरोधे कृते तयैव आयासः विफलो भविष्यतीति भावः। अनुष्टुप् छन्दः ॥ २५ ॥

टिप्पणी—विफलश्रमः—विफलः इष्टासिद्ध्या निष्फलः अनिष्टप्राप्त्या विपरीतफलो वा श्रमः वञ्चनविषय आयासो यस्य स तथा, भवेत्, सुहृद्बन्धुविषया वञ्चनया इष्टासिद्धिरनिष्टप्राप्तिश्च भवतीत्यभिप्रायः।' इति गणपतिशास्त्रिण ॥ २५ ॥

अन्वयः—तव गुरोः स्यालं भूपं कसं प्रति ते दया न, एवं नित्यापकारिषु तेषु अस्माकं ( दया ) कथं स्यात् ? ॥ २६ ॥

संस्कृत टीका—तव गुरोः=ते पितुः वसुदेवस्य, स्यालं=पत्नीभ्रातरम् अर्थात् स्वमातुलम्, भूपम्=राजानम्, कंसं प्रति एतन्नामानं मथुराधिपतिम्, प्रति, ते=तव, दया=अनुकम्पा न=नासीत्। स हि निहतस्त्वयेत्यर्थः, एव=सुहृद्बन्धुमुख्ये स्वमातुलेऽपि तव दया नैत्येव स्थिते इत्यर्थः। नित्यापकारिषु=नित्यं सततम् अपकारः अपकरणम् अस्ति एषाम् ते, अहितकारिषु, तेषु=पाण्डवेषु विषये, अस्माकं=कौरवाणाम् ( दया ),

---

दुर्योधन—हे दूत !

अपने पिता के साले कंसराज के प्रति तुम्हे दया न आयी, तो सदा अपकार करने वाले उन लोगो ( पाण्डवो ) के प्रति हमे कैसे दया आ सकती है ? ॥ २६ ॥

अपि च, तवापि प्रत्यक्षमपरं कथयामि ।

> ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
> विक्रोशन् घोषयात्रायां फाल्गुनेनैव मोक्षितः ॥ ३३ ॥

---

नामक वन था। यह वन इन्द्र के लिए पवित्र भूमि थी। अग्निदेव ने उस वन पर क्रोध कर उसे जलाना चाहा। अर्जुन ने तब इसकी रक्षा की थी। तदर्थ उनसे गाण्डीव धनुष और अनेक बाण पुरस्कार में प्राप्त किए। ३ पाण्डव जब छद्मवेश में थे तब दुर्योधन ने विराट्नगर की गायों का अपहरण कर लिया था। उसी समय विराट्नगर में आश्रय प्राप्त अर्जुन ने भीष्मादि कौरव महारथियों को जीतकर उन गायों की रक्षा की थी ॥ ३२ ॥

अन्वय --ननु चित्रसेनेन नभस्तलं नीयमानः विक्रोशन् त्वं घोषयात्रायां फाल्गुनेनैव मोक्षितः ॥ ३३ ॥

संस्कृत टीका—ननु=इति किं न स्मर्यते ? चित्रसेनेन=तन्नाम्ना गन्धर्वेण, नभस्तलं=आकाशतलम्, स्वर्गन्धर्वपुरम्, नीयमानः=बलाद् आकृष्यमाणः, विक्रोशन्=आर्तनादं कुर्वन्, त्वं=दुर्योधन, घोषयात्रायां=घोषाणां गोपानां यात्रायाम्, यद्वा, गोहरणमार्गे, घोषयात्रापर्वे वा ( महा० भा० २४३ वन० )। फाल्गुनेनैव=अर्जुनेनैव, न तु स्वल्पसुहृत्समैः कर्णादिभिः, मोक्षितः=मोचितः। अनुष्टुप् छन्दः ॥ ३३ ॥

टिप्पणी—नभस्तलम्=नभसः तलम् ( ष० त० ), विक्रोशन्—वि+क्रुश्+शतृ। (क) चित्रसेन नामक गन्धर्व ने दुर्योधन को पकड लिया और आकाशमार्ग से उसे अपने गन्धर्वनगर को ले चला। तभी आर्तनाद सुनकर अर्जुन ने उसे बचाया। यह कथा महाभारत के वनपर्व में २४३ अध्याय में है। इसी का अन्तर्विभाग घोषयात्रापर्व है ॥ ३३ ॥

---

फिर एक और तुम्हारी देखी हुई घटना कहता हूँ।

जब तुम घोषयात्रा में चित्रसेन द्वारा आकाश में ले जाये जा रहे थे उस समय चिल्लाते हुए तुमको अर्जुन ने ही छुडाया था ॥ ३३ ॥

किं बहुना,—

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ! ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥ ३४ ॥

दुर्योधनः—कथम् ? कथं हरिष्यन्ति हि पाण्डवाः ।

---

अन्वय—हे धृतराष्ट्रज, मद्वाक्यात् राज्यार्धं दातुमर्हसि अन्यथा पाण्डवाः सागरान्तां गां हरिष्यन्ति हि ॥ ३४ ॥

संस्कृत टीका—हे धृतराष्ट्रज !=हे धृतराष्ट्रपुत्र ! मद्वाक्यात्=मम कथनात्, राज्यार्धम्=अर्धं राज्यं राज्यार्धं, दातुमर्हसि=(पाण्डवेभ्यः) अर्पयितुम् योग्योऽसि, अन्यथा=यदि मद्वचनात् न दास्यसि तर्हि, पाण्डवाः=युधिष्ठिरादयः, सागरान्तम्=समुद्रसीमाम, गां=महीम्, हरिष्यन्ति हि=त्वां पराजित्य, बलाद् ग्रहीष्यन्त्येव । अनुष्टुप् छन्दः ॥ ३४ ॥

टिप्पणी—धृतराष्ट्रज !=धृतराष्ट्राज्जातः, तत्सम्बुद्धौ, धृतराष्ट्र+जन+ड । राज्यार्धम्—राज्यस्य अर्धः असमो यः, कश्चिदंशो राज्यार्धं तम् । समांशविवक्षायां तु अर्धशब्दस्य क्लीबत्वाद्, 'अर्धं नपुंसकम' इति समासे अर्धराज्यमिति स्यात् । असमाशदानोक्त्या च—

पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।
वसेम सहिता येषु मा च नो भरता नशन् ॥ (महा०)

इति महाभारतोक्तः पञ्चग्रामप्रार्थनरूपः अवरपक्षः सूचितः । सागरान्ताम्—सागरा अन्ता यस्याः ताम् (बहु०) । गाम्—स्वर्गेषु पशु-वाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ—इत्यमरः ॥ ३४ ॥

संस्कृत टीका—कथमित्यादि । कथंशब्दो गर्हायाम् । हरिष्यन्तीत्यत्र काकुः ।

---

अधिक क्या कहा जाय ?

हे धृतराष्ट्र-पुत्र ! मेरा कहना मानकर आप राज्य का आधा भाग दे दीजिये । नहीं तो पाण्डव सागर तक की सारी पृथ्वी को अवश्यमेव छीन लेंगे ॥ ३४ ॥

दुर्योधन—कैसे, पाण्डव कैसे छीन लेंगे ?

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष ! त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ।। ३५ ।।

---

अन्वयः--यदि भीमरूपी मारुतः युद्धे प्रहरति, यदि शक्रः साक्षात् पार्थरूपेण प्रहरति, हे परुषवचनदक्ष ! त्वद्वचोभिः पितृभुक्ते वीर्यगुप्ते स्वराज्ये तृणमपि न दास्ये ।। ३५ ।।

संस्कृत टीका--यदि=चेत्, भीमरूपी=वृकोदररूपधारी, मारुतः=वायुदेव, युद्धे=संग्रामे, प्रहरति=प्रहार करोति यदि=चेत्, शक्रः=इन्द्रः, साक्षात्=प्रत्यक्षम्, पार्थरूपेण प्रहरति=अर्जुनरूप धृत्वा अचिरभाविनि रणे प्रहारं करोति, तथापि, हे परुषवचनदक्ष !=परुषवचने कठोरवचनप्रयोगे दक्षः निपुण, तत्सम्बुद्धौ, हे निष्ठुरभाषणचतुर !, त्वद्वचोभिः=त्वद्वचनानुसारेण, पितृभुक्ते=पित्रा भुक्त तस्मिन्, मत्पित्रानुभूते, धृतराष्ट्रेण शासिते इत्यर्थः, वीर्यगुप्ते=वीर्येण पराक्रमेण गुप्ते रक्षिते, मद्वीर्यरक्षिते, स्वराज्ये=स्वराष्ट्रे, तृणमपि=परमाल्पमंशमपीत्यर्थं न दास्ये=न वितरिष्यामि । मालिनीवृत्तम् ।। ३५ ।।

टिप्पणी--मारुतः प्रहरति यदि--वायुदेवः पुत्रपक्षपातात् प्रहरिष्यति चेदित्यर्थः, वर्तमानसामीप्ये लट् । प्रहरतिरिहाकर्मक आयुधप्रयोगो वर्त्तते । प्रहरत्वित्यध्याहार, अनुज्ञायां च लोट्, काम प्रहरणमभ्यनुजानामि न ह्यहं प्रहरणाद् बिभेमीत्यभिप्रायः । पार्थरूपेण--पृथायाः पुत्रः पार्थ, पार्थस्य रूपं (ष० त०) तेन पार्थरूपेण ।। ३५ ।।

---

चाहे युद्ध में पवनदेव भीम का रूप धारण कर प्रहार करें, अथवा साक्षात् इन्द्र भी पार्थ ( अर्जुन ) के रूप में आक्रमण करें, पर हे कटु-भाषण में दक्ष ! तुम्हारे कहने पर मैं उस राज्य का तृण के बराबर भाग भी न दूंगा जिसका उपभोग मेरे पिता ने किया है और जिसकी रक्षा मैंने भुजबल से की है ।। ३२ ।।

वासुदेवः—भोः कुरुकुलकलङ्कभूत ! अयशोलुब्ध ! वयं किल तृणान्तराभिभाष्यकाः ।

दुर्योधनः—भो गोपालक ! तृणान्तराभिभाष्यो भवान् ।

अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।
मल्लानपि मुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ ३६ ॥

---

संस्कृत टीका—भो इत्यादि । कुरुकुलकलङ्कभूत ?=कुरूणां कुलस्य कलङ्कभूतः (सुप्सुपा०), अयशोलुब्ध=न यशः अयश तत्र लुब्ध=अपकीर्तिलोभिन्, तृणान्तराभिभाष्यकाः=तृणेन अन्तरं व्यवधानं येषाम् अभिभाष्येण सह ते तृणान्तराः, तृणान्तराः सन्तोऽभिभाष्यकाः तृणान्तराभिभाष्यकाः, तृणान्तराभिभाष्य.=तृणमन्तरत कृत्वैव त्वमस्माकमभिभाष्यो न साक्षादित्यभिप्रायः ।

अन्वय —अवध्यां प्रमदां (हत्वा) हयं गोवृषं च (हत्वा) मल्लानपि हत्वा मुनिर्लज्जः साधुभिः वक्तुम् इच्छसि ॥ ३६ ॥

संस्कृत टीका—अवध्यां=वधानर्हां, प्रमदां=स्त्रियं, पूतना नाम दानवीं, हयं=अश्वरूपं केशिनामानमसुरम्, गोवृषम्=अरिष्टर्षभं दानवम्, मल्लान् अपि=मुष्टिकचाणूरादीनपि मल्लजातिभवान्, हत्वा=विनाश्य, मुनिर्लज्ज=मुनरा निर्गता लज्जा यस्मात्, सः=लज्जारहितः, साधुभिः=मद्विधैः सह, वक्तुम्=आलपितुम्, इच्छसि=वाञ्छसि । अनुष्टुप् छन्दः ॥ ३६ ॥

---

वासुदेव—हे कुरुकुल के कलंक ! हे अपयश के लोभी ! तुम बीच में तृण रखकर ही मुझसे बात करने योग्य हो ।

दुर्योधन—हे ग्वाले ! अवश्य तुम बीच में तृण रखकर ही वार्तालाप के योग्य हो ।

अवध्य स्त्री, अश्व और गो ( वृषभ ) की हत्या करके और मल्लों को भी मारकर लज्जा का अनुभव न करने वाले तुम ( हम जैसे ) सज्जनों से बात करना चाहते हो ?

वासुदेवः—भोः सुयोधन ! ननु क्षिपसि माम् ।

[दुर्योधनः—ननु सत्यमेवैतत् ।

वासुदेवः—गच्छामि तावत् ।

दुर्योधनः—गच्छ गच्छ पशुखुरोद्धतरेणुरूषिताङ्गो व्रजमेवम् । विफलीकृतः काल ।

---

टिप्पणी—अवध्या—'अहिंस्या प्रमदामाहुः सर्वधर्मेषु पार्थिव'—इति भारतोक्ति. । मल्लान्—व्रात्यपूर्वाया क्षत्रियाया क्षत्रियाज्जाता मल्ला उच्यन्ते, ते च मुष्टियुद्धाद्यभ्यासवृत्तयः । सुनिर्लज्जः अबलामृगदुर्बलहननं शिष्टगर्हितं कृतवतो हि लज्जोचिता । साधुभि—त्वया सह अस्माकं राज्ञामालपनमपि गर्हितमिति विवेकः । (क) १ कृष्ण ने बाल्यावस्था मे पूतना नामक राक्षसी का वध किया था । स्त्रियो का वध वर्जित होने से उसी का यहाँ संकेत है । २ केशी एवं अरिष्ट नामक राक्षसो ने क्रमशः घोडे और बैल का रूप धारण किया था । इनका भी वध कृष्ण ने किया था । घोडे एवं बैल का वध भी प्रशस्त नहीं है । ॥ ३६ ॥

अवध्या प्रमदा—'अहिंस्यां प्रमदामाहु सर्वधर्मेषु पार्थिव'-महाभा० सभा० २१.१५ । तु ५२, ५३ अ० । हयम्, गोवृषम्—

'अथारिष्ट इति ख्यात दैत्य वृषभविग्रहम् ।
जघान तरसा कृष्ण. पशूना हितकाम्यया ॥
केशिनामा ततो दैत्यः राजन् तुरगविग्रहः ।'

महाभा०, सभा० ५३ २८-२९ ।

संस्कृत टीका—भो इत्यादि । क्षिपसि=तिरस्करोषि, निन्दसि । गच्छेत्यादि । व्रजमेव=गोष्ठमेव, गोपालकस्य गोष्ठगमनं युक्तम् ।

---

वासुदेव—हे सुयोधन ! क्या तुम मेरा अपमान करते हो ?

दुर्योधन—यह सत्य है ।

वासुदेव—अच्छा तो मैं जाता हूँ ।

दुर्योधन—जाओ, पशुओ के खुरो से उठी हुई धूलि से अपने अगो को कलुषित करने वाले तुम व्रज को ही जाओ । तुमने व्यर्थ ही समय नष्ट किया है ।

वासुदेव —एवमेवास्तु । न वयमनुक्तसन्देशा गन्तुमिच्छाम । तदाकर्ण्यतां युधिष्ठिरस्य सन्देशः ।][1]

दुर्योधन – आः, अभाष्यस्त्वम् ।

अहमवधृतपाण्डरातपत्रो द्विजवरहस्तधृताम्बुसिक्तमूर्धा ।
अवनतनृपमण्डलानुयात्रैः सह कथयामि भवद्विधैर्न भाषे ॥ ३७ ॥

---

विफलीकृत =अनभिभाष्याभिभाषणे विनियुक्तत्वात् । अभाष्य =वाणीप्रयोगानर्हः ।

अन्वय —अवधृतपाण्डरातपत्रो द्विजवरहस्तधृताम्बुसिक्तमूर्धा अहम् अवनतनृपमण्डलानुयात्रैः भवद्विधैः सह न भाषे इति कथयामि ॥ ३७ ॥

संस्कृत टीका—अवधृतपाण्डरातपत्र =अवधृतम् गृहीतं पाण्डरं शुभ्रम् आतपत्रं छत्रं येन स, अवधारितश्वेतछत्रः, द्विजवरहस्तधृताम्बुसिक्तमूर्धा= द्विजवराणां ब्राह्मणश्रेष्ठानां हस्ताभ्यां कराभ्यां धृतं धारितं यदम्बु जलं तेन सिक्तः अभिषिक्तः मूर्धा शिरः यस्य स तादृशः, वैदिकद्विजकरधृतजलसेचित मस्तकः, अहम्=दुर्योधनः, अवनतनृपमण्डलानुयात्रैः =अवनतस्य मदधरःवरस्य नृपमण्डलस्य अनुयात्रैः अनुयायिभिर्भृत्यैरित्यर्थः भवद्विधैः =त्वत्सदृशैः । कसभृत्य इतिवत् क्षेपोऽयम्, सह=साकम् न भाषे=न ब्रवीमि (इति) कथयामि=प्रतिजाने, कथयत कथयामीत्युक्तिर्हि विशिष्टे कथने प्रतिज्ञानरूपे पर्यवस्यति । प्रतिज्ञानविषयश्च भवादृशैः साकम् अभाषणम् । पुष्पिताग्रावृत्तम् ॥ ३७ ॥

---

वासुदेव—ऐसा ही सही । परन्तु हम बिना सन्देश कहे नहीं जाना चाहते । तो युधिष्ठिर के सन्देश को सुनो ।

दुर्योधन—अरे तुम तो बात करने के योग्य ही नहीं हो ।

मेरे सिर पर श्वेत राजच्छत्र रखा गया है । श्रेष्ठ ब्राह्मणों ने अपने हाथों से मेरे मस्तक पर अभिषेक जल सिञ्चित किया है । मैं कहता हूँ कि तुम जैसे व्यक्तियों से मैं बात भी नहीं करता जो मुझसे निम्न श्रेणी के राजाओं के अनुयायी हैं ॥ ३७ ॥

---

1 देवधरसंस्करणे कोष्ठकचिह्नाङ्कितः पाठोऽयं न लभ्यते ।

वासुदेवः—न व्याहरति किल मा सुयोधनः। भोः !
शठ ! बान्धवनि स्नेह ! काक ! केकर ! पिङ्गल ! ।
त्वदर्थात् कुरुवशोऽयमचिरान्नाशमेष्यति ॥ ३८ ॥
भो भो राजान. ! गच्छामस्तावत् ।

---

टिप्पणी—अवधृत०—अवधृत पाण्डर आतपत्र येन स. (बहु०) आतपत्र—आतपात् त्रायते इति आतपत्रम्। द्विजवर०—द्विजेपु वरा द्विजवरा ( स० त० ), तेषा हस्ता (प० त०), तैं धृतम् अम्बु (तृ०त०), तेन सिक्त मूर्धा यस्य स: (बहु०)। अवनत०—नृपाणा मण्डल नृपमण्डलम् (प०त०), अवनत नृपमण्डल (कर्म०) तद् अनुयात्रा येषा तैः ॥ ३७ ॥

सस्कृत टीका—व्याहरति=वदति। किल=इति निश्चये।

अन्वयः—शठ ! बान्धवनि स्नेह ! काक ! केकर ! पिङ्गल ! त्वदर्थात् अय कुरुवश: अचिरात् नाशम् एष्यति ॥ ३८ ॥

सस्कृत टीका—शठ=हे धृष्ट, वञ्चक, बान्धवनि.स्नेह=बान्धवेपु निर्गतः स्नेहः यस्य सः तत् सम्बुद्धौ, हे भ्रातृनिष्कृप !, काक=कटु-भाषित्वात् हे काक सदृश !, केकर=वलिर, वक्रलोचन, हे विकृताक्ष !, पिङ्गल=हे मर्कट, चपलत्वात् हे वानरकल्प !, त्वदर्थात्=त्वन्निमित्तात्, अयं=वर्तमान., कुरुवश=कुरूणा वश, अचिरात्=शीघ्रम् एव, नाशं=अभावम्, एष्यति=प्राप्स्यति। अनुष्टुप् छन्दः ॥ ३८ ॥

टिप्पणी—केकर—तारकामपाङ्ग आकृष्य वीक्षको हि केकरः। 'काककेकर' इत्येकपद वा उपमानसमासात्। 'वलिरः केकरे' इत्यमर ॥ ३८ ॥

संस्कृत टीका—अथ जिगमिषु भगवन्त बद्धुं सुयोधनस्य सरम्भ—

---

वासुदेव—सुयोधन तो मुझसे बात भी नहीं करता।

हे शठ ! बन्धु विरोधी ! काक ( कुटिल स्वभाव ), भैंगे, और पिंगल ( शाखामृग ) तेरे ही कारण यह समग्र कुरुवंश शीघ्र ही नाश को प्राप्त हो जायगा ॥ ३८ ॥

हे ! हे राजाओ, हम अब जाते हैं।

दुर्योधन.—कथं यास्यति किल केशवः। दुःशासन! दुर्मर्षण! दुर्मुख! दुर्बुद्धे! दुष्टेश्वर! दूतसमुदाचारमतिक्रान्तः केशवो बध्यताम्। कथमशक्ताः। दुःशासन! न समर्थः खल्वसि।

करितुरगनिहन्ता कंसहन्ता स कृष्णः
पशुपकुलनिवासादानुजीव्यानभिज्ञः।
हृतभुजबलवीर्यः पार्थिवानां समक्षं
स्ववचनकृतदोषो बध्यतामेव शीघ्रम् ॥ ३९ ॥

---

कथं यास्यतीत्यादिना प्रकाश्यते। दूतसमुदाचारम् अतिक्रान्तः=दूतमर्यादामतिक्रम्य स्थितः, अतोऽपराधी बन्धनार्ह इत्यर्थः। न समर्थः=अर्थात् केशवं बद्धुम्।

अन्वयः—करितुरगनिहन्ता कंसहन्ता पशुपकुलनिवासाद् आनुजीव्यानभिज्ञः हृतभुजबलवीर्यः एष स्ववचनकृतदोषः स कृष्णः पार्थिवानां समक्षं शीघ्रं बध्यताम् ॥ ३९ ॥

संस्कृत टीका—करितुरगनिहन्ता=करिणः उत्पलापीडाख्यस्य गजस्य तुरगस्य अश्वासुरस्य च निहन्ता, कंसहन्ता=कंसस्य हन्ता वधकर्ता। पशुपकुलनिवासात्=गोपालगृहनिवासात्, नीचकुलनिवासादिति भावः, आनुजीव्यानभिज्ञः=आनुजीव्यस्य अनुजीविकर्मणः

---

दुर्योधन—केशव भला जाने कैसे पायेगा? दुःशासन! दुर्मर्षण! दुर्मुख! दुर्बुद्धि! दुष्टेश्वर! दूतोचित आचरण का अतिक्रमण करने वाले केशव को बाँध लो।

अरे, क्या तुम (इस कार्य के लिए) असमर्थ हो? दुःशासन! क्या तुम भी असमर्थ हो?

यह कृष्ण गज (कुवलयापीड), अश्व (घोटकासुर) और कंस को मारनेवाला है। पशु पालने वालों के साथ निवास करने के कारण यह दास-कर्मों से अनभिज्ञ है। यह भुजबल और वीर्य से रहित है। राजाओं के सामने इसने स्वयं वचन कहने का अपराध किया है, अतः इसे शीघ्र बाँध लिया जाय ॥ ३९ ॥

अयमशक्तः । मातुल ! बध्यतामयं केशवः । कथं पराङ्मुखः पतति । भवतु अहमेव पाशैर्बध्नामि । ( उपसर्पति )

वासुदेवः—कथं मवितुकामो मां किल सुयोधनः । भवतु सुयोधनस्य, सामर्थ्यं पश्यामि । ( विश्वरूपमास्थितः )

---

अनभिज्ञः अपरिचितः, हृतभुजबलवीर्यः—हृतं भुजानां बलवीर्यं येन नष्टबाहुबलपराक्रमः, एषः—कृष्णः, स्ववचनकृतदोषः—स्ववचनेन कृतः दोषः येन, ममावमाननारूपोऽपराधः यन सः, सः—तादृशः, कृष्णः—वासुदेवः, पार्थिवानाम्—राज्ञाम् समक्षम् — अक्ष्णः समक्षं प्रत्यक्षम् शीघ्रम्मदिति बध्यताम्—बद्धः क्रियताम् । मालिनीवृत्तम् ॥ ३९ ॥

टिप्पणी—करितुरग०—करी च हस्ती च तुरगश्च अश्वश्चेति करितुरगौ तयो निहन्ता विनाशकः ( ष० त० ), नि+हन्+तृच । पशुप० पशून् पालयन्ति इति पशुपाः आभीराः, तेषां कुलं वंशः तस्मिन् निवासः तस्मैरत् । आनुजी०या०—आनुजीवन्तीति अनुजीविन आनुजीविनः भावः आनुजीव्यम् तदनभिज्ञः । हृतबल०—बलं च वीर्यं च बलवीर्ये, भुजयोः बलवीर्ये (ष०त०) हृतभुजबलवीर्ये यस्य सः (बहु०) ॥ ३९ ॥

संस्कृत टीका—बन्धु कृतप्रयत्न दुश्शासनस्याशक्तिमुपालभ्याह—अयम शक्त इति । शकुनिं चोदयति मातुलेत्यादि कथमित्यादि । पतति—बद्धु किमपि चेष्टित्वा परिश्रान्तो भुवि पततीत्यर्थः, भवतु—इति निषेधऽव्ययम्, दुश्शासनादयो मा बध्नन्तु ॥

मयमित्यादि । मवितुकाम —मवितु बन्धु काम इच्छा यस्य स । विश्वरूपम्—विश्व कृत्स्न जगत्, तदात्मकं रूपम् अपरिच्छिन्नम् आत्मनः

---

यह तो असमर्थ है । हे मामा ! इस केशव को बांध लो । क्या यह तो मुंह के बल गिर पड़े । अच्छा ! मैं ही इसे पाश से बांधता हूं ॥

( पाश को उठाकर समीप आता है )

वासुदेव—क्या सुयोधन सचमुच मुझे बांधने की इच्छा करता है ? अच्छा सुयोधन की शक्ति को भी देखता हूं ( परीक्षा करता हूं ) ( विराट रूप धारण करते हैं ) ।

दुर्योधन—भो दूत !

सृजसि यदि समन्तात् देवमाया. स्वमाया·
प्रहरसि यदि वा त्वं दुर्निवारै. सुरास्त्रैः।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये बध्यसे त्वं मयाद्य ॥ ४० ॥

---

स्वरूपमित्यर्थः। आस्थितः—अङ्गीकृतवान्।

टिप्पणी—भवितुकामः-भवितुं कामः यस्य (बहु०)। भव बन्धने भ्वादि.।

अन्वयः—यदि देवमाया· स्वमाया. समन्तात् सृजसि, यदि त्व दुर्निवारैः सुरास्त्रैः प्रहरसि, मया अद्य नरपतिगणमध्ये हयगजवृषभाणा पातनात् जातदर्पः त्व बध्यसे ॥ ४० ॥

संस्कृत टीका—भगवतो विश्वरूपप्रदर्शन मोहादिन्द्रजालप्रयोगं मन्यमान आह—सृजसीत्यादि। यदि=चेत्, देवमाया·=देवाना माया, स्वमायाः=आत्मसृष्टा माया·, समन्तात्=सर्वासु दिक्षु, सृजसि=विदधासि, यदि, वा=अथवा, त्वम्=कृष्णः, दुर्निवारैः अप्रतिहतैः, सुरास्त्रैः=दिव्यास्त्रै., अपि देवास्त्रै·, प्रहरसि=प्रहारं करोषि। इह 'सृजसि यदि' इत्यत्र 'सृज' इत्यध्याहारः। अर्थात् यथाकामं मायाः सृज, न मे त्वन्मायासर्गाद् भयमिति भाव.। तथा 'प्रहरसि यदि' इत्यत्र 'प्रहर' इत्यध्याहार, अर्थात् यथाकाम प्रहर; न मे सुरास्त्रप्रहाराद् भयमिति भाव·। अद्य=अस्मिन्नहनि, नरपति-गणमध्ये=नरपतीनां गणः तस्य मध्यं तस्मिन्, नृपमण्डलमध्ये=हयगज-वृषभाणा=हयाश्च गजाश्च वृषभाश्च हयगजवृषभाः, तेषाम्, करितुरगवृषाणाम् पातनात्=वधात्, जातदर्प=जात उत्पन्नः

---

दुर्योधन—हे दूत !

चाहे तुम चारो ओर अपनी माया या देवमाया का सर्जन करो, चाहे अमोघ दिव्यास्त्रो से प्रहार करो, परन्तु अश्व, गज, वृषभ आदि को मारने पर अहंकार करने वाले तुमको इस नृपमण्डल के बीच में अभी बाँधता हूँ ॥ ४० ॥

आ. तिष्ठेदानीम्। कथ न दृष्टः केशव। अय केशवः। अहो ह्रस्वत्वं केशवस्य। आ तिष्ठेदानीम्। कथ न दृष्टः केशव.। अयं केशवः। अहो दीर्घत्व केशवस्य। कथ न दृष्ट केशव.। अय केशवः। सर्वत्र मन्त्रशालाया केशवा भवन्ति। किमिदानी करिष्ये। भवतु. दृष्टम्। भो भो राजान! एकैकः केशवो वध्यताम्। कथ स्वयमेव पाशैर्बद्धा पतन्ति राजानः। साधु भो जम्भक! साधु!

मत्कार्मुकोदरविनि सृतबाणजालै-
विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम्।

---

दर्प गर्व यस्य स:, त्वम्=वासुदेव, मया=दुर्योधनेन, बध्यस=बन्धन प्राप्स्यसे। मालिनीवृत्तम्॥ ४०॥

टिप्पणी—दुर्निवारै—दु खेन निवारयितु शक्यानि, तै.। पातनात्—पत्+णिच्+ल्युट्। हयगज०—हयश्च अश्वश्च (केशिघोटकश्च) गजश्च हस्ती च (कुवलयापीडगजश्च) वृषभश्च बलीवर्दश्च (वृषभासुरश्च) इति हयगजवृषभा', तेषाम्॥ ४०॥

संस्कृत टीका—अथात्यद्भुतभगवद्विश्वरूपदर्शनोद्भ्रान्तस्य भ्रमविलसितवर्णनायोपक्रम.—आस्तिष्ठेत्यादिना। दृष्टस्य भगवतो झटिति तिरोभावादाह—कथमित्यादि। पुनराविर्भावादाह—अय केशव इति। नृपान् केशवबन्धनार्थमुद्यम्य पाशैरात्मानमेव बद्ध्वा भूमौ पतितान् दृष्ट्वाह—कथं स्वयमेवेत्यादि। जम्भक!=मायाविन्!।

अन्वयः—बाष्परुद्धनयना परिनि श्वसन्त. पाण्डुतनया. मत्कार्मुको-

---

अरे! अब खडे रहो। केशव कैसे दिखाई नही पडता। यह है केशव। अहो आश्चर्यकारी है इसका वामनत्व! अरे, अब ठहर जा। केशव क्यो दिखलाई नही पडता। यह है केशव। ओह, केशव की विशालता! केशव क्यों दिखलाई नही पडता? यह है केशव। सब ओर मन्त्रशाला मे अनेक केशव हैं। अब मैं क्या करू? अच्छा, समझ गया। हे हे राजाओ! तुममे से एक एक अलग-अलग करके केशव को पकड लो क्या राजा लोग स्वय पाशो मे बँधकर गिर पडे? बहुत अच्छा, हे मायावी, बहुत अच्छा!

पश्यन्तु पाण्डुतनयाः शिविरोपनीतं
त्वां बाष्परुद्धनयनाः परिनिःश्वसन्तः ॥ ४१ ॥

( निष्क्रान्तः )

---

दरविनिःसृतबाणजालै विद्धक्षरत्क्षतजरञ्जितसर्वगात्रं शिविरोपनीतं त्वां पश्यन्तु ॥ ४१ ॥

संस्कृत टीका—दुर्योधनः स्वनिश्चितां प्रतिकृतिं सूचयन् दूतं स्वकृतनिकारपरिणतिं प्रदर्शयति मदिरयादिना। बाष्परुद्धनयनाः = बाष्पैः अश्रुभिः उपरुद्धानि आवृतानि नयनानि नेत्राणि येषां ते, तादृशाः, परिनिःश्वसन्तः = परितः सर्वतः निःश्वसन्तः ( शोकजन्यं ) उच्छ्वासं गृह्णन्तः, पाण्डुतनयाः = युधिष्ठिरादयः पाण्डोः पुत्राः मत्कार्मुकोदरविनिःसृतबाणजालैः = मम सुयोधनस्य, कार्मुकम् धनुः, तस्य उदरात्, विनिःसृताः प्रक्षिप्ताः, बाणजालानि शरसमूहाः तैः, विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम्—विद्धात् वेधयुक्तात् क्षरति प्रस्रवति क्षतजानि रुधिराणि तैः रञ्जितं लोहितीकृतं सर्वगात्रं सर्वशरीरं यस्य सः, तम्, स्रवद्रक्तारुणितसर्वावयवम्। रुधिराप्लावितशरीरमित्यर्थः, शिविरोपनीतं = शिविरे सैनिकावासस्थाने उपनीतं प्रापितम् त्वाम् = श्रीकृष्ण, पश्यन्तु = अवलोकयन्तु। वसन्ततिलकावृत्तम् ॥ ४१ ॥

टिप्पणी—परिनिःश्वसन्तः — परि + निस + श्वस + शतृ—परिनिःश्वसत्। मत्कार्मुक०—कर्मणे प्रभवतीति कार्मुकम्, कर्म + उकञ्, मत्कार्मुकस्य उदरं मत्कार्मुकोदरं, तस्मात् विनिःसृतानि बाणजालानि (कर्म०), विद्धम्—व्यध + क्त क्षतात् जायते इति क्षतजं ( कर्म० ), ( जन + ड ), रक्तम् क्षरत्—क्षर + शतृ—क्षरत्क्षतजं [ कर्म० ] तेन रञ्जितानि ( तृ० त० ) सर्वाणि च तानि गात्राणि यस्य ॥ ४१ ॥

---

मेरे धनुष से निकली हुई बाणावली से विद्ध, घावों से प्रवाहित रुधिर से रँगे हुए तुम्हारे शरीर को अपने शिविर के पास आहें भरते हुए और अविरल अश्रु बहाते हुए पाण्डुपुत्र देखें ॥ ४१ ॥

( प्रस्थान )

( विलोक्य ) अये अय भगवान् हस्तिनापुरद्वारे दूतसमुदाचारेणोपस्थित । कुत खल्वाप, कुत खल्वाप । भगवति आकाशगङ्गे ! आपस्तावत् । हन्त स्रवति । ( आचम्योपसृत्य ) जयतु भगवान् नारायण ( प्रणमति ) ।

वासुदेव —सुदर्शन ! अप्रतिहतपराक्रमो भव ।

सुदर्शन —अनुगृहीतोऽस्मि ।

---

आस्ते' इति शेष । अनुष्टुपृछन्द ॥ ४३ ॥

टिप्पणी— अव्यक्तादि —न व्यक्त अव्यक्त ( नञ् त० ) अव्यक्तस्य आदि ( ष० त० ), वि + अञ्ज + क्त + । अचिन्त्यात्मा—न चिन्त्य अचिन्त्य (नञ् त०) अचिन्त्यः आत्मा यस्य स ( बहु० ) । तु०—'अणोरणीयान् महतो महीयान् ।' लोकसरक्षणोद्यत —लोकाना सरक्षण लोकसरक्षणम् (ष० त०) तस्मिन् उद्यत —तु०'परित्राणाय साधूना विनाशाय च दुष्कृताम् । धर्मसस्थापनार्थाय सभवामि युगे युगे ।' (गीता) । अनेकवपु — अनेकानि वपूषि यस्य स ( बहु० ) तु० 'अनेकरूपरूपाय ।' एकोऽह बहुस्याम्' इति श्रुतिरपि तदेव प्रतिपादयति । श्रीमान्—श्री अस्ति अस्य (बहु०), श्री + मतुप । द्विपद्बल०—द्विपता बल द्विपद्बल (ष०त०) तस्य निषूदन, द्विष + शतृ, नि + सूद + ल्युट । (क) यहाँ व्याजोक्ति अलङ्कार है ॥ ४३ ॥

सस्कृत टीका—अये इत्यादि । कुत खल्वाप —अभिषेचनार्थम् आप जलम्, अत्र द्विरुक्ति सम्भ्रमात् । स्रवति=शौचार्थमर्पित जल स्वगङ्गा

---

(देखकर) अरे हस्तिनापुर के द्वार पर यह दूत के रूप में भगवान् उपस्थित हैं जल कहाँ से लूँ ? जल कहाँ से लूँ ? हे भगवती आकाशगङ्गे ! जल दीजिये । अहा यह जल बरस रहा है, ( आचमन करके और समीप आकर ) भगवान् नारायण की जय हो । ( प्रणाम करता है ) ।

वासुदेव—हे सुदर्शन ! तुम्हारा पराक्रम अजेय हो ।

सुदर्शन—मैं कृतज्ञ हुआ, आपने कृपा की ।

वासुदेव —दिष्टया भवान् कर्मकाले प्राप्तः। भगवानाज्ञापयतु।
सुदर्शन.—कथ कथ कर्मकाल इति। आज्ञापयतु।

किं मेरुमन्दरकुल परिवर्तयामि
संक्षोभयामि सकल मकरालय वा।
नक्षत्रवशमखिल भुवि पातयामि
नाशक्यमस्ति मम देव! तव प्रसादात् ॥ ४४ ॥

---

स्यन्दमतीत्यर्थः, अप्रतिहतपराक्रम —अप्रतिहत. दुर्निवारः पराक्रमो यस्य सः, अप्रतिहतबल·, दिष्टया = इति हर्षेऽव्ययम्, कर्मकाले = कर्मणः काल कर्मकाल·, (ष० त०) तस्मिन्, क्रियाकाले।

अन्वयः—हे देव! किं मेरुमन्दरकुल परिवर्त्तयामि वा सकल मकरालयं संक्षोभयामि वा अखिल नक्षत्रवश भुवि पातयामि, तव प्रसादात् अशक्य न अस्ति ॥ ४४ ॥

संस्कृत टीका—हे देव = हे भगवन्, किं = इति प्रश्ने विनिमये वा, मेरुमन्दरकुल = मेरुश्च मन्दरश्च मेरुमन्दरौ, एतन्नामकौ पर्वतविशेषौ, मेरुमन्दरयो· पर्वतयो कुलं राजिम्, परिवर्तयामि = परिवर्तितं करोमि? मेरुकुलस्थाने मन्दरकुल तत्स्थाने मेरुकुल च स्थापयामि किमित्यर्थः? वा = अथवा, सकल = सम्पूर्णं, मकरालय = मकराणा ग्राहादीनाम् आलयं निवासस्थानम्, समुद्रमिति यावत् 'संक्षोभयामि = मथ्नामि, वा = अथवा, अखिल = समग्रम्, नक्षत्रवश = नक्षत्राणा वंश नक्षत्रमण्डलम्, भुवि = पृथिव्यां, पातयामि = पतित करोमि। वस्तुतस्तु, तव = भवत·, प्रसादात् =

---

वासुदेव—मैं प्रसन्न हूँ कि आप कार्य करने के समय पर ही आये हो।
सुदर्शन—कौन से कार्य का समय है? भगवान् आज्ञा देवें, आज्ञा करें।

क्या मेरु मन्दरादि पर्वत समूह को उलट दूँ? क्या मकरो के निवासस्थान महासागर में हलचल मचा दूँ? क्या समग्र नक्षत्र-मंडल को भू पर गिरा दूँ? हे देव, आपकी कृपा से मेरे लिए कुछ भी असम्भव नहीं है ॥ ४४ ॥

भो भोः ! शार्ङ्ग, प्रशान्तरोषो भगवान् नारायणः। गम्यतां स्वनिलयमेव। हन्त निवृत्तः। यावद् गच्छामि। अये इय कौमोदकी प्राप्ता।

---

पार्श्वे=सन्निधौ; नवसलिलदपार्श्वे=नूतनमेघोपान्ते, चारु=मनोहरम्, विद्युल्लता इव=विद्युत् तडित् लतेव वल्लीव दीर्घप्रसृतत्वाद् विद्युल्लता-(उपमित०), सेव, भाति=कृष्णस्य देहोपान्ते प्रकाशते। मालिनी वृत्तम् ॥ ४७ ।

टिप्पणी—तनुमृदु०—तनूनि सूक्ष्माणि मृदूनि कोमलानि ललितानि सुन्दराणि अङ्गानि अवयवा यस्य (तत्) तनु च तद् च तद् मृदु (कर्म०) तनुमृदु च तत् ललित (कर्म०), तनुमृदुललितम् अङ्गं यस्य तत् (बहु०)। स्त्रीस्वभावोपपन्नं—स्त्रीणा स्वभावः स्त्रीस्वभाव (ष० त०), तेन उपपन्नम्। हरिकरधृतमध्य—हरे करः [ष० त० ], तेन धृतं मध्यं यस्य तद् (बहु०)। कनक०—कनकेन खचितं कनकखचित (तृ० त०) कनकखचित पृष्ठं यस्य तद् (बहु०)। शत्रुसङ्घैककाल—शत्रूणा संघः, (ष० त०) शत्रुसघस्य एककालः [कर्म०] एकश्च असौ काल एककाल [कर्म०]। नवसलिलदपार्श्वे—नव नूतन सलिलद [सलिल ददातीति] जलद, तस्य पार्श्वम् समीपम्, तस्मिन् ॥ ४७ ॥

संस्कृत टीका—भो भो, इत्यादि। निवृत्त.=कृष्णान्तिकगमनो-द्यमान्निवृत्तस्य स्थित इत्यर्थः। पुनश्च शार्ङ्गमित्यानिदेवाभिप्रायम्। 'निवृत्तम्' इति वा पाठः।

टिप्पणी—कौमोदकि—को. पृथिव्या पालकत्वात् मोदक कौमोदकः विष्णुः तस्य इय कौमोदको [अण्]।

---

हे शार्ङ्ग ! भगवान् का क्रोध अब शान्त हो गया है। अतः तुम अपने स्थान को चले जाओ। अहा ! चला गया। अच्छा मैं भी जाता हूँ। '' अरे यह कौमोदकी आ गयी !

मणिकनकविचित्रा चित्रमालोत्तरीया
सुररिपुगणगात्रध्वंसने जाततृष्णा
गिरिवरतटरूपा दुर्निवारातिवीर्या
व्रजति नभसि शीघ्रं मेघवृन्दानुयात्रा ॥ ४८ ॥

---

अन्वय.—मणिकनकविचित्रा चित्रमालोत्तरीया सुररिपुगणगात्रध्वंसने जाततृष्णा गिरिवरतटरूपा दुर्निवारातिवीर्या मेघवृन्दानुयात्रा [कौमोदकी] शीघ्रं नभसि व्रजति ॥ ४८ ॥

संस्कृत टीका—मणिकनकविचित्रा=मणिभिः रत्नैः कनकैः सुवर्णैश्च विचित्रा विभूषिता, रत्नै. स्वर्णैश्च अलङ्कारभूतैश्चित्रवर्णा, चित्रमालोत्तरीया=चित्रा चित्रवर्णा माला पुष्पस्रग् उत्तरीयम् ऊर्ध्ववस्त्रं यस्याः सा, सुररिपुगणगात्रध्वंसने=सुररिपूणां दानवानां गणानां समूहानां गात्राणां शरीराणां ध्वंसने विनाशने, जाततृष्णा=जाता उत्पन्ना तृष्णा प्रबल अभिलाषो यस्या सा, गिरिवरतटरूपा=गिरीणां वर तस्य तटम् शृङ्ग इव रूपम् आकार यस्या सा, तथा च गिरिवरतटस्य पर्वतराजोत्सेधस्येव रूपम् आकृतिर्यस्याः सा, तादृशी, दुर्निवारा=अनिवर्तनीया, अतिवीर्या=अति महत् वीर्यं पराक्रमो यस्या सा, अतिपराक्रमशालिनी, मेघवृन्दानुयात्रा=मेघवृन्दं जलदसमूहः अनुयात्रम् अनुगं यस्या सा, जलदसमूहानुगा, [इयम्=कौमोदकी गदा], शीघ्रम्=झटिति, नभसि=गगने, व्रजति=गच्छति। मालिनी वृत्तम् ॥ ४८ ॥

टिप्पणी.—मणिकनकविचित्रा—मणयश्च कनकं च मणिकनकानि [द्वन्द्व], तैः विचित्रा [तृ०त०], ( चित्रा इति विचित्रा—प्रादि० ) । चित्र-

---

यह स्वर्ग और मणिमाणिक्यादि से खचित है। सुन्दर मालाओं का इसका उत्तरीय है। देवताओं के शत्रुदल के शरीरों का नष्टभ्रष्ट करने की तृष्णा इसे रहती है। यह गिरिवर तट के समान (दृढ) है इसके अनन्त बल का सामना करना अति कठिन है। यह आकाश से तेजों के साथ आ रही है—मेघ-माला इसका अनुसरण कर रही है ॥ ४८ ॥

हे नन्दक ! प्रशान्तरोषो भगवान् । गम्यताम् । हन्त निवृत्तः । यावद् गच्छामि । अये एतानि भगवदायुधवराणि ।

सोऽयं खड्गः खरांशोरपहसिततनुः स्वैः करैर्नन्दकाख्यः
सेयं कौमोदकी या सुररिपुकठिनोरःस्थलक्षोददक्षा ।
सैषा शार्ङ्गाभिधाना प्रलयघनरवज्यारवा चापयष्टिः
सोऽयं गम्भीरघोषः शशिकरविशदः शङ्खराट् पाञ्चजन्यः ॥५१॥

---

प्रयाति=व्रजति, महोल्केव=महती उल्का प्रज्वलिताग्रं काष्ठम्, तदिव विभाति=शोभते । अनुष्टुप् छन्द ॥ ५० ॥

टिप्पणी—वनिताविग्रह—वनितायाः विग्रह इव विग्रहः यस्य ( उप० बहु० ) । उल्का-उष्+क; षस्य ल् ॥ ५० ॥

अन्वय—स्वैः करैः खरांशोः अपहसिततनुः नन्दकाख्यः सोऽयं खड्गः, या सुररिपुकठिनोरःस्थलक्षोददक्षा सा इयं कौमोदकी प्रलयघनरवज्यारवा सा एषा शार्ङ्गाभिधाना चापयष्टिः । गम्भीरघोषः शशिकरविशदः सोऽयं पाञ्चजन्यः शङ्खराट् अस्ति ॥ ५१ ॥

संस्कृत टीका—एवं निवर्तितानि स्वान्तिके सम्भूय स्थितानि सर्वाणि भगवदायुधान्युद्दिश्याह—सोऽयमित्यादि । स्वैः=स्वकीयैः, करैः=रश्मिभिः, खरांशोः=सूर्यस्य, खराः तीक्ष्णाः अंशवः किरणाः यस्य, तस्य, अपहसिततनुः=अपहसिता उपहासं प्रापिता तनुः यस्य सः,

---

हे नन्दक ! भगवान् का क्रोध शान्त हो गया है । अब आप अपने स्थान पर पधारिये । अहा ! यह लौट गया । अब मैं भी जाता हूँ । अरे, ये ही तो भगवान् के श्रेष्ठ आयुध हैं ।

नन्दक नाम का यही वह खड्ग है—जो अपनी किरणों से प्रचण्ड सूर्य की भी विडम्बना करता है । यही कौमोदकी गदा है जो देवताओं के शत्रुओं के कठोर उरस्थलों को विदीर्ण करने में दक्ष है । यही शार्ङ्ग नाम का धनु है—जिसकी डोरी का निर्घोष प्रलय के मेघों की प्रचण्ड गर्जना के समान है और यही शङ्खराज पाञ्चजन्य है जो चन्द्रकला के समान स्वच्छ है और जिसका घोष गंभीर है ॥ ५१ ॥

हे शार्ङ्ग ! कौमोदकि ! पाञ्चजन्य !
दैत्यान्तकृन्नन्दक ! शत्रुवह्ने ! ।

तादृशः, तिरस्कृततैक्ष्ण्यः, नन्दकाख्यः = नन्दकनामा, सः = प्रसिद्धः, अयं = पुरोदृश्यमानः, खड्गः = असिः, या = गदा, सुररिपुकठिनोरःस्थलक्षोददक्षा = सुराणां देवानां रिपवः शत्रवः, तेषां कठिनानां उरःस्थलानां वक्षःस्थलानां क्षोदने भेदने विदारणे वा दक्षा कुशला, दानवपक्षवक्षःस्थलभञ्जनसमर्था, सा = पूर्वविज्ञाता एव, इयं = पुरोवर्तमाना, कौमोदकी = कौमोदकीनाम्नी गदा, प्रलयघनरवज्यारवा = प्रलये प्रलयकाले ये घनाः मेघाः तेषां रवः स्वनः इव ज्यायाः मौर्व्याः रवः टङ्कृतिः यस्याः सा, सा = प्रसिद्धा, एषा = पुरोदृश्यमाना, शार्ङ्गाभिधाना = शार्ङ्गनाम्नी, चापयष्टिः = धनुर्दण्डः; 'चापरेखा' इति वा पाठः, चापेषु रेखा चापरेखा धनुःप्रधानं सा, गम्भीरघोषः = गम्भीरः गभीरः घोषः गर्जनं यस्य सः, शशिकरविशदः = शशिनः चन्द्रस्य कराः किरणाः इव विशदः समुज्ज्वलः, सोऽयं = सर्वजनविदितः एषः, पाञ्चजन्यः = एतन्नामकः शङ्खः, शङ्खराट् = शंखराजः, अस्तीति शेषः। उपमालङ्कारः। स्रग्धरा वृत्तम् ॥ ५१ ॥

टिप्पणी—खरांशोः—खराः अंशवः यस्य स खरांशुः, तस्य (बहु०)। अपहसिततनुः—अपहसिता तनुः येन (बहु०)। सुररिपु०—उरसः स्थलं उरःस्थलम्, कठिनम् उरःस्थलं कठिनोरःस्थलम्, सुररिपूणां कठिनोरःस्थलम्, तस्य क्षोदे विनाशे दक्षा। प्रलयघन०—प्रलये घनाः प्रलयघनाः, तेषां, रवः इव ज्यारवः यस्याः सा (बहु०)। शार्ङ्गाभिधाना—शार्ङ्गम् अभिधानं नाम यस्याः सा (बहु०)। चापयष्टिः—चापस्य यष्टिः (ष० त०)। गम्भीरघोषः—गम्भीरः घोषो यस्य स (बहु०)। शशिकरविशदः—शशिनः करः शशिकरः, शशिकर इव विशदः (उप० स० )। शंखराट्—शङ्खानां राट् राजा इति (ष० त०) ॥ ५१ ॥

अन्वयः—हे शार्ङ्ग ! कौमोदकि ! पाञ्चजन्य ! दैत्यान्तकृन्नन्दक !

हे शार्ङ्ग ! हे कौमोदकि ! हे पाञ्चजन्य ! हे दैत्यों का संहार करने वाली अग्नि के समान नन्दक ! भगवान् कृष्ण का क्रोध दूर हो गया है; अतः आप

प्रशान्तरोषो भगवान् मुरारि
स्वस्थानमेवात्र हि गच्छ तावत् ॥ ५२ ॥

हन्त निवृत्ताः । यावद् गच्छामि । अये अत्युद्धतो वायुः । अतितपत्यादित्य । पर्वताः चलिताः । क्षुब्धा सागराः । पतिताः वृक्षाः । भ्रान्ता मेघा । प्रलीना वासुकिप्रभृतयो भुजङ्गेश्वरा । किन्नु खल्विदम् । अये अयं भगवतो वाहनो गरुडः प्राप्त ।

---

शत्रुवह्ने ! अत्र हि भगवान् मुरारिः शान्तरोषः । स्वस्थानमेव तावद् गच्छ ॥ ५२ ॥

संस्कृत टीका—हे शाङ्गं !=हे धनु.श्रेष्ठ, कौमोदकि=विष्णोः गदे, पाञ्चजन्य !=विष्णोः शङ्ख !, दैत्यान्तकृत्=हे असुरनाशकर, नन्दक=नन्दकाख्य खड्ग, शत्रुवह्ने.=शत्रूणा तत्सम्बोधने, हे रिपुदाहक !, अत्र=अस्मिन् समये, भगवान्=षड्ऐश्वर्यसम्पन्न, मुरारिः=कृष्ण, प्रशान्तरोष=प्रशान्त दूरीभूतः रोषः क्रोध. यस्य तादृश., अतः इति शेषः । तावद्=अतः स्वस्थानम्=स्वनिलयम्, एव=हि, गच्छ=व्रज । उपजाति वृत्तम् ॥ ५२ ॥

टिप्पणी—दैत्यान्तकृत्–दिते अपत्यं पुमान् दैत्य; दिति+ण्य, दैत्यानां दानवाना अन्त. दैत्यान्त. (ष० त०) दैत्यान्त करोतीति [उप०] कृत्–कृ+क्विप् ॥ ५२ ॥

संस्कृत टीका—हन्तेत्यादि । हन्त=इति हर्षे । अत्युद्धत.=अतिशयेन उद्धूत. अत्युत्कम्पित, अतितपति=अतिशयेन तपति, आदित्य=सूर्य । क्षुब्धा.=मर्यादामतिक्रमितुं प्रवृत्ताः । प्रलीना=प्रकर्षेण लीनाः, अदर्शन गता. । इदं वातात्युत्कम्पनसूर्यातितपनादिकम्, किन्नु खल्विदम्=आज्ञातम्,

---

सब अपने-अपने स्थान को जाइये ॥ ५२ ॥

अहा ! ये सब लौट गये । अब मैं जाता हूँ । प्रभंजन (वायु) तीव्र वेग से चलने लगा है । सूर्य अत्यन्त तप रहे हैं । पर्वत हिलने लग गये हैं । सागर क्षुब्ध हो उठे हैं । वृक्ष गिर रहे हैं । मेघ अस्त-व्यस्त हो रहे हैं । वासुकि आदि सर्पराज छिप गये हैं । यह भला क्या है ? अरे !

सुरासुराणां परिखेदलब्धं येनामृतं मातृविमोक्षणार्थम् ।
आच्छिन्नमासीद् द्विषतो मुरारेस्त्वामुद्वहामीति वरोऽपि दत्त ॥५३॥

केन निमित्तेन सम्भूतमिति न ज्ञायत इत्यर्थः, अज्ञातार्थे किंशब्दः । अये—इति स्मरणे,' तच्च निमित्तविषयम्, गरुडः—भगवतः वाहनः, प्राप्तः—सन्निहितः । एवञ्च भगवत्कैङ्कर्याय सन्निधास्यतो गरुडस्य सकोपगतिवेगो वाय्वतिकम्पादेर्निमित्तमिति फलितम् ।

टिप्पणी—उद्धूत—उद् + धू + क्त ।

अन्वयः—येन सुरासुराणां परिखेदलब्धं अमृतं मातृविमोक्षणार्थं द्विषतः आच्छिन्नम् आसीत् त्वां उद्वहामि इति मुरारेः वरोऽपि दत्तः ॥ ५३ ॥

संस्कृत टीका—गरुडस्य प्रभावमाह—सुरेति । येन=गरुडेन, सुरासुराणां=देवदैत्यानाम्, परिखेदलब्धं=परितः खेदः, तेन लब्धम्, अतिपरिश्रमप्राप्तम्, परिखेदेन समुद्रमथनायासेन लब्धमिति भावः । अमृतं=सुधां, मातृविमोक्षणार्थं=मातुः विनतायाः विमोक्षणार्थं सपत्नीमातृकद्रूदास्यान्मोचनाय, द्विषतः=शत्रोरिन्द्रात्, आच्छिन्नम्=बलाद् गृहीतं, स्वायत्तीकृतं तदन्तादित्यर्थः, आसीत्=अभूत्, त्वाम्=भवन्तम्, उद्वहामि=वहनं करोमि, इति=इत्थम्, मुरारेः=उपेन्द्रस्य, वरोऽपि=ईप्सितार्थोऽपि, दत्तः=प्रदत्तः, आसीत्, 'त्वा विष्णुम् उद्वहामि' इति एवंरूपः वरः दत्तः, स गरुड इति पूर्वेणान्वयः । उपजातिवृत्तम् । ५३ ॥

टिप्पणी—सुरासुराणां—सुराश्च असुराश्च, तेषाम् । मातृविमोक्षणार्थम्—मातुः विमोक्षणम्, तस्मै इति सुपर्णासुरत्वार्थम् । परिखेदलब्धम्—परिखेदेन लब्धम् (तृ॰त॰) । आच्छिन्नम्—आ + छिद् + क्त । (क) अमृतहरणविष्णुवरदानकथा महाभारते आदिपर्वणि त्रयस्त्रिंशाध्यायेऽनुसन्धेया ।

---

यह भगवान् का वाहन श्रेष्ठ गरुड आ गया ।

जिस अमृत को देवासुरों ने बड़े श्रम से प्राप्त किया था उसे ही अपनी माता को छुड़ाने के लिए इन्होंने शत्रु [इन्द्र] से बरबस छीन लिया था । उस समय इन्होंने भगवान् को यह वर दिया था कि 'मैं आपको अपनी पीठ पर उठाया करूँगा' ॥ ५३ ॥

गृह्यताम् ।

वासुदेव —सर्वं गृह्णामि । किं ते भूय प्रियमुपहरामि ।

धृतराष्ट्र —यदि मे भगवान् प्रसन्नः, किमतः परमिच्छामि ।

वासुदेवः—गच्छतु भवान् पुनर्दर्शनाय ।

धृतराष्ट्र —यदाज्ञापयति भगवान् नारायण ।

( निष्क्रान्त. )

---

पादप्रक्षालनार्थं तोयम् ।

सर्वमित्यादि । भूय· प्रियम्=बहुतरं प्रियम्, उपहरामि=करोमि । गच्छत्वित्यादि । पुनर्दर्शनरूपमीप्सित फलमुद्दिश्य सम्प्रति गमनमभ्यनुजानामीत्यर्थः ।

यदित्यादि । यद् आज्ञापयति=यत् कर्तव्यत्वेनादिशति । तद् गमनमनुतिष्ठामीत्याशय· ।

टिप्पणी—अर्घ्यम्—अर्घ+देयार्थे यत् । पाद्यम्–पाद+यत् । प्रशस्तिः शुभशसनम्' इत्युक्तलक्षणा प्रशस्ति वक्ष्यन् तस्या अनुकार्यवाक्यत्वायोगादाह–भरतेति । भरतवाक्यम्=भरतस्य नटस्यानुकर्तुर्वाक्य भरतवाक्यम् । प्रशस्तिमाह—इमामिति ।

---

को स्वीकार करें ।

वासुदेव—मैं सब कुछ स्वीकार करता हूँ । कहिये, मैं आपका क्या हित कर सकता हूँ ।

धृतराष्ट्र—यदि भगवान् मुझ पर प्रसन्न हैं तो इससे बढकर मुझे और क्या चाहिये ।

वासुदेव—अब आप पधारिये, फिर दर्शन दीजियेगा ।

धृतराष्ट्र—भगवान् की जैसी आज्ञा ।

( प्रस्थान )

( भरतवाक्यम् )

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्का राजसिंहः प्रशास्तु नः ॥ ५६ ॥

---

अन्वयः—नः राजसिंहः सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् एकातपत्राङ्काम् इमां महीं प्रशास्तु ॥ ५६ ॥

संस्कृत टीका—नः=अस्माकं, राजसिंहः=राजा सिंह इव, शौर्यधैर्यादियोगाद् राजसिंहः, सिंहसदृशपराक्रमो राजा, सागरपर्यन्तां=सागराः समुद्राः पर्यन्ताः अन्तिमाः सीमा, यस्याः सा ताम्, हिमवद्विन्ध्यकुण्डलाम्=हिमवान् हिमालयपर्वतः विन्ध्यः विन्ध्याचलश्च इति हिमवद्विन्ध्यौ तौ एव कुण्डले कर्णकुण्डलस्थापन्नौ यस्याः सा ताम्, आर्यावर्तस्य उत्तरदक्षिणसीमभूतौ पर्वतविशेषौ कुण्डले शोभाकरत्वात् कुण्डलस्थानीयौ यस्यास्ताम् । एकातपत्राङ्काम्=एकम् अद्वितीयम् आतपत्रं छत्रम् अङ्कः चिह्नं यस्या सा ताम्, एकः अधिपत्येकत्वाद् एक एव, न त्वनेकः आतपत्राङ्कः श्वेतच्छत्ररूपमधिपतिचिह्नं यस्यास्तां तथाभूताम्, इमाम्=दृश्यमानाम्, महीम्=पृथिवीम्, प्रशास्तु=प्रशासनं करोतु, अधिकरोतु एकाधिपतिविशिष्टत्वाकारेण शासनविषयीकरोतु । अस्माकं—राजा—समग्राया भारतभुवोऽप्रतिमो भर्ता स्यादिति भावः । अनुष्टुप् छन्दः ॥ ५६ ॥

भावार्थ—इयं पृथ्वी यस्याः पूर्वस्यां पश्चिमायां च दिशि समुद्रो विराजते, तथा यस्याः उत्तरस्यां दिशि हिमालयः, दक्षिणस्यां च दिशि विन्ध्याचलः कर्णकुण्डलरूपेण शोभते—राजाधिराजेन एकच्छत्राधिपेन प्रशासिता भवतु । अस्माकं राजा भूमेरस्याः कृत्स्नायाः सार्वभौमो भूयादिति श्लोकपरमार्थः ॥ ५६ ॥

टिप्पणी—एकातपत्राङ्काम्—आतपाद् त्रायते इति आतपत्रम् ( प०

---

( भरत वाक्य )

हमारे राजसिंह इस सागर-मेखलित पृथ्वी पर शासन करें जो एकच्छत्र राज्य वाली है तथा हिमालय और विन्ध्याचल जिसके कुण्डल हैं ॥ ५६ ॥

( निष्क्रान्ता सर्वे )

॥ दूतवाक्यं समाप्तम् ॥

———०———

स० ) एकम् आतपत्रम् ( कम० ) एकातपत्रम् अङ्क यस्या सा, ताम् (बहु०)। राजसिंह —राजा सिंह इव (उप० समास)। 'सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थवाचकाः'–इत्यमरः। प्रशास्तु–प्र + शास + लोट ( आशिषि ) ॥ ५६ ॥

नटराजं नमस्कृत्य देवीं च भरतं तथा।
भागीरथ्यास्तटे काश्यां लकाक्षेत्रे सुशोभने ॥ १ ॥
श्रीमद्रामकुबेरस्य मालवीयस्य सूनुना।
सुधाकरेण रचिता व्याख्या ज्योत्स्ना समन्विता ॥ २ ॥

॥ इति डा० सुधाकरमालवीयकृताया दूतवाक्यस्य 'ज्योत्स्ना' व्याख्यायां प्रथमोऽङ्कः ॥

॥ समाप्तमिदं दूतवाक्यं नाम नाटकम् ॥

———०———

( सभी का प्रस्थान )

॥ दूतवाक्य समाप्त ॥

॥ इस प्रकार महाकवि प० रामकुबेर मालवीय के आत्मज डा० सुधाकर मालवीय कृत दूतवाक्य नाटक की 'सरला' हिन्दी व्याख्या पूर्ण हुई ॥

———०———

## परिशिष्ट-१

### श्लोकानुक्रमणिका

## दूतवाक्य के श्लोकों की छन्दयोजना

| छन्द का नाम | अक्षर संख्या | श्लोकाङ्क | योग | लक्षण |
|---|---|---|---|---|
| अनुष्टुप् (श्लोक) | ८ | १, २, ७, ८, १६, १७, २०, २१ २७, २९ ३१, ३३, ३४, ३६, ३८, ४३, ४६, ५०, ५५, ५६, | २२ | श्लोके षष्ठ गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ |
| उपजाति | ११ | ९, १८, १९, २२, २८, ५२, ५३ | ७ | स्यादिन्द्रवज्रा यदि तौ जगौ ग । इत्यनयोरुपजाति उपेन्द्रवज्रा जतजास्ततो गौ। |
| पुष्पिताग्रा | १२/१३, | ६, ३७ | २ | अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा। |
| वंशस्थ | १२ | २१ | १ | जतौ तु वंशस्थमुदीरितं जरौ। |
| वसन्ततिलका | १४ | ३५, ११ १६, २३, ४१, ४२, ४४, ४९, ५४ | १३ | ज्ञेया वसन्ततिलका तभजा जगौ ग । |
| मालिनी | १५ | १०, ३५, ३९, ४०, ४५, ४७, ४८ | ७ | ननमयययुतेयं मालिनी भोगिलोकैः । |
| शार्दूलविक्रीडितम् | १९ | २४, ३२ | २ | सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् । |
| सुवदना | २० | ११ | १ | ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ ग सुवदना । |
| स्रग्धरा | ५१ | ५१ | १ | म्रभ्नैर्यानां त्रयेण त्रिमुनि यति युता |
|  |  |  | ५६ | स्रग्धरा कीर्तितेयम् । |

## परिशिष्ट-२

### सुभाषित-संग्रह

१—आः ! मनुष्याणामस्त्येव सम्भ्रम । [पृ० १३]

२—अलमलं बन्धुजने परुषमभिधातुम् । [पृ० ३०]

३—कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतरा ।
सम्बन्धो बन्धुभि श्रेयान् लोकयोरुभयोरपि ॥ २९ ॥

४—को नाम लोके स्वयमात्मदोषमुद्घाटयेन्नष्टघृण सभासु ॥ १८ ॥

५—देशकालावस्थापेक्षि खलु शौर्यं नयानुगामिनाम् [पृ० ३२]

६—द्यूताधिकारमवमानममृष्यमाणा ।
सत्त्वाधिकेषु वचनीयपराक्रमा स्यु ॥ ११ ॥

७—पुण्यसञ्चयसम्प्राप्यामधिगम्य नृपश्रियम् ।
वञ्चयेद् य सुहृद्बन्धून् स भवेद्विफलश्रम ॥ २५ ॥

८—राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते ।
तल्लोके न हि याच्यते न तु पुनर्दीनाय वा दीयते ॥ २४ ॥

चौखम्बा अमरभारती ग्रन्थमाला
३८

भासनाटकचक्रे

# दूतघटोत्कचम्

'कल्याणी' संस्कृत-हिन्दी-व्याख्योपेतम्

व्याख्याकार –
पण्डित रामनाथत्रिपाठी शास्त्री




चौखम्बा अमरभारती प्रकाशन
वाराणसी
१९७९

CHAUKHAMBA AMARABHARATI GRANTHAMALA

38



# DŪTAGHATOTCACH

OF

## MAHĀKAVI BHĀSA

Edited With

*'Kalyani' Sanskrit-Hindi Commentaries*

BY

Pt. RAMANATH TRIPATHI SHASTRI




**Chaukhamba Amarabharati Prakashan**

. 'NASI–221001

'79

# भूमिका

## महाकवि भास

महाकवि भास संस्कृत साहित्य के प्रख्यात एवं लब्धप्रतिष्ठ कवियों में से हैं। कविकुलगुरु कालिदास ने 'मालविकाग्निमित्र' नाटक में सूत्रधार के मुख से प्रश्न कराया है कि प्रथितयश वाले भास, सौमिल्ल, कविपुत्र आदि कवियों की कृतियों का अतिक्रमण कर, वर्तमान कवि कालिदास की कृति का इतना अधिक सम्मान क्यों किया जा रहा है ?[1] इस कथन से स्पष्ट प्रतीत होता है कि कालिदास के समय में महाकवि भास अत्यन्त प्रसिद्ध थे और उनके नाटकों को अत्यधिक लोकप्रियता प्राप्त थी। हर्ष के सभा-पण्डित बाणभट्ट ने 'हर्षचरित' में भास के नाटकों की प्रशंसा करते हुए कहा है कि भास ने सूत्रधार से आरम्भ किये गये, बहुत भूमिका वाले तथा पताका ( १—नाटकीय व्यङ्ग्य 'पताका स्थान' २—ध्वजा ) से युक्त देवकुलों के तुल्य अपने नाटकों से अच्छा यश प्राप्त किया।[2] यहाँ यह अवधेय है कि संस्कृत के नाटक सामान्यतया नान्दी से प्रारम्भ होते हैं किन्तु भास के नाटक सूत्रधार से प्रारम्भ होते हैं और उनमें नान्दी का सर्वथा अभाव रहता है। वाक्पतिराज ने अपने 'गउडवहो' नामक प्राकृत महाकाव्य में भास को 'जलणमित्त'—ज्वलनमित्र ( अग्नि का मित्र ) कहा है।[3] भास ने वासवदत्ता के अग्नि में जल जाने की झूठी खबर फैलाकर नाटकीय वस्तु-विकास का उपयुक्त अवसर निकाला है। अतः बहुत सम्भव है इसी से भास को 'ज्वलनमित्र कहा गया है। राजशेखर ने अपनी 'काव्य-

---

१ 'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः।'—मालविकाग्निमित्र

२. सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥—हर्षचरित।

३. भासम्मि जलणमित्ते कन्तीदेवे तहावि रहुआरे।
सो बन्धवे अ बन्धम्मि हारि अन्दे अ आणन्दो ॥—गउडवहो।

प्रकार का भरत वाक्य है। शेष नाटको के भरत वाक्य मे भी प्राय 'राजसिंह प्रशास्तु न' इस वाक्य का प्रयोग अवश्य मिलता है।

५—इन सभी नाटको की भाषा तथा शैली मे अद्भुत समानता पायी जाती है।

६—इन नाटको मे भरत-प्रतिपादित नाट्यनियमो का कठोरता से पालन नहीं किया गया है। मृत्यु, युद्ध आदि का रगमञ्च पर प्रदर्शन किया गया है तथा अभिषेक, पूजा, शपथ अथवा अश्रु-प्रक्षालन के लिये जल रङ्गमञ्च पर लाया है। इसी प्रकार शयन, क्रीडा तथा दुराह्वान की भी योजना रगमच पर ही की गयी है।

७—इन नाटको मे कुछ शब्दो का प्रयोग उनके प्रचलित अर्थों से भिन्न अर्थ मे किया गया है। जैसे—आर्यपुत्र शब्द का प्रयोग अनेकत्र ऐसे अर्थो मे हुआ है जिसका विधान नाट्य शास्त्र मे नहीं है।

८—इन सभी नाटको मे 'आकाशभाषित' की योजना प्राय मिलती है।

९—इनमे से कई नाटको मे छोटे छोटे पात्रो के नामो मे अभिन्नता पायी जाती है। जैसे—प्रतिज्ञा योगन्धरायण और दूतवाक्य इन दोनो नाटको में कञ्चुकी का नाम बादरायण है। इसी प्रकार स्वप्नवासवदत्त, प्रतिमानाटक, प्रतिज्ञा यौगन्धरायण और अभिषेक इन चारो नाटको मे प्रतिहारी का नाम विजया है।

१०—प्राय सभी नाटको मे नाट्यनिर्देश की न्यूनता समान रूप से मिलती है। जो नाट्यनिर्देश दिये भी गये हैं उनमे दो- दो, तीन-तीन निर्देश एक साथ हैं। जैसे—'निष्क्रम्य पुन प्रविश्य'।

११—इन सभी नाटको के नामो का उल्लेख तत्तन्नाटको के अन्त मे ही किया गया है, अन्यत्र नही।

१२—अधिकाश नाटको मे 'पताका स्थान' और 'मुद्रालङ्कार' का एक समान प्रयोग किया गया है।

१३—इन नाटको मे पाणिनीय व्याकरण के नियमो का कडाई से पालन नहीं किया गया है, अत अनेकत्र अपाणिनीय प्रयोग मिलते हैं।

१४—इन सभी नाटकों मे समान भावना, समान दृश्यो की अवतारणा,

समान शब्दो और समान वाक्यो की उपलब्धि एवं समान वर्णन-पद्धति द्रष्टव्य है।

उपर्युक्त समानताओ के आधार पर यह स्पष्ट सिद्ध है कि इन नाटको का प्रणेता कोई एक ही व्यक्ति था। इन नाटको मे से स्वप्नवासवदत्त की रचना भास द्वारा हुई, इसमे राजशेखर का पूर्वोक्त साक्ष्य उपलब्ध है। इसके अतिरिक्त आचार्य अभिनव गुप्त ने भी 'अभिनव भारती' मे स्वप्नवासवदत्त का उल्लेख किया है।[1] फलत. अन्य नाटकों को भी भासकृत माना गया है जो पूर्वोक्त समानताओ के आधार पर नितान्त युक्त है।

## भास का समय

कालिदास ने अपने नाटक 'मालविकाग्निमित्र' मे भास को आदर पूर्वक स्मरण किया है, अतः स्पष्ट सिद्ध है कि भास कालिदास से प्राचीन थे। कुछ लोग कालिदास का समय ४०० ई० बताते हैं तदनुसार भास ४०० ई० से पूर्व के सिद्ध होते हैं। कुछ विद्वान् कालिदास का समय ईसा की प्रथम शताब्दी निश्चित करते हैं, उस आधार पर भास ईसा की प्रथम शताब्दी से प्राचीन ठहरते हैं। चाणक्य ने अपने अर्थशास्त्र नामक ग्रन्थ मे 'अपीह श्लोकौ भवत' कह कर दो श्लोक उद्धृत किये हैं, इनमे दूसरा श्लोक 'प्रतिज्ञा यौगन्धरायण' मे मिलता है। जो इस प्रकार है—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥

चाणक्य ने उक्त श्लोक को अवश्य ही भास से लिया होगा। यदि किसी स्मृति का होता तो अवश्य ही 'इति स्मृतौ' लिखते। इतिहासकार चाणक्य का समय ई० पू० ४०० मानते हैं अत. भास इससे प्राचीन ठहरते हैं।

भास के प्रतिमानाटक मे बृहस्पति कृत अर्थशास्त्र मे रावण की दक्षता का उल्लेख हुआ है।[2] बार्हस्पत्य अर्थशास्त्र चाणक्य से बहुत पहले का है। यदि भास चाणक्य के बाद होते तो उसके अर्थशास्त्र का उल्लेख

१. क्वचित्क्रीड.—यथा वासवदत्तायाम्।
२. भो॰ काश्यप गोत्रोऽस्मि, साङ्गवेदमधीये॰॰॰ बार्हस्पत्यमर्थशास्त्रं।॰॰

भास के नाटको की प्रमुख विशेषता उनकी अभिनेयता है। ये सभी नाटक थोडे हेर फेर के साथ बडी सरलता से रगमच पर अभिनीत होने योग्य बने हैं। इनमे न तो वर्णन की प्रचुरता है और न अनावश्यक कथावस्तु का विस्तार ही है अत इनके अभिनय मे किसी तरह के प्रतिरोध की गुञ्जाइश नही है।

भास का नैपुण्य चरित्रचित्रण मे अद्वितीय है। वे अपने पौराणिक पात्रो को इतनी वास्तविकता मनोवैज्ञानिकता और मार्मिकता से चित्रित करते है कि वे पाठको अथवा दर्शको को सर्वथा नवीन लगते हैं। भास ने पद्यो के माध्यम से अपने पात्रो मे सवाद कराने का जो ढग अपनाया है वह भी उनकी नाट्यकला के वैलक्षण्य का द्योतक है। किसी पद्य को कई भागो मे विभक्त कर उन्ह वे अपने विभिन्न पात्रो के मुख से कथोपकथन के रूप मे प्रस्तुत करवाते हैं जिससे सवादो मे भावोत्तजकता और चुटीलापन पैदा हो जाने से विशेष नाटकीयता आ जाती है। भास के प्राय सभी पात्र अन्तर्द्वन्द्व युक्त होने के कारण काल्पनिक नही लगते अतएव उनके प्रति दर्शको के हृदय मे पूर्ण सहानुभूति उत्पन्न होती है। अपने नाटको मे भास ने इसी उद्देश्य से सघर्षपूर्ण घटनाक्रम की सृष्टि की है।

नाटको को प्रभावोत्पादक बनाने मे भास की कवित्वशक्ति का भी बडा हाथ है। इनकी कविता मे प्रवाह और प्रसाद है। भास न प्रसङ्ग वश अपने नाटका म सन्ध्या, रात्रि, तपोवन मध्याह्न इत्यादि का जो वर्णन किया है वह बडा ही सजीव तथा पूरे दृश्य का बिम्ब ग्रहण कराने मे पूर्ण सफल हुआ है। मानवीय तथा बाह्य प्रकृति के चित्रण मे भास बेजोड है। रात के सघन अन्धकार का प्रभावशाली वर्णन देखिए—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जन नभ ।
असत्पुरुषसेवेव दृष्टिर्निष्फलता गता ॥ —बालचरित १।१५

भास के इस पद्य का पूर्वार्द्ध अपने वैशिष्ट्य क कारण अलकारशास्त्र मे उत्प्रेक्षा का प्रसिद्ध उदाहरण माना जाता हैं।

भास के नाटको म सुन्दर से सुन्दर उपमाए मिलती है—

सूर्य इव गतो राम , सूर्यं दिवस इव लक्ष्मणोऽनुगत ।
सूर्य दिवसावसाने छायेव न दृश्यते सीता ॥प्रतिमा २।७

अयोध्यामटवीभूतां पित्रा भ्रात्रा च वर्जिताम् ।
पिपासार्ताऽनुधावामि क्षीणतोयां नदीमिव ।। प्रतिमा ३।१०

भास ने अनेकत्र पात्रों के मुह से जो नीतिवाक्य कहलवाये हैं वे भी भर्तृहरि के नीतिश्लोकों के समान ही हृदयावर्जक हैं। इस प्रकार भास के नाटकों में नाटकीय विधान के साथ कवि व वस्तु का सद्योग मिलता है।

## भास की शैली

भास के नाटकों की शैली अपनी विशिष्ट महत्ता रखती है। प्रसाद माधुर्य और ओज इनकी शैली के विशेष गुण हैं। भास को विकट बन्ध क्लिष्ट कल्पना और लम्बे लम्बे समस्त पदों से घृणा है क्योंकि नाटक के लिये ये सब सर्वथा अनुपयुक्त हैं। छोटे छोटे सरल वाक्यों में गम्भीर तथा रसपेशल भावों की व्यंजना भास की शैली की प्रमुख विशेषता है। इनके द्वारा प्रयुक्त लोकोक्तियों एवं सूक्तियों से अलङ्कृत छोटे छोटे वाक्यों की व्यंजकता एवं प्रभावोत्पादकता को देखकर सहज अनुमान होता है कि इनके समय में संस्कृत लोक व्यवहार की भाषा रही होगी। यद्यपि इनकी शैली प्रायः प्रसाद एवं माधुर्यगुण से ही अधिक सम्पन्न है तथापि प्रसंगानुकूल वीर रस की अभिव्यक्ति में ओज का भी आश्रय लिया है और वीर रस की व्यंजना में भी इन्हें पूरी सफलता मिली है।

भास के नाटकों में उपमा रूपक और उत्प्रेक्षा जैसे सरल भावों रूपक एवं प्रचलित अलंकारों का ही अधिकतर प्रयोग हुआ है। सीमित शब्दों तथा सरल भाषा में हृदगत भावों को अभिव्यक्त करना भास की अपनी विशेषता है। राम के वन चले जाने पर दशरथ की करुण दशा का चित्र सीधे सादे शब्दों में देखिए—

पतत्युत्थाय चोत्थाय हा हेत्युच्चैर्लपन् मुहुः ।
दिशं पश्यति तामेव यया यातो रघूद्वहः ॥
हा वत्स ! राम ! जगतां नयनाभिराम !
हा वत्स ! लक्ष्मण ! सलक्षणसर्वगात्र !
हा साध्वि ! मैथिलि ! पतिस्थितचित्तवृत्ते !
हा हा गताः किल वनं बत मे तनूजाः ।।—प्रतिमा २।३।४

भास ने दर्शक या पाठक का कौतूहल बढ़ाने के लिए कहीं कहीं ऐसे

नाटकीय-व्यंग्यों की अवतारणा की है कि वे दर्शक या पाठक के हृदय को सहसा झकझोर देते हैं। जैसे—'प्रतिज्ञा यौगन्धरायण' में जब महासेन और अङ्गारवती परस्पर विचार-विमर्श कर रहे हैं कि वासवदत्ता के लिए कौन राजा उपयुक्त है, उसी समय कञ्चुकी आकर सहसा कहता है—'वत्सराज'। इस प्रकार उनके प्रश्न का आकस्मिक उत्तर मिल जाता है, यद्यपि कञ्चुकी कहने आया था कि वत्सराज बन्दी बना लिया गया, जैसा कि आगे वह स्वयं स्पष्ट करता है। इसी प्रकार 'अभिषेक' नाटक में जब रावण सीता से कहता है कि इन्द्रजित् ने राम और लक्ष्मण को मार डाला। अब तुम्हें कौन मुक्त करेगा? उसी समय एक राक्षस सहसा आकर कहता है 'राम'। यद्यपि वह कहना यह चाहता है कि राम ने इन्द्रजित को मार डाला। भास की यह पद्धति अत्यन्त प्रभावोत्पादक है।

भास अल्प शब्दों के द्वारा भाव-व्यंजना के अतिरिक्त कहीं-कहीं शब्द-प्रयोग के बिना ही, या यों कहिए कि मौन का आश्रय लेकर हृद्गत समस्त भावों की मार्मिक व्यंजना कर देते हैं। जैसे—'अनुव वैव वन गता-।'—प्रतिमा २।१७। इससे बढकर शैली की सक्षिप्तता और क्या हो सकती है? राम-लक्ष्मण-सीता के अकथनीय हृद्गत भावों के मर्मस्पर्शी चित्र भी उपस्थित कर दिये और अपनी ओर से उसके लिए एक भी शब्द का प्रयोग नहीं करना पड़ा। अतः भास की शैली नाटककारों के लिए आदर्श शैली कही जानी चाहिए।

## भास के दोष

भास के नाटकों में कुछ त्रुटियाँ भी मिलती हैं। जैसे—( १ ) 'निष्क्रम्य प्रविशति' आदि द्रुतगतिवाले नाटकीय निर्देशों का आधिक्य इनकी वास्तविकता में सन्देह उत्पन्न कर देता है। ( २ ) इनके नाटकों में कालान्विति का भी अभाव है जिसे स्वप्नवासवदत्त, चारुदत्त, बालचरित, अभिषेक आदि नाटकों में स्पष्ट देखा जा सकता है। ( ३ ) कृष्ण के निर्जीव शस्त्रास्त्रों का ( 'बालचरित' में ) मानवरूप में रंगमंच पर उपस्थित होना अस्वाभाविकता उत्पन्न कर देता है। ( ४ ) नाट्यशास्त्र द्वारा वर्जित दृश्यों ( युद्ध, मरणादि ) को भी रंगमच पर दिखाया गया है। ( ५ ) अपरिचित पात्रों का सहसा प्रवेश नाट्यशास्त्र-विरुद्ध है। इससे अस्वाभाविकता भी आ जाती है।

किन्तु ये दोष साधारण हैं। इनसे भास के महत्त्व में कोई कमी नहीं आती। 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः।'

---

# दूतघटोत्कच : समीक्षा

## कथावस्तु

इस नाटक का कथानक अभिमन्यु के मरण के बाद की घटनाओं से सम्बन्ध रखता है। कौरवों की चाल से अर्जुन को कुरुक्षेत्र छोड़कर संशप्तक राजाओं से लड़ने के लिए दक्षिण प्रदेश में जाना पड़ा। अर्जुन के साथ ही श्रीकृष्ण के भी चले जाने से पाण्डवों को असहाय समझ कौरवों की तरफ से द्रोणाचार्य ने कौशलपूर्ण ढंग से पद्मव्यूह ( चक्रव्यूह ) बनाकर उसके भेदन में पाण्डवों को अशक्त जान ललकारा।

युधिष्ठिर ने अभिमन्यु को इस व्यूह भेदन के लिए भेजा और स्वयं चारों पाण्डव उसके पीछे जाने के लिए तैयार हुए। अकेले अभिमन्यु से ही पार न पा सकने से कौरवों ने वरप्राप्त जयद्रथ ( दु:शलापति तथा दुर्योधन का बहनोई ) के द्वारा पाण्डवों को अवरुद्ध कर भीतर प्रविष्ट नहीं होने दिया। सब कौरवों ने छल कपट का आश्रय ले एकाकी बालक अभिमन्यु को निहत्था कर मार डाला।

नाटक के प्रारम्भ में नान्दीपाठ के अनन्तर सूत्रधार विष्णु की प्रार्थना कर ज्यों ही नाटक की सूचना देने को तत्पर होता है, उसे कोलाहल सुनाई देता है जिससे वह समझ जाता है कि संशप्तकों से लड़ने के लिए अर्जुन के चले जाने पर, भीष्मवध से चिढ़े हुए धृतराष्ट्र के पुत्रों ने अभिमन्यु को घेर कर मार डाला और उसके बाणों से क्षत-विक्षत राजा लोग अर्जुन की प्रतिहिंसा से डरे हुए अपने अपने शिविर में प्रवेश कर रहे हैं। इधर अभिमन्यु के मारे जाने का वृत्तान्त सुनाने के लिए भट धृतराष्ट्र के पास जाता है और कहता है कि अपने पिता अर्जुन के समान पराक्रम दिखाने वाले बालक अभिमन्यु को कौरव-वीरों ने मार डाला। इस समाचार से स्तब्ध धृतराष्ट्र से गान्धारी कहती है कि इस बालक के वध से कुलनाश का समय उपस्थित हो गया। धृतराष्ट्र भी कहते हैं कि जब पुत्र शोक से सन्तप्त अर्जुन क्रुद्ध होकर

धनुष ग्रहण करेगा तो पूरे विश्व का विनाश हो जायगा। वहीं उनकी पुत्री दुशला भी बैठी है। वह कहती है कि जिसने अभिमन्यु की पत्नी उत्तरा को विधवा बनाया उसने अपनी स्त्री को भी वैधव्य दिया है। धृतराष्ट्र के पूछने पर भट ( जयवात ) ने बताया कि अभिमन्यु को बहुत से राजाओं ने मिल कर मारा किन्तु इसके निमित्त थे जयद्रथ। यह सुनकर धृतराष्ट्र ने कहा—यदि जयद्रथ निमित्त थे तो वे मारे गये। दुश्शला भी रोने लगती है। लोग दुश्शला को समझाते हैं किन्तु धृतराष्ट्र कहते हैं कि कृष्ण, बलराम और पाण्डवों के स्नेहभाजन अभिमन्यु को मार कर संसार मे कौन है जो जीवित बचेगा? भट के यह बताने पर कि संशप्तको के साथ युद्ध करने के लिए दूर गये हुए अर्जुन को दिखाने के लिए ही युधिष्ठिर आदि पाण्डव मृतक अभिमन्यु को रोक रखे है, धृतराष्ट्र को पक्का विश्वास हो जाता है कि अब कौरवों को विनष्ट होने से कोई बचा नही सकता। यहाँ तक तो कथा की पृष्ठभूमि अथवा पूर्वार्द्ध समझना चाहिए। अब आगे दुर्योधन, दु:शासन और शकुनि आदि के प्रवेश के साथ कथा के उत्तरार्द्ध का प्रारम्भ समझना चाहिए। दुर्योधन आदि अभिमन्यु के मारे जाने से बहुत प्रसन्न होते हैं और धृतराष्ट्र का अभिवादन करते हैं किन्तु वे आशीर्वाद देने के स्थान पर मौन धारण किये रहते हैं। कारण पूछने पर धृतराष्ट्र कहते हैं—'कृष्ण और अर्जुन के प्रिय अभिमन्यु को मार कर तुम लोग जीवन से पराङ्मुख हो गये हो अत आशीर्वाद देना व्यर्थ है। सौ पुत्रों के बीच हुई एक प्रियपुत्री दुःशला भी तुम लोगों की कृपा से वैधव्य को प्राप्त हो गयी।' इस पर दुर्योधन ने कहा कि अकेले जयद्रथ ने नही, अभिमन्यु को बहुत से वीरों ने रोक कर मारा। यह सुनकर धृतराष्ट्र ने भर्त्सना करते हुए कहा कि अकेले बालक को मिल कर मारते हुए तुम लोगो की भुजाएँ गिर क्यो नही गयी। दुर्योधन ने इसका सटीक उत्तर यह कह कर दिया कि छलपूर्वक भीष्मपितामह को मारने वाले पाण्डवो की भुजाएं नहीं गिरी तो आप हमारी ही भर्त्सना क्यो कर रहे हैं। धृतराष्ट्र ने चेतावनी देते हुए कहा कि जब अकेले बालक अभिमन्यु ने इतना पराक्रम दिखाया तो पुत्र-मरण से शोकार्त अर्जुन कितना पराक्रम दिखायेंगे? अवज्ञापूर्वक दुर्योधन के पूछने पर कि अर्जुन का कैसा पराक्रम है,

धृतराष्ट्र ने कहा—अर्जुन के पराक्रम के विषय मे तुम निवात-कवच दानवों के जीवनरूप उपहार से अर्चित इन्द्र से पूछो, किरात वेष मे अर्जुन के अस्त्रों से परितुष्ट हुए शङ्कर से पूछो, खाण्डव वन मे सर्पों की आहुति से तृप्त हुए अग्नि से पूछो और पूछो उस चित्राङ्गद नामक गन्धर्व से जो तुम्हें बाँधकर आकाश मे ले जा रहा था और उस समय अर्जुन ने ही तुम्हें बचाया था।

धृतराष्ट्र की बात सुनकर दुर्योधन ने कहा—'मेरी सेना मे महारथी कर्ण अर्जुन से प्रभाव और पराक्रम मे कम नहीं है।' धृतराष्ट्र ने उत्तर दिया—'कर्ण बेचारा तो हास्यास्पद है। इन्द्र ने उसका कवच ले लिया है। वह अधर्मी और प्रमादी है। कपट द्वारा सीखे गये उसके अस्त्र भी विफल हो गये हैं अत वह अर्जुन की क्या तुलना कर सकता है?

इतने मे शकुनि कहने लगा—'आप हम लोगो की भर्त्सना करने मे समर्थ हैं।'

धृतराष्ट्र ने कहा—अरे शकुनि! द्यूतक्रीडा मे दक्ष तू ने जो कर्म किया है, उसी का यह परिणाम है कि कौरव कुल की यह द्वेषाग्नि शिशु की आहुति के पश्चात् भी नहीं शात हो रही है।

उसी समय शंख, पटह और सिंहनाद मिश्रित घोर शब्द सुनाई पडा और दुर्योधन ने उसके कारण का पता लगाने के लिए भट ( जयत्रात ) को पाण्डवो के शिविर मे भेजा। भट ने जाकर और लौट कर बताया कि कृष्ण से बारम्बार प्रेरित होकर अर्जुन ने मृतपुत्र को गोद मे लेकर प्रतिज्ञा की है कि जिस कौरव पक्षीय ने मेरे पुत्र का वध किया है और जो राजागण उससे सन्तुष्ट हुए हैं उन सबको मैं कल सूर्यास्त के पूर्व ही मार डालूँगा और यदि ऐसा न कर सका तो चितारोहण कर प्राण दे दूँगा।

यह सुन कर दुर्योधन आदि प्रसन्न हो कहते हैं कि द्रोणाचार्य की मन्त्रणा से ऐसा व्यूह रचा जायेगा कि अर्जुन जयद्रथ का पता न पा सकेंगे और चितारूढ़ हो जायेंगे। उनकी बात सुनकर धृतराष्ट्र कहते हैं कि चाहे तुम लोग पृथ्वी मे समा जाओ, चाहे आकाश मण्डल मे उड जाओ किन्तु कृष्ण द्वारा निर्दिष्ट अर्जुन के बाण तुम लोगो का पीछा सर्वत्र करेंगे।

'उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ॥
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।
प्रख्यातमितिवृत्त च कविर्बुद्ध्या प्रपञ्चयेत् ॥
भाणवत्सन्धिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ ।
युद्धं च वाचा कर्त्तव्यं निर्वेदवचनं बहु ॥'

इस नाटक मे बुद्धिप्रपञ्चित प्रख्यातवृत्त, करुणरस, वाग्युद्ध तथा जयपराजय और बहुस्त्री परिदेवन आदि बातें पायी जाती हैं। अत. इसे 'उत्सृष्टिकाङ्क' के अधिक निकट पाकर अधिक विद्वान् 'उत्सृष्टिकाङ्क' मानते हैं। वास्तव मे निश्चित रूप से इसे किसी एक कोटि मे नही रक्खा जा सकता है।

सामान्य विशेषताएँ—डा० गणपति शास्त्री के अनुसार यह नाटक न सुखान्त है न दु खान्त। इस नाटक मे वीर तथा करुण रस का अद्भुत सम्मिलन है। घटोत्कच तथा दुर्योधनादि के कथोपकथन मे वीर रस की झलक मिलती है और धृतराष्ट्र, गान्धारी और दुश्शला की उक्तियो से करुण-रस की धारा प्रवाहित होती है। प्रभाव की दृष्टि से करुण रस का प्रकर्ष अधिक है क्योकि यहाँ वीररस करुण मूलक ही है। दु ख एवं विषाद की घनी छाया पूरे नाटक मे बराबर बनी हुई है।

यह नाटक भरत वाक्य के बिना ही सहसा समाप्त हो जाता है अत कुछ लोग इसे अपूर्ण मानते हैं। संभव है इसमे आगे भी कुछ अश रहा हो किन्तु जहाँ तक नाटक के उद्देश्य की बात है वह पूर्ण सफल है।

डा० विन्तर नित्स और डा० पुसालकर ने इस नाटक के अन्तिम श्लोक के विषय मे जो श्रीकृष्ण के सन्देश के रूप मे हैं आशका व्यक्त की है कि यह श्लोक संदर्भ से बाहर प्रतीत होता है। जो भी हो, श्लोक अपने स्थान पर नितान्त उचित है। यह ज्ञातव्य है कि घटोत्कच श्रीकृष्ण के तीन सन्देश लेकर वहाँ आया है—पहला धृतराष्ट्र के लिए, दूसरा दुर्योधन के लिए और तीसरा सब कौरवो के लिए।

भास ने अपने अन्य नाटको की भाँति इसमे भी नाटकीय व्यङ्ग्य की उपस्थापना की है जो अत्यन्त कारुणिक है। अभिमन्यु के मारे जाने का समाचार सुनकर धृतराष्ट्र और गान्धारी दोनो शोकनिमग्न करुण विलाप

कर रहे थे। वहीं पास में बैठी दुश्शला के मुख से सहसा अनजान में उसी के पक्ष में भयानक अमाङ्गलिक सत्य वचन निकल पड़ा—'जिसने इस समय वह उत्तरा को वैधव्य दिया है उसने अपनी युवतियों को भी वैधव्य दिया है।' इसके बाद ही भट सूचित करता है कि अभिमन्यु को अनेक राजाओं ने मिल कर मारा है किन्तु उसका निमित्त जयद्रथ था। यह सुन कर धृतराष्ट्र शोकसन्तप्त होकर कहते हैं—'हन्त जयद्रथो निहत।' उधर दुश्शला भी वैधव्य प्राप्ति की अनिवार्य संभावना से रो पड़ती है।

इस नाटक में धृतराष्ट्र के विषाद और दुर्योधनादि के हर्ष इन दो विरोधी भावों की सफल अभिव्यंजना हुई है। संवादों का चोटीलापन बढ़ते-बढ़ते उग्र रूप धारण कर लेता है, उसी समय भास कथानक में मोड़ लाकर उस प्रसंग को वहीं आगे बढ़ने से रोक देते हैं। धृतराष्ट्र और दुर्योधन के परुष वार्तालाप से परिस्थिति गम्भीर होते ही घटोत्कच के सहसा प्रवेश ने उसे संभाल लिया, अन्यथा भट के अनुसार आगे की घटना बड़ी ही भयंकर होती—

'क्रूरमेव नरपतिं नित्यमुद्यतशासनम्।
यः कश्चिदपरो ब्रूयान्न तु जीवेत्स तत्क्षणम्।। ३२ ।।

इसी प्रकार धृतराष्ट्र द्वारा शकुनि की भर्त्सना की जाने पर नेपथ्य में भूकम्प के साथ भारी ध्वनि होती है और सब का ध्यान उसी ओर आकृष्ट हो जाता है जिससे शकुनि को धृतराष्ट्र की वक्रोक्तियों का उत्तर देने का अवसर नहीं मिलता है और परिस्थिति की गम्भीरता वहीं शान्त हो जाती है।

अन्त में भी घटोत्कच और दुर्योधन आदि के बीच वार्तालाप बढ़ते-बढ़ते युद्ध तक की नौबत आ जाती है। क्रुद्ध घटोत्कच युद्ध के लिये चुनौती देने लगता है—

दष्टोष्ठो मुष्टिमुद्यम्य तिष्ठत्येष घटोत्कचः।
उत्तिष्ठतु पुमान् कश्चिद् गन्तुमिच्छेद् यमालयम्।।५०।।

बात बिगड़ती देख कर धृतराष्ट्र 'पौत्र घटोत्कच! मर्षयतु मर्षयतु भवान्। मद्वचनावगन्ता भव।'—अपनी अनुनयात्मक बातों से बात बना लेते हैं। भास की कला की भंगिमाएँ अत्यन्त उत्कृष्ट एवम् अनुपम हैं।

# पात्र-परिचय

## पुरुष पात्र

| | | |
|---|---|---|
| १ | धृतराष्ट्र | दुर्योधन का पिता। |
| २ | भट | जयभात नामक समाचार वाहक। |
| ३ | दुर्योधन | धृतराष्ट्र का ज्येष्ठ पुत्र, कुरुराज। |
| ४ | दुःशासन | दुर्योधन का छोटा भाई। |
| ५ | शकुनि | दुर्योधन का मामा। |
| ६ | घटोत्कच | हिडिम्बा ( राक्षस-कन्या ) मे भीम से उत्पन्न पुत्र, जो दूत बन कर उपस्थित हुआ है। |

## स्त्री पात्र

| | | |
|---|---|---|
| १ | गान्धारी | दुर्योधन की माता। |
| २. | दुःशला | दुर्योधन की बहिन, जयद्रथ की पत्नी। |
| ३. | प्रतिहारी | द्वारपालिका। |



भासनाटकचक्रे

# दूतघटोत्कचम्

## 'कल्याणी' संस्कृत-हिन्दीव्याख्योपेतम्

### प्रथमोऽङ्कः

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

---

❀ कल्याणी ❀

नीलाम्बुदाभाय मनोहराय परात्मने गो-द्विजपालकाय ।
ब्रह्मादिसेव्याय दयापराय नमोऽस्तु कृष्णाय जनार्दनाय ॥

अथ तत्रभवान् कविताकामिनीहासो महाकविर्भासो नटैः स्वानुष्ठितवाद्य-वादनादिरूपया नान्द्या रङ्गसामाजिकवृन्दे समुन्मुखीकृते सति, निर्विघ्न चिकीर्षितग्रन्थसमाप्तये, तस्य सानन्दाभिनयसम्पत्तये, सामाजिकानामानुषङ्गिक-मङ्गलसिद्धये च शिष्टाचारज्ञापितस्मृतितर्कित-श्रुतिबोधितकर्तव्यताकमाशीर्वादा त्मकं स्वरचितं नान्द्यात्मकं मङ्गलं सूत्रधारमुखेन पाठयितुं ततो नाटकीयकथा-वस्तूपक्षेपं कारयितुं च रङ्गमञ्चे सूत्रधारं प्रवेशयन्निर्दिशति—नान्द्यन्ते इति । नान्द्यन्ते—नान्दी = आनकः ( 'दुन्दुभिस्त्वानको भेरी भम्भा नान्दूश्च नान्द्यपि' इति वैजयन्ती ), नान्द्याः, उपलक्षणत्वाद् वाद्यान्तराणामपि अन्ते = अवसाने ( भावे सप्तमी ) । ततः = तदनन्तरम्, वाद्यनादनादिरूपनान्दीसमापनानन्तर-मेवेत्यर्थः, क्रियान्तरेण कालक्षेपमकृत्वेति भावः । 'ततः' इति पदेन नान्दी-समापनसूत्रधारप्रवेशक्रिययोर्मध्ये क्रियान्तराभावो द्योत्यते, अन्यथा 'नान्द्यन्ते' इति भावे सप्तम्यैव सूत्रधारप्रवेशक्रियाभावावगमात् 'ततः' इति पदस्य वैयर्थ्यं प्रसज्येत । 'नान्दी' इति पदेनात्र वाद्यवादनरूपैव नान्दी ग्राह्या, न तु कवि-रचिता 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्ना-

---

( वाद्यवादनात्मक नन्दी के समाप्त होने पर उसके
बाद ही सूत्रधार प्रवेश करता है । )

सूत्रधार —

नारायणस्त्रिभुवनैकपरायणो व
पायादुपायशतयुक्तिकर. सुराणाम् ।

---

न्दीति सञ्ज्ञिता ॥'—इति लक्षणलक्षिता मङ्गलश्लोकपाठात्मिका नान्दी तस्या सत्काव्यरूपतया रङ्गप्रयोज्यत्वेन सूत्रधारादे कस्यचित्प्रवेश विना प्रयोक्तुम शक्यत्वात् । प्रविशति रङ्गमञ्चे समागच्छति । सूत्रधार —सूत्र धारयतीति सूत्रधार' ( कर्मण्यण् ) प्रधानन्. । "वर्णनीय कथासूत्र प्रथम येन सूच्यते । रङ्गभूमि समाक्रम्य सूत्रधार' स उच्यते ॥" इति तल्लक्षणम । भरतस्त्वाह — "नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्र धारयतीत्यर्थे सूत्रधारो निगद्यते ॥" इति ॥

नाटकग्रन्थप्रारम्भे कविनिबद्धा मङ्गलपद्यरूपामाशीर्वादात्मिका नान्दी सूत्रधार पठति--नारायण इति । त्रिभुवनैकपरायण – त्रयाणा भुवनाना समाहार त्रिभुवनम [ समाहारद्विगु, 'पात्राद्यन्तस्य न' इति वार्तिकेन 'अकारान्तोत्तरपदोद्विगु स्त्रियामिष्ट' इति प्राप्तस्य स्त्रीत्वस्य निषेधे 'स नपुसकम्' इति नपुसकत्वम् । ] त्रिभुवने = त्रैलोक्ये, लक्षणया त्रैलोक्यप्राणिरक्षणे इत्यर्थ एक = प्रधान, परायण = तत्पर । एतेन नारायणस्य विष्णुत्वेन जगत्पालन-हेतुत्व सूचितम् । सुराणाम् = देवाना, विजयायेति भाव । उपायशतयुक्तिकर उपायानाम् – कूटोद्योगानाम्, शतानि = शतसङ्ख्यकानि, तेषाम् युक्ति = योजना, ता करोतीति तथोक्त, विविधकूटनीतिप्रयोगेणासुरान् सहृत्य देवाना विजयप्रद इत्यर्थ । एतेन नारायणस्य सुरहितकारित्व सूचितम् । लोकत्रया-विरत०—त्रयोऽवयवा यस्य तत् त्रयम् [ 'सख्याया अवयवे तयप्' इति तयप् तद्धितप्रत्यय । 'द्वित्रिभ्या तयस्यायज्वा' इति तयस्यायजादेश । ] लोकाना त्रयमिति लोकत्रयम् ( षष्ठीसमास ) । त्रयाणा लोकाना समुदाय इति यावत् । लोकत्रयस्य = त्रिभुवनस्य ('लोकस्तु भुवने जने, इत्यमर ।) अविरतम् = सततम्, अभिनीयमानमिति भाव., यन्नाटकम् तस्य तन्त्रम् = कला, तस्य यद् वस्तु =

---

सूत्रधार—तीनो लोको ( प्राणियो की रक्षा ) मे मुख्यतया तत्पर, देवो के ( विजयार्थ ) सैकडो उपायो की योजना करने वाले तथा तीनो लोकों के

लोकत्रयाविरतनाटकतन्त्रवस्तु-
प्रस्तावनाप्रतिसमापनसूत्रधारः ॥ १ ॥

( परिक्रम्य ) एवमार्यमिश्रान्विज्ञापयामि । अये किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । भवतु पश्यामि ।

---

कथावस्तु, तस्य प्रस्तावना = स्थापना, समापनम् = उपसंहारश्च, तस्य सूत्रधार = प्रधाननट . जगतामुत्पादक संहारकश्चेति भाव । एतेन नारायणस्य ब्रह्मरूपत्वेन जगद्विधातृत्व, रुद्रत्वेन च जगत्संहारकत्व च सूचितम् । नारायण — नारा = आप , अयनं यस्य स तथोक्त , विष्णुरित्यर्थ । [ "आपो नारा इति प्रोक्ता आपो वै नरसूनव । ता यदस्यायन पूर्वं तेन नारायण स्मृत ॥" इति मनुस्मृति ( १।१० ) ] क्षीरसागरवासीत्यर्थ । व = युष्मान् ( सामाजिकान् ) । पायात् = रक्ष्यात् ( पा रक्षणे धातोराशिषि लिङ् ) । यो नारायणो विष्णुरूपेण त्रैलोक्यं पालयति, ब्रह्मरूपेण जगन्ति सृजति, रुद्ररूपेण च संहरति, यश्च विविधकूटनीतिप्रयोगेण देवैरसुरान् सहाय्यं तान् विजयिन कुर्वन्ति, स नारायणो युष्माक ( सामाजिकानान् ) सर्वतो रक्षा क्रियात् इति सरलार्थ । वसन्ततिलक वृत्तम् 'उक्तं वसन्ततिलकं तभजा जगौ ग ' इति तल्लक्षणात् ॥ १ ॥

परिक्रम्येति । परिक्रम्य = अभिनयविशेष कृत्वा, कानिचित् पदानि सचर्येत्यर्थ । एवम् = ईदृशम् । आर्यमिश्रान्–आर्याश्च ते मिश्रा इति आर्यमिश्रा = महानुभावा , तान् । मिश्रा – आदरणीया । आर्यलक्षण च–"कर्तव्यमाचरन् कार्यमकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृत ॥" इति । विज्ञापयामि = सूचयामि । अये = विस्मयद्योतकमव्ययपदम् । मयि = सूत्रधारे इत्यर्थ । विज्ञापनव्यग्रे–विज्ञापनम् = सूचनम् , तत्र व्यग्र = साभिप्रायं व्यस्त , तस्मिन् ( भावे सप्तमी ) । भवतु–भो ( "सम्बोधनार्थकाः

---

सतत ( अभिनीयमान ) नाटक की कला-सम्बन्धी कथा वस्तु की प्रस्तावना एवम् उपसंहार के सूत्रधार नारायण आप लोगो की रक्षा करें ॥ १ ॥

( घूमकर ) आप महानुभावो को ऐसा सूचित करता हूँ । अरे ! क्या बात है । मेरे सूचना देने में व्यस्त होते ही शब्द-सा सुनाई दे रहा है । अच्छा देखता हूँ ( क्या बात है ) ।

( नेपथ्ये । )

भो भो निवेद्यतां निवेद्यतां तावत् ।

सूत्रधार—भवतु । विज्ञातम् । एष खलु संशप्तकानीकनिवाहिते जनार्दनसहाये धनञ्जये तदनन्तरमुपगतभीष्मवधामर्षितैर्धार्तराष्ट्रैः परिवार्य निपातितः कुमारोऽभिमन्युः । तथाहि—

यान्त्यर्जुनप्रत्यभियानभीता यतोऽर्जुनस्तां दिशमीक्षमाणाः ।

---

स्यु प्याट्पाडङ्ग हे हे भो " इत्यमर )। नेपथ्ये = कुशीलवकुटुम्बस्य स्थान नेपथ्य तत्र ।

सूत्रधार इति । संशप्तकानीकनिवाहिते—संशप्तका = सम्यक् शपथङ्गीकारो येषां ते ( समासान्त कप् ) । त्रिगर्तराजपुत्रा सुशर्मादय इत्यर्थ । तेषामनीके = सैन्ये , निवाहिते = सुदूरमपनीते । जनार्दनसहाये = सकृष्णे इत्यर्थ । धनञ्जये = अर्जुने ( भावे सप्तमी ) । उपगतभीष्मवधामर्षितैः - उपगत - घटित यो भीष्मस्य = भीष्मपितामहस्य वध , तेन अमर्षितैः = सजातक्रोधैः । धार्तराष्ट्रैः —धृतराष्ट्रस्य अपत्यानि पुमास धार्तराष्ट्रा दुर्योधनादय ( 'तस्यापत्यम्' इति अपत्यार्थे अण् तद्धितप्रत्यय । ) तै परिवार्य = सर्वत आच्छाद्य । निपातित = हत । कुमार = राजकुमार । अभिमन्यु = तन्नामा अर्जुनपुत्र ।

यान्तीति । सूत्रधार कोलाहलहेतु निरूपयति—यान्तीति । अर्जुनप्रत्यभियानभीता —अर्जुनस्य प्रत्यभियानम् = वैरशोधनार्थमाक्रमणम्, तस्माद् भीता = भयाकुला । यत = यया दिशा अर्जुन (गत इति शेष ) वा दिशम् ईक्षमाणा = पश्यन्त , परावर्तत अर्जुनो न वेति विलोकयन्त इति भाव । सौभद्रबाणाङ्कित-

---

( नेपथ्य में )

अजी अजी, निवेदन किया जाय निवेदन किया जाय ।

सूत्रधार—अच्छा, समझ गया । निश्चय यह संशप्तकों की सेनाओं द्वारा कृष्ण समेत अर्जुन को दूर ले जाये जाने पर, उसके बाद, भीष्मपितामह के हुए वध के कारण कुपित धृतराष्ट्र के पुत्रों के द्वारा अभिमन्यु चारों तरफ से घेरकर मार डाला गया । इसी लिए—

सुभद्रा के पुत्र ( अभिमन्यु ) के बाणों से क्षत-विक्षत अतएव हतचेतन

नराधिपाः स्वानि निवेशनानि सौभद्रबाणाङ्कितनष्टसञ्ज्ञाः ॥ २ ॥

( निष्क्रान्तः )

स्थापना ।

( ततः प्रविशति भटः । )

भटः - भो भो ! निवेद्यतां तावत्पुत्रशतश्लाघ्यबान्धवाय विज्ञान-

---

नष्टसंज्ञाः—सौभद्रः—सुभद्राया अपत्यंपुमान् सौभद्र ( अपत्यार्थे अण्, ढक्प्रत्ययोऽपि भवति यदा 'सौभद्रेय' इत्यपि ) अभिमन्युः, तस्य बाणैः अङ्किता = क्षतविक्षता इत्यर्थः, अत एव नष्टा संज्ञा = चेतना येषां तथाभूताः अभिमन्युना बाणैर्दुरवस्था प्रापिता इति भावः । नराधिपा —अधिकं पान्ति इति अधिपाः ( आतश्चोपसर्गे' इति क, 'आतोलोप इटि च' इति आकारलोपः ) नराणाम् अधिपाः इति नराधिपा = राजानः । स्वानि = स्वकीयानि । निवेशनानि = शिविराणि ( निविशन्तेऽस्मिन्निति निवेशनम्, नि + √विश् + ल्युट्, कृत्यल्युटोबहुलम्) यान्ति=गच्छन्ति । इन्द्रवज्रोपेन्द्रवज्रयोमिश्रणादुपजातिवृत्तम् ॥२॥

इति स्थापना ( प्रस्तावना )

भट इति । भटः = सैनिक । पुत्रशतश्लाघ्यबान्धवाय—पुत्राणां शतम् इति पुत्रशतम् । पुत्रशतं च श्लाघ्याः = सुयोग्या बान्धवाश्च = सम्बन्धिनो मित्राणि च यस्य तस्मै, शतपुत्रश्लाघ्यबान्धवयुक्तायेत्यर्थः । विज्ञानविस्तारित०—विज्ञानेन = प्रज्ञया विस्तारितौ विस्तारं गमितौ विनयाचारौ - विनयः सदाचारश्च, तावेव दीर्घे = विशाले, चक्षुषी = नेत्रे यस्य तस्मै । प्रज्ञावर्धितविनयाचाररूपविशालनेत्रसम्पन्नायेत्यर्थः ।

---

राजा लोग, अर्जुन के पुनः आक्रमण से डरे हुए, जिधर अर्जुन गये हैं, उसी दिशा की ओर देखते हुए, अपने शिविरों को जा रहे हैं ॥ २ ॥

( चला गया )

इस प्रकार स्थापना ( प्रस्तावना ) समाप्त हुई ।

( तदनन्तर भट प्रवेश करता है । )

भट – अजी अजी ! सौ पुत्रों तथा प्रशस्य बान्धवों से युक्त, प्रज्ञा से

विस्तारितविनयाचारदीर्घचक्षुषे महाराजाय धृतराष्ट्राय । एष खलु

योधस्यन्दनवाजिवारणवधैर्विक्षोभ्य राज्ञां बलं
बालेनार्जुनकर्म येन समरे लीलायता दर्शितम् ।
सौभद्रः स रणे नराधिपशतैर्वेगागतैः सर्वशः
खे शक्रस्य पितामहस्य सहसैवोत्सङ्गमारोपितः ॥ ३ ॥

---

भटो धनञ्जयपुत्रस्य शौर्यं वर्णयन् तन्मरणं निवेदयति—योधस्यन्दनेति । योधानाम् = सैनिकानाम्, स्यन्दनवाजिनाम् = रथाश्वानाम्, वारणानां च = गजानां च, वधैः = हननैः । राज्ञाम् = नृपाणाम्, बलम् = सैन्यम्, विक्षोभ्य = विक्षुब्धं कृत्वा, येन बालेन = बाल्यावस्थायुक्तेन अभिमन्युना । लीलायता = क्रीडां कुर्वता । समरे = युद्धे । अर्जुनकर्म-अर्जुनस्य कर्म दर्शितम् – प्रकटीकृतम्, अर्जुनेनेव तेन शत्रुविनाशः कृत इति भावः । रणे = संग्रामे । सः = तादृशो वीरः । सौभद्रः = अभिमन्युः । नराधिपशतैः = असख्यनृपतिभिः । वेगागतैः — वेगेन = त्वरया, आगतैः = सम्प्राप्तैः । सर्वशः = सर्वतः । खे = स्वर्गे । पितामहस्य = पितुः = अर्जुनस्य पिता = पितामहः इन्द्रः तस्य । उत्सङ्गम् = अङ्कम् । सहसैव = झटित्येव । आरोपितः स्थापितः । सहसा सर्वतो विनिपत्यासंख्यनृपैरभिमन्युर्हत इति भावः ।

अर्जुनकर्म दर्शितमित्यत्रार्जुनकर्म सदृशं कर्मेति बोधनादसम्भवद्वस्तुसम्बन्धनिदर्शनाऽलङ्कारः । 'नराधिपशतैरभिमन्युर्हतः' इति गम्यार्थस्यैवोक्तिवैचित्र्यपूर्वकमभिधानात् पर्यायोक्तालङ्कारश्च । द्वयोर्निरपेक्षेण संस्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं च यथा—'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' । इति ॥ ३ ॥

---

विस्तार को प्राप्त विनय सदाचार रूप विशाल नेत्रों वाले महाराज धृतराष्ट्र से निवेदन किया जाय । यह—

सैनिकों के रथों के घोड़ों तथा हाथियों के विनाश से जिस बालक ने क्रीडा करते हुए ( अनायास ) युद्ध में अर्जुन का सा कर्म प्रदर्शित किया, वह सुभद्रा का पुत्र ( अभिमन्यु ) युद्ध में चारों ओर से वेगपूर्वक आये हुए सैकड़ों नृपों के द्वारा सहसा ही स्वर्ग में ( अपने ) पितामह ( इन्द्र ) की गोद में बैठा दिया गया ॥ ३ ॥

( ततः प्रविशति धृतराष्ट्रो गान्धारी दुःशला प्रतिहारी च । )

धृतराष्ट्रः--कथं नु भोः !

क एतच्छ्रुतिपथदूषणं कृतं मे
कोऽयं मे प्रियमिति विप्रियं ब्रवीति ।
कः ऽस्माकं शिशुवधपातकाङ्किताना
वंशस्य क्षयमवघोषयत्यभीतः ॥ ४ ॥

---

तत इति । गान्धारी=तन्नाम्नी धृतराष्ट्रभार्या दुर्योधनजननी च । दुःशला= धृतराष्ट्रपुत्री, दुर्योधनभगिनी जयद्रथपत्नी च । प्रतीहारी = द्वारपालिका ।

अभिमन्युवधं श्रुत्वा धृतराष्ट्रः सशोकक्रोधमाह—केनैतदिति ।

केन = केनजनेनेत्यर्थः । एतत् = सौभद्रो हत इत्येतद्वचो विश्राव्येतिभावः । मे = मम, धृतराष्ट्रस्येत्यर्थः । श्रुतिपथदूषणम् = श्रुत्योः = कर्णयोः पन्थाः इति श्रुतिपथः कर्णविवरमित्यर्थः ( 'ऋक्पूरब्धूः पथामानक्षे' इति अप्रत्ययः समासान्तः ) तस्य दूषणम् = आघातः । कृतम् = विहितम् । सौभद्रो हत इति वृत्तान्तः विश्राव्य केन मम कर्णावाहताविति भावः । कोऽयम् = अयं को जनः ? यो मे = मम, प्रियम् = अभीष्टम् इति ( मत्वा ) विप्रियम् = अनिष्टम् । ब्रवीति = वदति । कः – को जनः इत्यर्थः, शिशुवधपातकाङ्कितानाम्—शिशुः = बालः, अभिमन्युरित्यर्थः, तस्य वधः एव पातकः तेन अङ्किताः = लाञ्छिताः, तेषाम्, अस्माकम् = कौरवाणामित्यर्थः, वंशस्य क्षयम् = विनाशम् । अभीतः = निर्भीकः सन् । अवघोषयति = उच्चैर्वदति, सर्वत्र प्रसारयतीत्यर्थः । अभिमन्युवधवृत्तान्तं श्रुत्वा मे कर्णकुहरे नितरां पीडिते एतादृशवृत्तान्तश्रवणेन मम कर्णौ दूषविमा-पभूताम्, एतच्छ्रवणमपि पापं मन्ये । ममेदं प्रियं भवेदिति मत्वैवायं जन इमं वृत्तान्तम् श्रावयत्, स तु न जानाति यन्नितरामप्रियमेतन्मे । एतद्वृत्तान्तश्रावणे नाय निर्भीको जनोऽस्मान् शिशुवधपापलाञ्छितान्, अस्माकं वंशोच्छेदं चाव घोषयति । यद्यभिमन्युहतस्तर्हि कौरवाणां नाशो विनिश्चित इति धृतराष्ट्रोक्ते

---

( तदन्तर धृतराष्ट्र, गान्धारी, दुःशला तथा प्रतिहारी का प्रवेश )

धृतराष्ट्र—अजी, ( यह ) कैसे !

किसने मेरे कर्णपथ को यह दूषित किया ? यह कौन मेरा प्रिय समझ कर

गान्धारी—महाराअ ! अत्थि उण जाणोअदि केवलं पुत्तसंखअकारओ कुलविग्गहो भविस्सदि त्ति । [ महाराज ! अस्ति पुनर्ज्ञायते केवलं पुत्रसंक्षयकारकः कुलविग्रहो भविष्यति । ]

धृतराष्ट्र—गान्धारि ! ज्ञायते ।

गान्धारी—महाराअ कदा णु खु । [ महाराज कदा नु खलु । ]

धृतराष्ट्र—गान्धारि ! शृणु—

अद्याभिमन्युनिधनाज्जनितप्रकोपः
सामर्षकृष्णधृतरश्मिगृहीतप्रतोदः ।

---

राशय. । प्रहर्षिणी वृत्तम्, तल्लक्षणं यथा—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।' इति ॥ ४ ॥

गान्धारीति । केवलम् = फलान्तरशून्यमित्यर्थः । कुलविग्रह. = कौरवपाण्डवयुद्धम् । धृतराष्ट्र इति । ज्ञायते ( मयापीति शेष. ) अयं कुलविग्रह पुत्रसक्षयकारक एव भविष्यति इत्यहमपि जाने इति धृतराष्ट्रोक्तेराशय ।

गान्धारीति । कदा – कस्मिन् समये । तादृशस्य युद्धस्य सम्भावना कदा ? इति गान्धारीप्रश्नस्याशय ।

धृतराष्ट्रः । कुलविग्रहस्य स्वरूपं प्रतिपादयति—अद्याभिमन्युनिधनादिति । अद्य = अस्मिन् दिने, अभिमन्युनिधनात् = स्वपुत्रस्याभिमन्योर्विनाशात् । जनितप्रकोप.— जनितः = उत्पादित , कोप = क्रोध यस्य स तथोक्त , प्रकुपित हृदयः । सामर्षकृष्ण०—सामर्षम् = सकोप यथा स्यात्तथा, कृष्णेन धृतौ =

---

अप्रिय कथन कर रहा है ? कौन निर्भय होकर शिशु ( अभिमन्यु ) के वधरूप पाप से लाञ्छित हमारे वंश के विनाश की घोषणा कर रहा है ? ॥ ४ ॥

गान्धारी—महाराज, तथ्य यह है कि ( कौरव और पाण्डव दो कुलों का विग्रह केवल पुत्रों के विनाश का हेतु होगा, ऐसा मालूम हो रहा है ।

धृतराष्ट्र—गान्धारी ! ( मैं भी ) समझता हूँ ।

गान्धारी—महाराज कब ( ऐसी सम्भावना है ) ?

धृतराष्ट्र—गान्धारी ! सुनो,

अब अभिमन्यु के वध से अत्यन्त कुपित, और क्रुद्ध कृष्ण के द्वारा गृहीत रश्मिरज्जु ( लगाम ) तथा चाबुक वाला अर्जुन अपने उग्र धनुष ( गाण्डीव )

पार्थ. करिष्यति तदुग्रधनु सहायः
शान्ति गमिष्यति विनाशमवाप्य लोकः ॥ ५ ॥

गान्धारी—हा वच्छ अभिमञ्जो ! ईसिसे यि णाम पुरुसक्खअकारए कुलविग्गहे वत्तमाणे बालभावणिमज्जण अम्हाणं भग्गक्कमेण करअतो कहिं दाणिं पोत्तअ ! गदोसि ! [ हा वत्स अभिमन्यो ! ईदृशेऽपि नाम पुरुषक्षयकारके कुलविग्रहे वर्तमाने बालभावनिमज्जनमस्माकं भाग्यक्रमेण कुर्वन् कुत्रेदानीं पौत्रक ! गतोऽसि ! ]

---

गृहीतौ, रश्मिगुणाः = वल्गा, प्रतोद = कशा च यस्य स । उग्रधनु सहाय - उग्रम् = कठोरम्, धनु = गाण्डीवम्, सहाय यस्य स । पार्थ. = पृथा कुन्ती तस्या पुत्र, अर्जुन इत्यर्थ । तत् तत् कर्म, करिष्यति ( येन ) लोक = समस्तलोक । विनाशमवाप्य = विनष्टो भूत्वा । शान्ति गमिष्यति - प्रशान्तिस्थो भविष्यति । सर्वाञ्छत्रून् विनाश्य लोके शान्ति स्थापयिष्यतीत्यर्थ । वसन्ततिलक वृत्तम् । तल्लक्षण तु प्रागेवोक्तम् ॥ ५ ॥

गान्धारीति । ईदृशेऽपि = अनर्थकारिणि इत्यर्थ । नामेति निन्दायाम् । पुरुषक्षयकारके—पुरुषाणाम् = वीरजनानामित्यर्थ क्षयम् = विनाश करोतीति तस्मिन् वर्तमाने = प्रवर्तमाने इत्यर्थ, कुलविग्रहे = कौरवपाण्डवयुद्धे । बालभावनिमज्जन कुर्वन्—बालभावात् = बाल्यादेतो निमज्जनम्—सम्यक् प्रवेशमित्यर्थ, कुर्वन् । अस्माकं भाग्यक्रमेण = भाग्यदोषेणेत्यर्थ । पौत्रक-पुत्रस्यापत्य पुमान् पौत्र ( अपत्यार्थेऽण् ) अनुकम्पित पौत्र' इति पौत्रक, तत्सम्बुद्धौ हे पौत्रक ! ( 'अनुकम्पायाम्' ५।३।७६ इति सूत्रेण अनुकम्पायुक्तार्थाभिधायिन पौत्रशब्दात् स्वार्थे क तद्धितप्रत्यय । )

---

को सहायता से वह ( शौर्य ) करेगा ( जिससे ) समस्त लोक विनष्ट होकर शान्ति को प्राप्त होगा ॥ ५ ॥

गान्धारी—हाय वत्स अभिमन्यु ! हमारे भाग्य दोष के कारण, हो रहे नरसंहारक कुल-विग्रह में तुम बाल भाव में वारण प्रवेश कर, हे प्रिय पौत्र ! अब कहाँ चले गए ?

दुःशला - जेण दाणिं वहूए उत्तराए वेधव्वं दाइद, तेण अत्तणो जुवदिजणस्स वेधव्वमादिट्ठं। [ येनेदानीं वध्वै उत्तरायै वैधव्यं दत्तं, तेनात्मनो युवतिजनाय वैधव्यमादिष्टम्। ]

धृतराष्ट्रः—अथ केनैष व्यसनार्णवस्य सेतुबन्धः कृतः।

भटः—महाराज! मया।

धृतराष्ट्रः—को भवान्।

भटः—महाराज! ननु जयत्रातोऽस्मि।

धृतराष्ट्र—जयत्रात!

केनाभिमन्युर्निहतः कस्य जीवितमप्रियम्।

---

येन = पुरुषेण। इदानीम् = सम्प्रति। वध्वै उत्तरायै = अभिमन्युभार्यायै उत्तरायै (सम्प्रदाने चतुर्थी)। वैधव्यम् = विगतो धवः = पतिर्यस्याः सा विधवा, तस्या भाव वैधव्यम्, विधवा शब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' पा० ५।१।१२४ इति सूत्रेण ष्यञ् तद्धितप्रत्ययः। अभिमन्यु हत्वा तद्भार्यामुत्तरां यो विधवामकार्षीत्, सोऽप्यचिरेणैव हतो भूत्वा स्वपत्नीमवश्यमेव विधवां करिष्यतीति दुःशलोक्तेरभिप्रायः।

धृतराष्ट्र इति—अथेति प्रश्नारम्भे। व्यसनार्णवस्य—व्यसनम् = विपद्, तदेव अर्णव = सिन्धुः, तस्य।

धृतराष्ट्रो जयत्रातनामानं भटं पृच्छति—केनाभिमन्युरिति। जयत्रात! केन = केन पुरुषेण, अभिमन्युः = तदभिधानोऽर्जुनपुत्र, निहत. = मारितः।

---

दुःशला—जिसने इस समय बहू उत्तरा को वैधव्य दिया है, उसने अपनी स्त्रियों को विधवा होने का आदेश दिया है।

धृतराष्ट्र—अच्छा, विपत्ति-सिन्धु पर यह किसने पुल बाँधा है? (अर्थात् यह समाचार किसने सुनाया है?)।

भट—महाराज! मैंने।

धृतराष्ट्र—तुम कौन हो?

भट—महाराज! अरे मैं जयत्रात हूँ।

धृतराष्ट्र—जयत्रात! किसने अभिमन्यु को मारा! किसे (अपना)

पञ्चानां पाण्डवाग्नीनामात्मा केनेन्धनीकृतः ॥ ६ ॥

भटः—महाराज ! बहुभिः किल पार्थिवैः समागतैर्निहतः कुमारोऽभिमन्युः । स्यात्तु जयद्रथो निमित्तभूतः ।

धृतराष्ट्रः—हन्त जयद्रथो निमित्तभूतः ।

भटः—महाराज ! अथ किम् ?

धृतराष्ट्रः—हन्त जयद्रथो निहतः ।

( तच्छ्रुत्वा दुःशला रोदिति । )

धृतराष्ट्रः—कैषा रोदिति ।

---

कस्य = पुरुषस्य, जीवितम् = जीवनम्, अप्रियम् = अनभिलषितम्, को मृत्युं वाञ्छति येनाभिमन्युर्हतः ? अभिमन्युहननेन तस्य मरणं ध्रुवमिति भावः । केन = पुरुषेण, पञ्चानाम् = पञ्चसंख्याकानाम्, पाण्डवाग्नीनाम्—पाण्डवाः = युधिष्ठिरादय एवाग्नयस्तेषाम्, आत्मा = स्वशरीरम्, इन्धनीकृतः = न इन्धनम् अनिन्धनम्, अनिन्धनम् इन्धनत्वेन प्रापितः इन्धनीकृतः ( अभूततद्भावे च्विः ) । रूपकालङ्कारः । अनुष्टब्वृत्तम्—तल्लक्षणं यथा—'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ।' इति ॥ ६ ॥

भट इति । किलेति वार्तायाम् । बहुभिः = बहुसंख्याकैः । पार्थिवैः—पृथिव्या ईश्वराः पार्थिवाः = राजानः, तैः ( पृथिवीशब्दात् 'तस्येश्वरः' पा० ५।१।४२ इति सूत्रेण अण् ) समागतैः = मिलितैरित्यर्थः ।

---

जीवन अप्रिय हो गया ? पाण्डव रूप पञ्चाग्नि के लिए किसने अपने को इन्धन बना लिया ? ॥ ६ ॥

भट—महाराज ! सुना जाता है—बहुत से राजाओं ने मिल कर कुमार अभिमन्यु को मारा, किन्तु सम्भवतः उसका निमित्त जयद्रथ था ।

धृतराष्ट्र—खेद का विषय है, क्या जयद्रथ निमित्त हुआ ?

भट—महाराज ! और क्या !

धृतराष्ट्र—शोक है ( तब तो ) जयद्रथ मारा गया ।

( यह सुन कर दुःशला रोती है । )

धृतराष्ट्र—यह कौन रो रही है ?

विप्रियं कृत्वा को हि नाम जीविष्यति । ]

धृतराष्ट्र —सत्यमाह तपस्विनी दुःशला । कुत —

कृष्णस्याष्टभुजोपधानरचिते योऽङ्के विवृद्धश्चिरं
यो मत्तस्य हलायुधस्य भवति प्रीत्या द्वितीयो मदः ।
पार्थानां सुरतुल्यविक्रमवतां स्नेहस्य यो भाजनं
तं हत्वा क इहोपलप्स्यति चिरं स्वेदुष्कृतैर्जीवितम् ॥८॥

---

अर्जुनस्य । विप्रियम् = अप्रियम् ।

धृतराष्ट्र इति । तपस्विनी वराकी ।

धृतराष्ट्रो दुःशलाया प्रागुक्तिं समर्थयन्नाह—कृष्णस्येति । य = अभिमन्यु, कृष्णस्य वासुदेवस्य, अष्टभुजोपधानरचिते—अष्टौ भुजा एव उपधानम् = उपबर्हं, तेन रचिते = विहिते, अङ्के = उत्सङ्गे, चिरम् = बहुकालं यावत्, अद्यावधीति भाव । विवृद्ध = वृद्धिं गत । य अभिमन्यु, मत्तस्य = मदान्वितस्य, हलायुधस्य हल – लाङ्गलम्, आयुधम् = अस्त्रं यस्य स हलायुध = बलराम, तस्य, प्रीत्या = स्नेहेन द्वितीय = पूर्वादतिरिक्तं, मद भवति—मदिरापानजमदाद्व्यतिरिक्तो भागिनेय स्नेहजमदो भवतीत्याशय । य = अभिमन्यु सुरतुल्यविक्रमवताम्—सुरतुल्य = देवसमान विक्रम = पराक्रम अस्त्येषामिति सुरतुल्यविक्रमवन्त, तेषाम् ( अत्र नित्ययोगेमतुप्, अन्यथा सुरतुल्यो विक्रमो येषां तेषां सुरतुल्यविक्रमाणामिति बहुव्रीहेस्तदर्थ प्रतिपत्तिकरत्वेन मतुपो वैयर्थ्य-प्रसक्ति', 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इति ) पार्थानाम् = पृथापुत्राणां युधिष्ठिरादीनाम्, स्नेहस्य = वात्सल्यस्य, भाजनम् = पात्रम्, तम् = तादृशम् अभिमन्युं हत्वा व्यापाद्य, स्वैः = स्वकीयैः, दुष्कृतैः = पापैः, इह = जगति, चिरम् = बहुकालम्, जीवितम् = जीवनम्' उपलप्स्यति =

---

ऐसे अर्जुन का अप्रिय करके जीवित रहेगा ?

धृतराष्ट्र—बेचारी [illegible]शला सच कह रही है । क्योंकि—

जो ( अभिमन्यु) कृष्ण की आठ भुजाओ की तकिया से युक्त उनकी गोदी में आज तक पल कर बडा हुआ, जो मत्त बलराम का, स्नेह [illegible] कारण दूसरा मद था और जो देवो के समान पराक्रमशाली पाण्डवो के स्नेह का भाजन

जयत्रात ! अथ तदवस्थं पुत्रं दृष्ट्वा किं प्रतिपन्नं तेन गाण्डीवधन्वना ।

भटः—महाराज ! किं मार्जुनसमीपे वृत्तमेतत् ।

धृतराष्ट्र —कथमर्जुनोऽपि नासीत् ।

भट —महाराज ! अथ किम् ?

धृतराष्ट्रः—कथमिदानीं वृत्तमेतत् ।

भटः—श्रूयताम् संशप्तकानीकनिवाहिते जनार्दनसहाये धनञ्जये स

---

प्राप्स्यति, न कोऽपीति भाव. । लभ्धातो. परस्मैपदस्य चिन्त्यम् । शार्दूलविक्रीडित वृत्तम् ॥ ८ ॥

युधिष्ठिरः पुन पृच्छति जयत्रातम्—अथेति । अथेति प्रश्नवाक्यारम्भे । तदवस्थम्—सा अवस्था यस्य स तदवस्थ तम्' निहतमिति भाव. प्रतिपन्नम् = अनुष्ठितम् । गाण्डीवधन्वना—गाण्डीव धनुर्यस्य स गाण्डीवधन्वा, तेन गाण्डीव धन्वना अर्जुनेन । समासे गाण्डीवधनुश्शब्दे सकारस्य 'धनुषश्च' (५।४।१३२) इत्यनङ् । टकार इत् । अकार उच्चारणार्थं । उकारस्य यण् ।

भट इति । अर्जुनसमीपे = अर्जुनस्य विद्यमानतायामित्यर्थः । एतत् = अभिमन्युनिधनम् । वृत्तम् = जातम् ।

कथमिदानीं वृत्तमेतदिति धृतराष्ट्रेण पृष्टो भट आह—श्रूयतामिति । जनार्दनसहाये = श्रीकृष्णे इत्यर्थ., धनञ्जये = अर्जुने, संशप्तकानीकनिवाहिते-संशप्तका. = त्रिगर्तराजपुत्रा सुशर्मादय, तेषामनीकं = सैन्यं. निवाहिते =

---

था, उसको मार कर इस संसार मे कौन अपने पापो के कारण चिर जीवन पायेगा ॥ ८ ॥

जयत्रात ! अच्छा, इस अवस्था वाले पुत्र को देख कर उस गाण्डीवधारी अर्जुन ने क्या किया ?

भट—महाराज ! क्या यह ( घटना ) अर्जुन के रहते हुए हुआ है ?

धृतराष्ट्र—क्यों, अर्जुन भी वहाँ नहीं थे ।

भट—महाराज ! और क्या ?

धृतराष्ट्र—तो सम्प्रति यह कैसे हुआ ?

भट—महाराज, सुनें । संशप्तको की सेनाओं द्वारा कृष्ण समेत अर्जुन के

बालभावाददृष्टदोषः संग्राममवतीर्णः कुमारोऽभिमन्युः।

धृतराष्ट्रः—हन्त युक्तरूपोऽस्य वधः। को हि संनिहितशार्दूलां गुहां धर्षयितुं शक्तः। अथ शेषाः पाण्डवाः किमनुतिष्ठन्ति।

भटः—महाराज! श्रूयताम्।

चितां न तावत्स्वयमस्य देहमारोपयन्त्यर्जुनदर्शनार्थम्।
तेषां च नामान्युपधारयन्ति यैस्तस्य गात्रे प्रहृतं नरेन्द्रैः॥ ९॥

---

सुदूरमपनीते (भावे सप्तमी)। बालभावात् = बाल्यात्, बालोचितचापल्यवशादिति यावत्। अदृष्टदोषः—न दृष्टः दोषः = हानिर्येन सः, संग्राममवतीर्णः = रणभूमिं प्रविष्टः।

धृतराष्ट्र इति। हन्तेति खेदे। युक्तरूपोऽस्य वधः—युक्तम् - सुव्यवस्थितम्, रूपम् = रीतिर्यस्य स तादृशः, अस्य अभिमन्योः, वधः = हननम्। तस्य स्थितौ सर्वथाऽभिमन्युवधस्य संभावनाऽऽसीदेवेति धृतराष्ट्रोक्त्याशयः। संनिहितशार्दूलाम्—संनिहितः = विद्यमानः, शार्दूलः = सिंहः यस्यां ताम्। धर्षयितुम् = प्रवेष्टुमित्यर्थः। शेषाः = अर्जुनाद् व्यतिरिक्ताः। अनुतिष्ठन्ति = कुर्वन्ति।

धृतराष्ट्रेण पृष्टो भटः पाण्डवानां क्रियां वर्णयति—चितां नेति। (युधिष्ठिरादयस्ते शेषाः पाण्डवाः) तावत् = प्रथमम्। अर्जुनदर्शनार्थम्—अर्जुनस्य दर्शनायेदमित्यर्जुनदर्शनार्थम्, आगत्यार्जुनः पुत्रशवं पश्यतु इत्युद्देश्येति भावः। अस्य = अभिमन्योः, देहम् = शरीरम्, शवमिति यावत्। चिताम्—मृतं दग्धुं सञ्चितकाष्ठराशिम्, स्वयम् = स्वकरैरिति भावः। न आरोपयन्ति = न स्थापयन्ति। यैः नरेन्द्रैः = नृपैः, तस्य = अभिमन्योः, गात्रे = शरीरे, प्रहृतम् = प्रहारः कृतः, तेषाम् = नृपाणाम्, नामानि = अभिधेयानि,

---

बहुत दूर ले जाये जाने पर वह कुमार अभिमन्यु बालक होने के कारण कोई हानि न देख कर संग्राम भूमि में उतर पड़ा।

धृतराष्ट्र—शोक। इसके वध का ढंग सुव्यवस्थित था (अर्थात् वध की सर्वथा संभावना थी)। कौन सिंह के रहते गुफा में प्रविष्ट हो सकता है? अच्छा, बाकी पाण्डव क्या कर रहे हैं?

भट—महाराज! सुना जाय—

अर्जुन (भी) देख ले, इसलिए (शेष पाण्डव) इस (अभिमन्यु) के शव

धृतराष्ट्रः—गान्धारि ! तदागम्यताम् । गङ्गाकूलमेव यास्यावः ।

गान्धारी—महाराअ ! णं तहिं गाहामो । [ महाराज ननु तत्र गाहावहे । ]

धृतराष्ट्रः—गान्धारि ! शृणु ।

अद्यैव दास्यामि जलं हतेभ्यः स्वेनापराधेन तवात्मजेभ्यः ।
न त्वस्मि शक्तः सलिलप्रदानैः कर्तुं नृपाणां शिबिरोपरोधम् ॥ १० ॥

( ततः प्रविशति दुर्योधनो दुश्शासनः शकुनिश्च । )

दुर्योधनः—वत्स दुश्शासन ।

---

तान् हन्तुमिति भाव । उपधारयन्ति = सचिन्तयन्ति । उपजातिवृत्तम् ॥ ९ ॥

धृतराष्ट्रो गङ्गाकूलगमनहेतुं गान्धारी विज्ञापयति—अद्यैवेति । गान्धारि ! स्वेन = स्वकीयेन, अपराधेन = अभिमन्युवधात्मकेनेति भाव । हतेभ्य = हनिष्यमाणेभ्य इति भाव । तव = गान्धार्या, आत्मजेभ्य = पुत्रेभ्य ( सम्प्रदाने चतुर्थी ) । अद्यैव अस्मिन्नेव काले । जलम् = जलाञ्जलिं दास्यामि । सलिलप्रदानैः = जलाञ्जलिदानैः । तु = किन्तु, नृपाणाम् = राज्ञाम् शिबिरोपरोधम् = शिबिरे उपरोधः = अवरोध तम्, कर्तुं न शक्त अस्मि, एते स्वैर्दुष्कृत्यैरवश्यमेव मरिष्यन्ति तदेतानवरोद्धुमसमर्थोऽहं तेभ्यो जलाञ्जलिं दास्यामीति भाव. । इन्द्रवज्रावृत्तम् ॥ १० ॥

---

को स्वयं चिता पर नहीं रख रहे हैं तथा जिन राजाओं ने उसके शरीर पर प्रहार किया है उनके नामों का सचिन्तन कर रहे हैं ॥ ९ ॥

धृतराष्ट्र—गान्धारी । तो आओ, हम ( दोनों ) गङ्गातट को ही चलें ।

गान्धारी—महाराज । हम ( दोनों ) वहाँ स्नान करेंगे ।

धृतराष्ट्र—गान्धारी ! सुनो—

अपने ही अपराध से मारे जाने वाले तुम्हारे पुत्रों को आज ही मैं जलाञ्जलि दूँगा किन्तु इस जलाञ्जलि-दान के द्वारा मैं राजाओं के शिबिर को ( युद्ध से ) रोक नहीं सकता ॥ १० ॥

( तदनन्तर दुर्योधन, दुःशासन और शकुनि प्रवेश करते हैं । )

दुर्योधन—वत्स दुःशासन !

यातोऽभिमन्युनिधनात् स्थिरता विरोध
प्राप्तो जयः प्रचलिता रिपवो निरस्ता. ।
उन्मूलितोऽस्य च मदो मधुसूदनस्य
लब्धो मयाऽद्य सममभ्युदयेन शब्द. ॥ ११ ॥

दुश्शासन —अहो नु खलु,
रुद्धा पाण्डुसुता जयद्रथबलेनाक्रम्य शत्रोर्बलं
सौभद्रे विनिपातिते शरशतक्षेपैर्द्वितीयेऽर्जुने ।

---

दुर्योधनोऽभिमन्युवधजनितप्रसन्नता दु शासन प्रति वर्णयति—यात इति । अभिमन्युनिधनात्—अभिमन्यो निधनम् = मरणम्, तस्मात् । विरोध द्वेष, स्थिरताम् = सुदृढत्वम्, यात = गत । जय प्राप्त – लब्ध । निरस्ता = पराजित', रिपव = शत्रव, प्रचलिता = प्रकम्पिता । अस्य = गर्वितस्येत्यर्थ, मधुसूदनस्य—मधुम् = तन्नामान दैत्य सूदयति नाशयतीति मधुसूदन = श्री कृष्ण, तस्य । मद = दर्प, उन्मूलित = उत्पाटित विनाशित इत्यर्थ. । मया= दुर्योधनेन, अभ्युदयेन समम् = उत्कर्षेण सह । शब्द = उपाधिः सम्राडित्येव-मिति भाव । अद्य = इदानीम् । लब्ध = प्राप्त । साम्प्रत सर्वाण्यभीष्टानि मे लब्धानि, न किंचिदवशिष्यत इति भाव । वसन्ततिलक वृत्तम् ॥ ११ ॥

दुशासनोऽपि स्वपक्षोत्कर्ष व्यनक्ति—रुद्धा इति । जयद्रथबलेन—जयद्रथस्य बलेन = सैन्येन, शत्रो = विपक्षस्य, बलम् = सैन्यम् आक्रम्य = पराजित्य, पाण्डुसुता = अर्जुनादन्यनिरिक्ता युधिष्ठिरादयश्चत्वारोऽपि पाण्डवा, रुद्धा. = चक्रव्यूहप्रवेशान्निवारिता । द्वितीयेऽर्जुने = अर्जुनतुल्यपराक्रमशालिनि, सौभद्रे=

---

अभिमन्यु के निधन से ( हमारा और पाण्डवों का ) विरोध दृढ हो गया, ( शत्रुओं पर ) हमें विजय मिल गयी, पराजित शत्रु काँप उठे हैं ( घबरा गये हैं ), इस कृष्ण का दर्प विनष्ट हो गया तथा मैंने अभ्युदय के साथ-साथ ( सम्राट् की ) उपाधि ( भी ) प्राप्त कर ली ॥ ११ ॥

दु शासन—अहो ! निश्चय ही ।

जयद्रथ की सेना ने शत्रु सेना को आक्रान्त कर पाण्डवों को ( चक्रव्यूह में प्रवेश करने से ) रोक दिया तथा ( वीरता में ) द्वितीय अर्जुन ( उस ) सुभद्रा-

प्राप्तेश्च व्यसनानि भीष्मपतनादस्माभिरद्याहवे
तीव्राः शोकशराः कृताः खलु मनस्येषां सुतोत्सादनात् ॥१२॥

शकुनिः—

जयद्रथेनाद्य महत्कृतं रणे नृपैरसम्भावितमात्मपौरुषम्।
प्रसह्य तेषां यदनेन संयुगे समं सुतेनाप्रतिमं हृतं यशः ॥ १३ ॥

---

सुभद्रापुत्रेऽभिमन्यौ, शरशतभेदैः—शराणां शतानि तेषां क्षेपैः = आघातैः सम्पातितशराघातैरित्यर्थः। विनिपातिते = विनाशिते (भावे सप्तमी) भीष्मपतनात्—भीष्मस्य = पितामहस्य, पतनात् = विनाशात्, व्यसनानि = दुःखानि, प्राप्तैः = गतैः, अस्माभिः = कौरवैः, अद्य = अस्मिन् दिने, आहवे = संग्रामे, खलु = निश्चयेन, सुतोत्सादनात्—सुतस्य = अभिमन्योः, उत्सादनात् = हननात्, एषाम् = पाण्डवानाम्, मनसि = हृदये, तीव्राः, शोकशराः = शोका एव शराः = बाणाः, कृताः = गाढं निखाता इत्यर्थः। यैः पाण्डवैः पूर्वं पितामहं हत्वा वयं शोकाकुलीकृताः, सम्प्रति संग्रामे तत्पुत्रवधात्तेषां हृदये अस्माभिः शोकशल्यानि गाढं निखातानीति कृतार्थाः वयं जाता इति भावः। 'शोकशराः' इत्यत्र रूपकालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

शकुनिरपि जयद्रथं प्रशंसन्नाह—जयद्रथेनेति। अद्य – अस्मिन् दिने, रणे = युद्धे, जयद्रथेन, नृपैः – अन्यैर्नृपतिभिरित्यर्थः, असम्भावितम् = अचिन्तितम्, महत् = विपुलम्, आत्मपौरुषम् = स्वपराक्रमः, कृतम् = प्रदर्शितम्, यत् = यस्मात्, अनेन = जयद्रथेन, संयुगे = रणे, प्रसह्य = बलात्, सुतेन समम् – पुत्रेणाभिमन्युना सह तेषाम् = पाण्डवानाम्, अप्रतिमम् = नास्ति प्रतिमा यस्य तत्, समन्ताद्विस्तृतमित्यर्थः। यशः – कीर्तिः, हृतम् = विनाशितम्। सहोक्तिरलङ्कारः।

---

पुत्र को सैकड़ों शरों के आघातों से मार दिये जाने पर, (पहले) भीष्मपितामह के मरण से दुःख पाये हुए हम लोगों ने आज संग्राम में इन (पाण्डवों) के पुत्र का वध कर देने से, इनके हृदय में तीखे शोकरूपी बाण धँसा दिये ॥१२॥

शकुनि—आज युद्ध में जयद्रथ ने अपना वह महान् पराक्रम प्रदर्शित किया, राजा लोग जिसकी कल्पना भी नहीं कर सके थे। क्योंकि इस (जयद्रथ)

दुर्योधनः—मातुल ! इतस्तावत् । दुश्शासन ! इतस्तावत् । तत्र-भवन्तं तातमभिवादयिष्यामः ।

शकुनिः—वत्स दुर्योधन ! मा मैवम् ।

कामं न तस्य रुचितः कुलविग्रहोऽय-
मस्मांश्च गर्हयति स प्रियपाण्डवत्वात् ।
युद्धोत्थितैर्जयमवाप्य हि तुल्यरूप
एवं प्रहृष्टवदनैरभिगन्तुमेनम् ॥ १४ ॥

---

वंशस्थवृत्तम् । तल्लक्षणं यथा—'जतौ तु वंशस्थमुदीरितं जरौ ।' इति ॥ १३ ॥

विजयलाभानन्तरं पूज्यं पितरं प्रणन्तुमुद्यतं दुर्योधनं निवारयति शकुनिः—काममिति । तस्य = धृतराष्ट्रस्य, अयम् = प्रवर्तमानः, कुलविग्रहः = वंशवैरम्, कामम् = यथेष्टम्, न रुचितः = न रोचते इत्यर्थः । स = धृतराष्ट्रः, प्रियपाण्डवत्वात्—प्रिया पाण्डवा युधिष्ठिरादयो यस्य भावस्तत्त्वं तस्मात् पाण्डवेषु स्नेहाधिक्यादिति भावः । अस्मान् दुर्योधनादीन् च, गर्हयति = निन्दति । हि = निश्चयेन, जयम् अवाप्य = लब्ध्वा, एवम् = अनेन प्रकारेण, युद्धोत्थितैः-युद्धात् उत्थितैः = निवृत्तैः, प्रहृष्टवदनैः = प्रसन्नमुखैः, एनम् = धृतराष्ट्रम्, अभिगन्तुम् = प्रणामार्थंगमनम् । तुल्यरूपम् = युक्तम् । वसन्ततिलकं वृत्तम् १४

---

ने युद्ध में उन ( पाण्डवों ) के पुत्र के साथ ही उनके अनुपम यश को भी बल पूर्वक छीन लिया ॥ १३ ॥

दुर्योधन—मामा ! इधर ( आओ ) । दुःशासन ! इधर ( आओ ) पूज्य पिता जी को हम सब प्रणाम करेंगे ।

शकुनि—वत्स दुर्योधन ! नहीं, ऐसा नहीं ।

उन्हें यह आपस का झगड़ा बिल्कुल पसन्द नहीं है । उन्हें पाण्डव अधिक प्रिय हैं, अतः वे हम लोगों की निन्दा किया करते हैं । इस लिए ( युद्ध में ) विजय प्राप्तकर, युद्ध से निवृत्त होकर प्रसन्न मुख हम लोगों का इनके पास अभिवादनार्थ जाना युक्त होगा ॥ १४ ॥

दुर्योधनः—मातुल ! मा मैवम् । यथा तथा भवतु । तत्रभवन्तं तातमभिवादयिष्यामः ।

उभौ—बाढम् । ( परिक्रामतः । )

दुर्योधनः—तात ! दुर्योधनोऽहमभिवादये ।

दुश्शासनः—तात ! दुश्शासनोऽहमभिवादये ।

शकुनिः—शकुनिरहमभिवादये ।

सर्वे—कथमाशोर्वचनं न प्रयुज्यते ।

धृतराष्ट्रः—पुत्र ! कथमाशीर्वचनमिति ।

सौभद्रे निहते बाले हृदये कृष्णपार्थयोः ।
जीविते निरपेक्षाणां कथमाशीः प्रयुज्यते ॥ १५ ॥

---

आशीर्वचनमप्रयुञ्जानो धृतराष्ट्रस्तत्र हेतुं प्रतिपादयति—सौभद्र इति । कृष्णपार्थयोः - कृष्णश्च पार्थश्च इति कृष्णपार्थौ तयोः = कृष्णार्जुनयोः, हृदये= हृदयस्वरूपे, परमप्रिये इति भावः, बाले=बालके, सौभद्रे=सुभद्रापुत्रे अभिमन्यौ, निहते = मारिते ( भावे सप्तमी ) । जीविते = जीवने, निरपेक्षाणाम् = उदासीनानाम्, कथम्=केन प्रकारेण, आशीः प्रयुज्यते = आशीर्वचनं प्रयोक्तुं शक्यते । अनुष्टुब्वृत्तम् ॥ १५ ॥

---

दुर्योधन—मामा ! नही ऐसा नही । जो कुछ भी हो । पूज्य पिता जी को हम सब प्रणाम करेंगे ।

दोनो ( शकुनि और दुःशासन )—बहुत ठीक । ( घूमते हैं ) ।

दुर्योधन—पिता जी ! मैं दुर्योधन अभिवादन करता हूँ ।

दुःशासन—पिता जी ! मैं दुःशासन अभिवादन करता हूँ ।

शकुनि—मैं शकुनि अभिवादन करता हूँ ।

सब—क्यो आशीर्वाद नही दिया जा रहा है ?

धृतराष्ट्र—पुत्र, आशीर्वाद कैसे दूँ ?

कृष्ण और अर्जुन के हृदयरूप, बालक अभिमन्यु के मारे जाने पर तुम सब जीवन के प्रति उदासीन हो चुके हो, अतः तुम लोगो को कैसे आशीर्वाद दिया जाय ॥ १५ ॥

दुर्योधन —अये,

> भूमिकम्प सशब्दोऽय कुतो नु सहसोत्थितः ।
> उल्काभिश्च पतन्तीभि· प्रज्वालितमिवाम्बरम् ॥ २५ ॥

धृतराष्ट्र —पुत्र ! एव मन्ये,

> सुव्यक्त निहितं दृष्ट्वा पौत्रमायस्तचेतस ।
> उल्कारूपाः पतन्त्येने महेन्द्रस्याश्रुबिन्दव· ॥ २६ ॥

---

दुर्योधन सहसोत्पात पश्यन् साश्चर्यं प्राह—भूमिकम्प इति । अयम् = दृश्यमान, सशब्द —शब्देन सहित, भूमिकम्पः = भूकम्प, सहसा = अकस्मात्, कुत = कस्मात्, नु इति वितर्के, उत्थित = प्रादुर्भूतः । पतन्तीभि = आकाशात् पतनशीलाभि, उल्काभि = आकाशस्थदाहकतत्त्वै, अम्बरम् = आकाशम्, प्रज्वालितम् = प्रज्वलितमिव कृतमित्यर्थ । उत्प्रेक्षाऽलङ्कार । अनुष्टुब्वृत्तम् ॥ २५ ॥

धृतराष्ट्र उत्प्रेक्षते तदुल्काविषये—सुव्यक्तमिति । पौत्रम् = अभिमन्युम्, सुव्यक्तम् = सुस्पष्ट यथा तथा, निहतम् = मृतमित्यर्थः, दृष्ट्वा = विलोक्य, आयस्तचेतस — आयस्तम् = दु खितम्, चेत हृदय यस्य तथोक्तस्य, पीडितहृदयस्येत्यर्थं, महेन्द्रस्य = सुराधिपस्येन्द्रस्य, एते = दृश्यमाना, उल्कारूपा, अश्रुबिन्दव, पतन्ति = आकाशाद् भूमिम् आपतन्ति । अत्रोल्कापातस्य महेन्द्राश्रुबिन्दुपातत्वेनोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कार । अनुष्टुब्वृत्तम् ॥२६॥

---

दुर्योधन —अरे !

यह सहसा ( भयानक ) शब्द के साथ भूकम्प कैसे हो रहा है ? ( आकाश से टूट कर ) गिरती हुई उल्काओ से आकाश प्रज्वलित-सा कर दिया गया है ॥ २५ ॥

धृतराष्ट्र—पुत्र ! ऐसा समझता हूँ—

सुस्पष्ट ( अपने ) पौत्र ( अभिमन्यु ) को मारा गया देख कर दुखित-हृदय इन्द्र के ये अश्रुबिन्दु उल्कारूप मे गिर रहे हैं ॥ २६ ॥

दुर्योधनः—जयत्रात ! गच्छ, पाण्डवशिविरे शङ्खपटहसिंहनादरवा-न्मिश्रः किंकृतोऽयं शब्द इति ज्ञायताम् ।

भटः—यदाज्ञापयति । (निष्क्रम्य प्रविश्य ।) जयतु महाराज । संशप्तकानीकनिवाहितप्रतिनिवृत्तेन धनञ्जयेन निहतं पुत्रमङ्कस्थमश्रुभिः परिषिच्य जनार्दनावभर्त्सितेन प्रतिज्ञातं किलानेन ।

दुर्योधन.—किमिति किमिति !

भटः—

तस्यैव व्यवसायतुष्टहृदयैस्तद्विक्रमोत्साहिभि-

---

दुर्योधन इति । शङ्खपटहसिंहनादरवोन्मिश्रः—शङ्खा, पटहा = भेर्यः, सिंहनादाः = वीराणां गर्जितानि च, तेषां रवैः = शब्दैः, उन्मिश्रः = सम्मिलितः, प्रवृद्धिं गत इत्यर्थः ।

भट इति—संशप्तकानीकनिवाहितप्रतिनिवृत्तेन – संशप्तकानाम् अनीकैः = सैन्यैः (आदौ) निवाहितः = दूरापनीतः (पश्चात्) प्रतिनिवृत्तः, = प्रत्यागतः तेन । धनञ्जयेन=अर्जुनेन । निहतम् = घातितम् । अश्रुभिः परिषिच्य = बाष्पैरार्द्रितं कृत्वा । जनार्दनेन = श्रीकृष्णेन अवभर्त्सितः = निन्दितः तेन जनार्दनावभर्त्सितेन । प्रतिज्ञातम् = प्रतिज्ञा कृता । किलेति वार्तायाम् ।

भटो ज्ञातं भूकम्पादिहेतुं दुर्योधनाय निवेदयति—तस्यैवेति । तस्यैव = अर्जुनस्यैव, व्यवसायतुष्टहृदयैः—व्यवसायेन = उद्योगेन, प्रतिज्ञयेत्यर्थः,

---

दुर्योधन—हे जयत्रात ! जाओ, पाण्डवों के शिविर में शङ्ख, भेरी और सिंहनाद के शब्द से मिश्रित यह शब्द क्यों हो रहा है, मालूम करो ।

भट—जो आज्ञा । ( जाकर, प्रवेश कर ) महाराज की जय हो । संशप्तकों की सेनाओं द्वारा दूर ले जाये जाने के बाद लौट कर इस अर्जुन ने मारे गये पुत्र को गोद में रख कर, आँसुओं से उसे आर्द्र कर कृष्ण के द्वारा निर्भर्त्सित ( प्रेरित ) होकर प्रतिज्ञा की है ।

दुर्योधन—क्या ! क्या !

भट—उस ( अर्जुन ) की प्रतिज्ञा से सन्तुष्ट हृदय, उसके पराक्रम से उत्साहसम्पन्न, प्रसन्नमुख राजाओं ने अपनी जीत निश्चित समझकर हर्षातिरेक

स्तुष्टास्यैर्जितमित्यवेक्ष्य सहसा नाद प्रहर्षात्कृत.।
आक्रान्ता गुरुभिर्धराधरवरै संक्षोभितै पार्थिवै-
भूमिश्चागतसभ्रमेव युवतिस्तस्मिन् क्षणे कम्पिता ॥ २७ ॥

धृतराष्ट्र —

प्रतिज्ञासारमात्रेण कम्पितेय वसुन्धरा ।

---

तुष्टानि = प्रसाद गतानि हृदयानि = चेतासि येषा तादृशै । तद्विक्रमोत्साहिभि तस्य = अर्जुनस्य, विक्रमेण = पराक्रमेण, उत्साहिभि = उत्साहसम्पन्नै (उत्साहशब्दात् 'अत इनिठनौ इति मत्वर्थ इनि )। तुष्टास्यै = तुष्टानि = प्रसन्नानि आस्यानि = मुखानि येषा ते तुष्टास्यास्तै । जितम् = अस्माभि = पराजित कौरवकुलमिति अवेक्ष्य = दृष्ट्वा, निश्चित्येत्यर्थ, सहसा = झटिति, प्रहर्षात् = आनन्दातिरेकात् नाद कृत = गर्जित कृतम् । गुरुभि = महद्भि धराधरवरै = पर्वतश्रेष्ठै, सक्षोभितै = सरब्धै, समुत्तेजितै, पार्थिवै = नृपै, आक्रान्ता = अधिष्ठिता, पक्ष स्वायत्तीकृता, आगतसम्भ्रमा-आगत = प्राप्त, सम्भ्रम = आतङ्क यस्यास्तादृशी । युवतिरिव = अङ्गनेव । भूमि = पृथ्वी । तस्मिन् क्षणे = तस्मिन् काले, कम्पिता = सजातकम्पाऽभवत् । महद्भि पर्वतसदृशै सक्षुब्धैर्नृपतिभिरधिष्ठिता पृथ्वी स्वायत्तीकृता तरुणीवाकम्पतेत्यर्थ । भूकम्पस्य नादस्यापि चेदमेव कारणमिति भाव । 'आगतसभ्रमेव युवतिरित्यत्रोपमालङ्कार । शार्दूलविक्रीडित वृत्तम् ॥ २७ ॥

धृतराष्ट्रोऽपि भटोक्ति निशम्य भविष्यदनर्थं प्रतिपादयति—प्रतिज्ञासारेति । प्रतिज्ञासारमात्रेण—प्रतिज्ञाया सार = दार्ढ्यम्, तन्मात्रेण, इयम् वसुन्धरा = पृथिवी । कम्पिता = अकम्पत । धनुषि = गाण्डीवे, स्पृष्टे = गृहीते, त्रैलोक्यम् = त्रिलोकी । विचलिष्यति = कम्पिष्यते । यस्यार्जुनस्य प्रतिज्ञाबलेनैव धरा

---

से सहसा सिंहनाद किया । महान् पर्वतो के समान उन सक्षुब्ध राजाओ से अधिष्ठित ( आक्रान्त ) पृथिवी, गृहीत ( आक्रान्त ) अतएव घबडायी हुई युवती के समान कॉंप उठी ॥ २७ ॥

धृतराष्ट्र—प्रतिज्ञा के प्रताप से ही पृथ्वी कॉंप उठी । ( गाण्डीव ) धनुष

सुव्यक्तं धनुषि स्पृष्टे त्रैलोक्यं विचलिष्यति ॥ २८ ॥

दुर्योधनः — जयद्रथ ! किमनेन प्रतिज्ञातम् ।

भटः —

येन मे निहतः पुत्रस्तुष्टिं ये च हते गताः ।
इव सूर्येऽस्तमसम्प्राप्ते निहनिष्यामि तानहम् ॥ २९ ॥ इति ।

दुर्योधनः —प्रतिज्ञाव्याघाते किं प्रायश्चित्तम् ।

भटः —चितारोहणं किल गाण्डीवेन सह ।

---

कम्पितः स यदा गाण्डीवमादाय युद्धाद्यतो भविष्यति तदा तु त्रैलोक्यमेव कम्पिष्यत इति सुस्पष्टं प्रतीयत इति धृतराष्ट्राकूताशयः । अनुष्टुब्वृत्तम् ॥२८॥

भटो दुर्योधनेन पृष्टः सन्नर्जुनस्य प्रतिज्ञां स विज्ञापयति–येनेति । येन = वीरेण, मे = मम, अर्जुनस्येत्यर्थः, पुत्रः = सुतः, अभिमन्युरित्यर्थः, निहतः = मारितः, ये च = वीराः, (तस्मिन्) हते = मारिते (भावे सप्तमी), तुष्टिम् = प्रसन्नताम्, गताः = याताः । तान् = शत्रून्, श्वः = आगामिनि दिवसे, सूर्येऽस्तमसम्प्राप्ते सूर्यस्यास्ताचलगमनात्पूर्वमेवेत्यर्थः, अहम् = अर्जुनः निहनिष्यामि = मारयिष्यामि । इत्यर्जुनेन कृता प्रतिज्ञेति भावः । अनुष्टुब्वृत्तम् ॥ २९ ॥

दुर्योधन इति । प्रतिज्ञाव्याघाते–प्रतिज्ञायाम् व्याघातः = विघ्नः, तस्मिन् (भावे सप्तमी) अपूर्णायां प्रतिज्ञायां सत्यामित्यर्थः । प्रायश्चित्तम्–प्रायस्य = पापस्य, चित्तम् = विशोधनं यस्मात्तम् । (निपातनात् सुडागमः) पापनिष्कृतिरित्यर्थः । ('प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयोगात् प्रायश्चित्तमितीर्यते' इति हेमाद्रिः) ।

भटः —गाण्डीवेन सह–करेण गाण्डीवं धनुर्गृहीत्वेत्यर्थः । ('सहयुक्तेऽप्रधाने'

---

उठाने पर तीनों लोक डगमगा जायेगा—यह सुस्पष्ट है ॥ २८ ॥

दुर्योधन – हे जयद्रथ ! इस (अर्जुन) ने क्या प्रतिज्ञा की है ?

भट—जिसने मेरे पुत्र को मारा है और मारे जाने पर जो लोग प्रसन्न हुए हैं उन सबको मैं कल सूर्यास्त के पूर्व ही मार डालूँगा—ऐसी (प्रतिज्ञा की है) ॥ २९ ॥

दुर्योधन—प्रतिज्ञा पूरी न होने पर कौन सा प्रायश्चित्त करेगा ?

भट—निश्चय गाण्डीव धनुष के साथ चिता पर चढ़ना ।

प्रयामि सौभद्रविनाशचोदितः दिदृक्षुरद्यारिमनार्यचेतसम् ।
विचिन्तयंश्चक्रधरस्य शासनं यथा गजेन्द्रोऽङ्कुशशङ्कितो बलिम् ॥३३॥

( अधो विलोक्य ) इदमस्योपस्थानगृहद्वारम् । यावदवतरामि । ( अवतीर्य ) आत्मनैवात्मानं निवेदयिष्ये । भोः ।

---

घटोत्कचः स्वाऽऽगमनप्रयोजनं कथयति—प्रयामि सौभद्रेति । सौभद्रविनाशचोदित —सुभद्राया अपत्य पुमान् सौभद्रः = अभिमन्युः, तस्य विनाशः = निहनम्, तेन चोदितः = प्रेरित, अहम् = घटोत्कच इत्यर्थः । अद्य = इदानीम्, अनार्यचेतसम्—न आर्यमिति अनार्यम् = निकृष्टम्, चेतः = हृदयं यस्य तम् , दुराशयमित्यर्थः । अरिम् शत्रुम् , दिदृक्षुः = द्रष्टुमिच्छु ( सन्नन्ताद् दृश्धातो 'सनाशंसभिक्ष उ' इति कर्तरि उ प्रत्यय, 'न लोकाव्ययनिष्ठा खलर्थतृनाम्' इति षष्ठी निषेधे 'अरिमि'त्यत्र कर्मणि द्वितीयैव । ) यथा = येन प्रकारेण गजेन्द्र = हस्तिश्रेष्ठ, अङ्कुशशङ्कितः—अङ्कुश = भल्ली, तस्माद् शङ्कितः = सशङ्क, बलिम् = आहारम्, ( तथा ) चक्रधरस्य—धरतीति धरः, चक्रस्य धरः इति चक्रधर = श्रीकृष्णः, तस्य शासनम् = आज्ञाम्, विचिन्तयन् = विचारयन्, प्रयामि = गच्छामि । यथा कश्चिद् गजेन्द्रोऽङ्कुशात् सशंकः स्वाहारं ग्रहीतुं प्रयाति तथैवाहमपि श्रीकृष्णाज्ञया शत्रुं द्रष्टुं गच्छामीत्यर्थः । उपमाऽलंकारः । वंशस्थं वृत्तम् । तल्लक्षणं यथा—'जतौ तु वंशस्थमुदीरितं जरौ ।' इति ॥ ३३ ॥

इदमस्येति । इदम् = पुरोवर्ति । अस्य शत्रोः, दुर्योधनस्य । उपस्थानगृहद्वारम्—उपस्थानगृहम् = सभाभवनम्, तस्य द्वारम् । आत्मनैव = स्वयम्, आत्मानं निवेदयिष्ये=स्वपरिचयं दास्यामि ।

---

मैं सुभद्रा के पुत्र ( अभिमन्यु ) के संहार से प्रेरित होकर, चक्रधर कृष्ण की आज्ञा को सोचता हुआ, दुष्टहृदय शत्रु को देखने की इच्छा से जा रहा हूँ, जैसे अङ्कुश से सशङ्क गजराज अपना) दैनिक आहार लेने जाता है ॥ ३३ ॥

( नीचे देखकर ) यह सभागृह का द्वार है । तो उतरता हूँ । ( उतर कर ) स्वयं ही अपना परिचय दूँगा । अजी,

हैडिम्बोऽस्मि घटोत्कचो यदुपतेर्वाक्यं गृहीत्वा गतो
द्रष्टव्योऽत्र मया गुरुः स्वचरितैर्दोषेर्गतः शत्रुताम् ।

दुर्योधन —

एह्येहि प्रविशस्व शत्रुभवनं कौतूहलं मे महत् ।
धृष्टं श्रावय मां जनार्दनवचो दुर्योधनोऽहं स्थितः ॥३४॥

घटोत्कच —( प्रविश्य ) अये अयमत्रभवान् धृतराष्ट्रः । अनार्यशत-

---

घटोत्कचः स्वयमेव स्वपरिचयं ददाति—हैडिम्बोऽस्मीति । यदुपतेः = श्रीकृष्णस्य, वाक्यम् = वचनम्, सन्देशमित्यर्थः, गृहीत्वा, आगतः = सम्प्राप्तः, हैडिम्बः = हिडिम्बा तन्नाम्नी राक्षसकुलोत्पन्ना स्त्री, तस्याः, अपत्यं पुमान् हैडिम्बः (अपत्यार्थेऽण्) = हिडिम्बापुत्रः, घटोत्कचः = तन्नामा, अस्मि । स्वचरितैः —स्वेन आत्मना चरितैः = कृतैः, दोषैः = अपराधैः, शत्रुतां गतः = शत्रुभावं प्राप्तः, गुरुः = श्रेष्ठः, ( 'गुरुस्तु गीष्पती श्रेष्ठे' इत्यमरः ) मया = घटोत्कचेन, अत्र, द्रष्टव्यः = दर्शनीयः ।

तच्छ्रुत्वा दुर्योधनः प्राह —एह्येहीति । एहि = आगच्छ । शत्रुभवनम् = रिपुगृहम्, प्रविशस्व = प्रवेशं कुरु ( आत्मनेपद—प्रयोगश्चिन्त्यः, पाणिनीयव्याकरणे तादृशविधानाभावात् । ) मे = मम, दुर्योधनस्येत्यर्थः । महत् = परमम्, कौतूहलम् = औत्सुक्यम् ( वर्तते ) । धृष्टम् = निर्भयं यथा स्यात्तथा, जनार्दनवचः —जनार्दनस्य = श्रीकृष्णस्य वचः = वचनम्, सन्देशमिति यावत् । माम् = दुर्योधनम्, श्रावय = कर्णगोचरीकुरु । अहं दुर्योधनः, स्थितः, श्रोतुमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

घटोत्कचो धृतराष्ट्रं पश्यन् साश्चर्यमाह—अये अयमिति । अये = आश्चर्यसूचकमव्ययपदम् । अयम् = पुरतो दृश्यमानः, अत्रभवान् = पूज्यः । अनार्य-

---

श्री कृष्ण के वाक्य ( सन्देश ) को ग्रहण करके आया हुआ मैं हिडिम्बा का पुत्र घटोत्कच हूँ । मुझे यहाँ अपने ही किये अपराधों के कारण शत्रु बने हुए गुरुजनों से मिलना है !

दुर्योधन—आओ, आओ । शत्रु के गृह में प्रवेश करो, मुझे बड़ी उत्सुकता है, निर्भयतापूर्वक श्रीकृष्ण का वचन (सन्देश) मुझे सुनाओ, मैं दुर्योधन ( सुनने को ) स्थित हूँ ॥ ३४ ॥

घटोत्कच—( प्रवेश कर ) अहो ! यह पूज्य धृतराष्ट्र हैं, सौ अधम पुत्रों

स्योत्पादयिता। अयं ननु ललितगम्भीराकृतिविशेषः। आश्चर्यमाश्चर्यम्।

वृद्धोऽप्यनाततवलीगुरुसंहतासः
श्रद्धेयरूप इव पुत्रशतस्य धृत्या।
मन्ये सुरैस्त्रिदिवरक्षणजातशङ्कै-
स्त्रासान्निमीलितमुखोऽत्रभवान् हि सृष्टः॥ ३५॥

घतस्य—अनार्याणाम् = दुष्टानां शतम्, शतसंख्याकानां दुर्योधनादिदुष्टाना मित्यर्थः। उत्पादयिता = जनक। नन्विति निश्चये। ललितगम्भीराकृति-विशेष—ललित = सुन्दर, गम्भीर = सयत आकृतिविशेष यस्य स।

घटोत्कचो धृतराष्ट्रं वर्णयति—वृद्ध इति। वृद्ध = जरठ, अपि, अनातत-वलीगुरुसहतास—न आतता = विस्तारिता, अनुद्भूतेत्यर्थं, वली (सिकुडन, झुर्री इति भाषायाम) तया गुरु = मासलाविरर्थं, संहतौ – मिलितौ असौ= स्कन्धौ यस्य स तथाविध। पुत्रशतस्य = शतसङ्ख्याकाना पुत्राणामित्यर्थ, धृत्या = धारणेन, श्रद्धेयरूप इव—श्रद्धातु योग्य श्रद्धेय, तादृश रूप यस्य स तथोक्त। त्रिदिवरक्षणजातशङ्कै—त्रिदिवम् = स्वर्गं, ('स्वरव्यय स्वर्ग नाक-त्रिदिव त्रिदशालया' इत्यमर) तस्य रक्षणे पालने जाता = उत्पन्ना, शङ्का = सन्देहो येषा तं, धृतराष्ट्र कदाचित्स्वर्गं स्वायत्तीकुर्यादिति जातसन्देहैरि-त्यथ, त्रासात् = भयात्, निमीलितमुख — निमीलितम् – मुद्रितनेत्रयुक्तमित्यर्थं, मुखम् = आनन यस्य स तथाविध अन्ध इत्यर्थः। हि=निश्चयेन, अत्रभवान् = पूज्य, धृतराष्ट्र, सृष्ट = रचित इति मन्ये = सभावयामि। कदाचिदय धृतराष्ट्र स्वर्गं स्वायत्तीकुर्यादिति भीतेषु देवेषु ब्रह्मणा धृतराष्ट्रोऽन्ध सृष्ट इति भाव। उत्प्रेक्षालङ्कार। वसन्ततिलक वृत्तम्॥ ३५॥

---

क जनक। निश्चय ही इनकी सुन्दर, गम्भीर आकृति बड़ी विशिष्ट है। बड़ा आश्चर्य है।

वृद्ध है, फिर भी झुर्रियाँ नही पडी हैं अतएव इनके कन्धे पर मासल और सुपुष्ट हैं। सौ पुत्रो के रखने से ये श्रद्धेय रूप हैं। मालूम होता है कि निश्चय हा स्वर्गलोक को रक्षा मे देवताओ को शङ्का हो गयी थी, अतएव (ब्रह्मा ने) इन पूज्य (धृतराष्ट्र) को अन्धा हो बनाया॥ ३५॥

( उपसृत्य ) पितामह ! अभिवादये घटोत्क--( इत्यर्धोक्ते ) न न अयमक्रमः । युधिष्ठिरादयश्च मे गुरवो भवन्तमभिवादयन्ति । पश्चाद्घटोत्कचोऽहमभिवादये ।

धृतराष्ट्रः—एह्येहि पुत्र !

न ते प्रियं दुःखमिदं ममापि
यद् भ्रातृनाशाद् व्यथितस्तवात्मा ।
इत्थं च ते नानुगतोऽयमर्थो
मत्पुत्रदोषात् कृपणीकृतोऽस्मि ॥ ३६ ॥

---

धृतराष्ट्रो घटोत्कचं सान्त्वयन्नाह—न ते प्रियमिति । यत्, भ्रातृनाशात्—भ्रातु = अभिमन्यो नाशात् = वधात् । तव = घटोत्कचस्य, आत्मा = हृदयम्, व्यथितः = दुःखितः, ते = तव, इदम् = भ्रातृनाशजनितम्, दुःखम् = सन्तापः, मम = धृतराष्ट्रस्यापि न प्रियम् = प्रीतिकरम्, त्वमिवाहमपि दुःखमनुभवामीति भावः । इत्थम् = अनेन प्रकारेण च, अयम् = वक्ष्यमाण इत्यर्थः, अर्थः = आशयः, ते = तव ( कृद्योगे कर्तरि षष्ठी ) न अनुगतः = न ज्ञातः । मत्पुत्रदोषात्—मम = धृतराष्ट्रस्य य पुत्रः = दुर्योधनः, तस्य दोषात् = तत्कृतापराधात्, कृपणीकृतोऽस्मि—अकृपणः कृपणः कृतः इति कृपणीकृतः ( अभूततद्भावे च्विः )=कदर्थीकृतोऽस्मि, दयनीयां दशां प्रापितोऽस्मीति भावः । उपजातिर्वृत्तम् ॥ ३६ ॥

---

( समीप जाकर ) पितामह ( बाबा जी ) ! 'अभिवादन करता हूँ मैं घटोत्क···' ( ऐसा आधा वाक्य कहने पर ) नहीं नहीं, यह क्रम रहित है। युधिष्ठिर आदि मेरे गुरुजन आपको अभिवादन कर रहे हैं, तत्पश्चात् मैं घटोत्कच अभिवादन करता हूँ।

धृतराष्ट्र—आओ आओ पुत्र !

जो भाई ( अभिमन्यु ) के मारे जाने से तुम्हारी आत्मा व्यथित है, यह तुम्हारा दुःख मुझे भी प्रिय नहीं है। और इस प्रकार तुम इस बात को नहीं समझते, मैं अपने पुत्रों के अपराध से कदर्थित ( दयनीय दशा को प्राप्त ) कर दिया गया हूँ ॥ ३६ ॥

घटोत्कच.—अहो कल्याण. खल्वत्रभवान् । कल्याणानां प्रसूतिं पितामहमाह भगवांश्चक्रायुधः।

धृतराष्ट्रः (आसनादुत्थाय।) किमाज्ञापयति भगवांश्चक्रायुधः।

घटोत्कचः—न न न। आसनस्थेनैव भवता श्रोतव्यो जनार्दनस्य सन्देशः।

धृतराष्ट्र.—यदाज्ञापयति भगवांश्चक्रायुध (उपविशति।)

घटोत्कच.—पितामह! श्रूयताम्। हा वत्स अभिमन्यो! हा वत्स कुरुकुलप्रदीप। हा वत्स यदुकुलप्रवाल! तव जननीं मातुलं च मामपि परित्यज्य पितामहं द्रष्टुमाशया स्वर्गमभिगतोऽसि। पितामह! एकपुत्रविनाशादजुनस्य तावदादृशो खल्ववस्था, का पुनर्भवतो भविष्यति।

---

घटोत्कच इति। अहो विस्मयादिबोधकमव्ययपदम्। कल्याण = सौभाग्यशाली। खलु = निश्चयेन। कल्याणानाम् = शुभानाम्। प्रसूतिम् = जनकम्, उत्पादयितारम्। पितामहम् = पितु पितरम्, धृतराष्ट्रमित्यर्थं, चक्रायुध = चक्रम् आयुध यस्य स, श्रीकृष्ण इत्यर्थः। आत्मबलाधानम् स्वसैन्य

---

घटोत्कच – अहा, निश्चय ही आप बड़े सौभाग्यशाली है। कल्याणो के जनक आप पितामह से भगवान् चक्रपाणि (श्रीकृष्ण) ने कहा है।

धृतराष्ट्र (आसन से उठकर) भगवान् चक्रपाणि की क्या आज्ञा है?

घटोत्कच—नही, नही, नही। आप आसन पर बैठे ही श्रीकृष्ण का सन्देश सुने।

धृतराष्ट्र भगवान् चक्रपाणि की जो आज्ञा।

घटोत्कच—पितामह! सुनिए। हाय वत्स अभिमन्यु! हाय कुरुवंश के दीपक! हाय वत्स यदुकुल के अङ्कुर! तुम अपनी माता मामा और मुझ (पिता) को भी छोडकर पितामह (इन्द्र) के दर्शन की आशा से स्वर्गलोक को चले गये। हे पितामह! एक पुत्र के विनष्ट हो जाने से तो अर्जुन की यह अवस्था हुई है, फिर (सौ पुत्रो के विनष्ट होने पर) आप की क्या अवस्था होगी (सोचिए)। तो शीघ्र अब आप अपनी सेनाओ को लौटा ले, ताकि पुत्रशोक से उठी आग तुम्हारे प्राण रूप हवि को न जलाये।

ततः क्षिप्रमिदानीमात्मश्लाघानं कुरुष्व। यथा ते पुत्रशोकसमुत्थितोऽग्निर्न दहेत् प्राणमयं हविरिति।

धृतराष्ट्रः—

सक्रोधव्यवसायेन कृष्णेनैतदुदाहृतम्।
पश्यामीव हि गाण्डीवी सर्वक्षत्रवधे धृतः ॥३७॥

सर्वे—अहो हास्यमभिधानम्।

घटोत्कचः—किमेतद्धास्यते।

दुर्योधनः—एतद्धास्यते—

---

प्रत्यावर्तनम्। पुत्रशोकसमुत्थित—पुत्रमरणजन्यशोकसमुद्भूत। प्राणमयम् = प्राणात्मकम्।

श्रीकृष्णसन्देशं श्रुत्वा धृतराष्ट्रो घटोत्कचमाह—सक्रोधेति। सक्रोधव्यवसायेन—क्रोधेन सहितः सक्रोधः, तादृशो व्यवसाय उद्योगो यस्य तेन। कृष्णेन = वासुदेवेन, एतत् = वचः, उदाहृतम् = कथितम्। हि = यत। गाण्डीवी—गाण्डीवं धनुरस्यस्येति गाण्डीवी ('अत इनिठनौ' इति इनिः)—अर्जुन। सर्वक्षत्रवधे—सर्वेषां क्षत्राणाम् = क्षत्रियाणां वधे = विनाशे, धृतः = नियुक्तः श्रीकृष्णेनेति भाव। इति पश्यामि = अवगच्छामीवेत्यर्थः। उत्प्रेक्षालंकारः। अनुष्टुब्वृत्तम्॥ ३७॥

सर्वे इति। अभिधानम् = कथनम्, श्रीकृष्णस्येति भाव। हास्यम् = हसनीयम्।

---

धृतराष्ट्र—क्रोध के आवेश मे सचेष्ट होकर ऐसा श्रीकृष्ण ने कहा है, मैं तो प्रत्यक्ष देख सा रहा हूँ कि (उनके द्वारा) गाण्डीवधारी अर्जुन समस्त क्षत्रियो के विनाश मे नियुक्त कर दिया गया है॥ ३७॥

सब लोग—अहा, कैसा हास्यास्पद सन्देश है।

घटोत्कच—इसमे हँसने की क्या बात है?

दुर्योधन—हँसने की यह बात है—

देवैर्मन्त्रयते सार्धं स कृष्णो जातमत्सरः ।
पार्थेनैकेन यो वेत्ति निहतं राजमण्डलम् ॥ ३८ ॥

घटोत्कच —

हससि त्वमहं वक्ता प्रेषितश्चक्रपाणिना ।
श्रावितं पार्थकर्मेदमहो युक्तं तवैव तु ॥ ३९ ॥

अपि च, भवतापि श्रोतव्यो जनार्दनसन्देशः ।

दुश्शासनः—मा तावत् भोः ! क्षत्रियावमानिन् !

---

दुर्योधनः श्रीकृष्णसन्देशस्य हास्यत्वमुपपादयति—देवैरिति । जातमत्सरः—जातः = उत्पन्नः मत्सरः = ईर्ष्या यस्य स तथोक्तः । सः = प्रसिद्धः, कृष्णः = वासुदेवः, देवैः सार्धम् = सुरैः सह, मन्त्रयते = मन्त्रणां करोति । यः = कृष्णः, एकेन अद्वितीयेन, पार्थेन = अर्जुनेन, राजमण्डलम् = नृपसमूहम्, निहतम् = विनाशितम्, वेत्ति = जानाति । तद्वाक्यमेव तत्कथनमिति भावः । अनुष्टुब्वृत्तम् ॥

घटोत्कचो दुर्योधनं निन्दति—हससीति । त्वम् = दुर्योधनः, हससि = हास्यं करोषि, अहम् = घटोत्कचः, वक्ता = सन्देशवाहकः, चक्रपाणिना—चक्रं पाणौ यस्य स चक्रपाणिः श्रीकृष्णः तेन, प्रेषितः = प्रहितः, पार्थकर्म—पार्थस्य = अर्जुनस्य कर्म = कृत्यम्, श्रावितम् कर्णगोचरीकृतम्, अहो ! इदम् = एतादृशं कर्म, सन्देशं श्रुत्वा हसनमित्यर्थः । तवैव = तव दुर्योधनस्यैव तु युक्तम् = उचितम् । त्वदतिरिक्तो नान्यः कश्चिदेव कर्तुं समर्थः, मूढस्त्वं श्रीकृष्णसन्देशं तिरस्करोषीति भावः । अनुष्टुब्वृत्तम् ॥ ३९ ॥

---

वह कृष्ण देवताओं के साथ मन्त्रणा किया करता है ( अब देवताओं की सङ्गति से ) वह ईर्ष्यालु हो गया है जो केवल एक अर्जुन के द्वारा समस्त राज-समुदाय को मारा गया समझता है ॥ ३८ ॥

घटोत्कच—चक्रपाणि भगवान् कृष्ण के द्वारा भेजा हुआ मैं सन्देश कह रहा हूँ और तुम मखौल कर रहे हो । मैं पार्थ का कर्म सुना चुका । अहो, यह ( हंसी उड़ाना ) तुम ( मूढ ) को उचित ही है ॥ ३९ ॥

और भी, आप भी श्रीकृष्ण का सन्देश सुन लें ।

दुःशासन—अजी, ऐसा नहीं ! हे क्षत्रियों का अपमान करने वाले !

का स्पष्टीकरण करते हुए कथानक को सरल ढंग से समझाने का प्रयास इस संस्करणमें किया गया है। अब यह अपने लक्ष्य में कहाँ तक ठीक है इसका उत्तर विद्वान्; सहृदय आलोचक या उपकृत छात्र ही दे सकते हैं लेखक नहीं। इसकी भूमिका प्रस्तुत करने में कतिपय इतिहास ग्रन्थों को देखना पड़ा है और उनकी सहायता ली गयी है अतः मैं उनका हार्दिक आभारी हूँ।

कर्णभार की प्रस्तुत व्याख्या मैं क्या कर सकता था जो कुछ भी किया वह पूज्य गुरु चरण श्री प० कीर्त्यानन्द झा जी का शुभाशीर्वाद एवं मित्रवर श्री राधारमण ठाकुरजी का सहयोग ही है। अतः इन दोनों व्यक्तियों की कृतज्ञता का अनुभव कर मैं अपने को कृतकृत्य मानता हूँ। एवञ्च सबसे बड़ा कृतज्ञ तो अग्रजस्वरूप पं० श्री हरेकान्त जी मिश्र का हूँ जिन्होंने अपनी अंगुली का सहारा देकर इसपथ पर चलना सिखाया। प्रकाशक महोदय ने जो मुझे इस संस्कृत सेवा का अवसर प्रदान किया अत. उन्हें हार्दिक धन्यवाद है।

मेरे परिश्रम की सफलता विद्यार्थियों के लाभ से ही है, अतः यदि छात्र गण इससे कुछ भी लाभान्वित हुए तो मैं अपने को कृतकृत्य समझूँगा।

वाराणसी<br>
वि० सं० २०३४

वैद्यनाथ

॥ श्री. ॥



# कर्णभारम्

## 'इन्दुकला' संस्कृत-हिन्दी-व्याख्योपेतम्



### प्रथमोऽङ्कः

राधा-पूजित-पाद-पद्म - युगलं कृष्णं प्रणम्याधुना।
कीर्त्यानन्द-गुरुं प्रणम्य शिरसा छात्रस्तदीयो मुदा।
टीका "मिन्दुकला" करोमि सरला छात्रोपकाराय वै।
भासाविष्कृत-कर्णभा सुकृतेः काश्यां गुरोः सन्निधौ॥

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधार—

नरमृगपतिवर्ष्मालोकन-भ्रान्तनारी-
नरदनुजसुपर्वव्रातपातालतलोक ।
करजकुलिश-पाली-भिन्नदैत्येन्द्रवक्षा
सुररिपुबलहन्ता श्रीधरोऽस्तु श्रिये वः ॥ १ ॥

तत्रभवान् सकलकविकुलचूडामणिः, कालिदासादिभिः संकीर्तितगुणगण',
प्रतिज्ञायौगन्धरायणाद्यनेक-नाटक-निर्माता, कविताकामिन्याः हासः महाकविर्भासः

कोशः—व्यग्रो व्यासक्त आकुले।

भावार्थः—सूत्रधारः दर्शकान् किञ्चिद् विवक्षति तदैव नेपथ्ये कोलाहल इव शृणोति तदेव कथयति कथमयं कोलाहल इति पश्यामि।

हिन्दी:—इस प्रकार आप महानुभावों को मैं सूचित करता हूँ कि ( घूम कर ओर नेपथ्य की ओर कान लगाकर ) अरे! जिस समय मैं सूचना देने में संलग्न हूँ कुछ कोलाहल सा सुन रहा हूँ। अच्छा देखूँ तो, क्या है ?

( पर्दे के पीछे )

विशेष—नाटक में "नेपथ्य" उस स्थान को कहते हैं जहाँ पर नाटक के सभी पात्र वस्त्राभूषण धारण करते हैं, वेशभूषा से सुसज्जित होते हैं। रङ्गमञ्च और प्रेक्षागृह जहा सब पात्र सुसज्जित होते हैं उसके बीच में लगे हुए पर्दे को भी सुविधा के लिये 'नेपथ्य" कहा जाता है।

भो भो ! निवेद्यतां निवेद्यतां महाराजायाङ्गेश्वराय। भवतु विज्ञातम्।

सूत्रधारः—

संग्रामे तुमुले जाते कर्णाय कलिताञ्जलिः।
निवेदयति संभ्रान्तो भृत्यो दुर्योधनाज्ञया ॥ २ ॥

( निष्क्रान्तः )

॥ प्रस्तावना ॥

( ततः प्रविशति भटः )

अन्वयः—जाते, तुमुले, संग्रामे, कलिताञ्जलिः, संभ्रान्तः, भृत्यः, दुर्योधनाज्ञया कर्णाय, निवेदयति ॥ २ ॥

व्याख्या:—जाते = संप्राप्ते; तुमुले = भयङ्करे संग्रामे = रणे, कलिताञ्जलि = कलितः = विहितः अञ्जलिः = हस्तसम्पुटो येनासौ, अञ्जलिं बध्वा इत्यर्थः। संभ्रान्तः = व्यग्रः; भृत्य. = परिचारक ; दुर्योधनाज्ञया = कौरवाधिपादेशेन, कर्णाय = अङ्गेश्वराय, निवेदयति = सूचयति। "श्लोके षष्ठं गुरुज्ञेयं सर्वत्र लघु

पञ्चमम । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः" ॥ इति लक्षणानुसारमत्र "अनुष्टुप् छन्दः ॥ २ ॥

समासः—कलितः अञ्जलिर्येन सः कलिताञ्जलिः ( तृ० तत्० ) । दुर्योधनस्य आज्ञया दुर्योधनाज्ञया ( ष० तत्पुरुष ) ।

कोशः—संप्रहाराभिसम्पातकलिसंस्फोट-संयुगाः ।

अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥

तुमुलं रण संकटे इत्यमरः । अववादस्तु निर्देशो निदेशः शासनं च सः । शिष्टिश्चाज्ञा च इत्यमरः । भृत्ये दासेरदासेय दासगोप्यकचेटकाः । नियोज्य-किङ्करप्रैष्य भुजिष्यपरिचारका इत्यमरः ॥

भावार्थः—सूत्रधारः नेपथ्ये किञ्चिदाकर्ण्य दर्शकान् कथयति यत् कथमय कोलाहलो जातः इति ज्ञात मया घोरे रणसङ्कटे समागते व्याकुलः दुर्योधनानुचरः तदाज्ञया कर्णाय निवेदयति यत् इदानीं संग्रामोऽभूदिति ॥

हिन्दी:—हे ! हे ! ( लोगों ) महाराज अङ्गनरेश कर्ण को सूचित करें !

सूत्रधारः—अच्छा जान लिया ।

भयङ्कर युद्ध उपस्थित हो जाने पर घबड़ाया हुआ दुर्योधन का दूत उसकी आज्ञा से हाथ जोड़कर अङ्गदेशाधिपति महाराज कर्ण को युद्ध की सूचना दे रहा है ॥ २ ॥ [ सूत्रधार चला जाता ]

॥ प्रस्तावना समाप्त ॥

विशेषः—'यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते । तेन पात्र-प्रवेशश्चेत् प्रयोगातिशयस्तदा" ॥ 'साहित्यदर्पण" के इस लक्षण के अनुसार यहाँ पर प्रयोगातिशय नामक तृतीय प्रस्तावना है ।

कथा को आगे बढ़ाने के लिये "नाटक के आरम्भ में सूत्रधार द्वारा जो भूमिका प्रस्तुत की जाती है उसे प्रस्तावना कहते हैं ।

( ततः प्रविशति भटः )

भटः—भो भो ! निवेद्यतां निवेद्यतां महाराजायाङ्गेश्वराय युद्धकाल उपस्थित इति ।

करितुरगरथस्थैः पार्थकेतोः पुरस्ताद्
मुदितनृपतिसिंहैः सिंहनादः कृतोऽत्र ।
त्वरितमरि-निनादैर्दुस्सहालोकवीरः
समरमधिगतार्थः प्रस्थितो नागकेतुः ॥ ३ ॥

अन्वय—पार्थकेतो, पुरस्ताद्; करितुरगरथस्थैः मुदितनृपतिसिंहैः; अत्र सिंहनादः कृत.। अरिनिनादैः; दुस्सहालोकवीरः अधिगतार्थः; नागकेतुः; त्वरितम्, समरम्, प्रस्थितः ॥ ३ ॥

व्याख्याः—पार्थस्य = अर्जुनस्य केतो = ध्वजस्य पुरस्ताद् = अग्रतः करिण = नागाः = वाजिन, रथाः = स्यन्दमानि तेषु तिष्ठन्ति, तैरिति = करितुरगरथस्थैः नागाश्वस्यन्दनस्थितैः, मुदिता. = प्रसन्ना नृपतय = अर्जुनपक्षपातिन भूपतय एव सिंहाः = नृपतय तैः मुदितनृपतिसिंहैः = प्रसन्न-राजपञ्चाननैरितियावत्, अत्र = युद्धे; सिंहनाद = सिंहगर्जन कृतमिति । अतः अरिनिनादैः = शत्रुजनैः; दुस्सहः = वोढुमशक्य परैरिति यावत्; आलोक. = तेजोविशेष ; यस्य स चासौ वीरश्च = शूरश्चेति दुस्सहालोकवीरः = अपरिमितप्रभाशालीयोद्धा इत्यर्थः; अधिगतार्थ = ज्ञातप्रयोजन.; नागकेतु. = नाग. = हस्ती केतौ=ध्वजे यस्य सः नागकेतु. = हस्तिध्वजः; त्वरितम् = शीघ्रम् समरम् = युद्धस्थल "प्रतीति शेष." प्रस्थित = प्रचलित ॥ "ननमययुतेयं मालिनी भोगिलोकै" इति लक्षणानुसारमत्र "मालिनी" छन्दः ॥ ३ ॥

समासः = करिणश्च तुरगाश्च रथाश्चेति करितुरगरथम् (द्वन्द्व०) तेषु तिष्ठन्ति ये ते करितुरगरथस्थास्तैः पूर्वोक्तैः ॥ पृथाया अपत्यं पुमान् पार्थः; पार्थस्य केतुः पार्थकेतुस्तस्य (ष० तत्पुरुष)। मुदिताश्चतेनृपतय. मुदितनृपतय तएव सिंहाः तैः पूर्वोक्तैः। दुस्सहः आलोको यस्य स दुस्सहालोक. (बहु०) स चासौ वीरश्च दुस्सहालोकवीर. (द्वन्द्वः)। अधिगतः अर्थो येन स अधिगतार्थ (बहुव्रीहि.)। नाग केतुर्यस्य स नागकेतु. (बहुव्रीहिः)।

कोशः—दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करीत्यमरः ॥

घोटके वीतितुरग-तुरङ्गाश्वतुरङ्गमाः। वाजिवाहार्वगन्धर्वहयसैन्धव सप्तय.। इत्यमरः। याने चक्रिणि युग्यार्थे शताङ्ग. स्यन्दनो रथः इत्यमरः। ग्रहभेदे ध्वजे केतुः इत्यमरः। राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः। रिपौ वैरि सपत्नारिद्विषद् द्वेषणदुर्हृदः। इत्यमरः॥

भावार्थः—अर्जुनस्य पताका समक्षं हस्त्यश्वरथस्थैः प्रसन्नैः सिंह-सदृशबलशालिभि. नृपैः रणाङ्गणे सिंहनादो विहितः, अत एव शत्रुगर्जनैरमित-तेजोवान् दुर्योधन' शीघ्रमेव युद्धस्थलं प्रति प्रयात इति।

हिन्दीः—( भट प्रवेश करता है )

भटः—ऐ लोगों! महाराज अङ्गनरेश ( कर्ण ) को निवेदन कर दें कि युद्ध का समय उपस्थित हो गया है।

अर्जुन की ध्वजा के सामने हाथी, घोड़े और रथ पर बैठे हुए, प्रसन्न, सिंह के समान वीर राजाओं ने यहाँ रणभूमि में सिंह गर्जना की, शत्रुगर्जना के कारण जिसके तेजो विशेष को दूसरा सहन नहीं कर सकता एवं जिसके ध्वज में मणिमय हाथी का चिह्न है वे दुर्योधन शीघ्रता' से रणभूमि के लिये प्रस्थान कर चुके हैं॥ ३॥

( परिक्रम्य विलोक्य ) अये अयमङ्गराजः समरपरिच्छदपरिवृत. शल्यराजेन सह स्वभवनान्निष्क्रम्य इत एवाभिवर्तते। भोः किं न खलु युद्धोत्सव-प्रमुखस्य दुष्पराक्रमस्या-भूतपूर्वो हृदयपरितापः।

एष हि—

अत्युग्रदीप्तिविशदः समरेऽग्रगण्य
शौर्ये च संप्रति सशोकमुपैति धीमान्।
प्राप्ते निदाघसमये घनराशिरुद्धः
सूर्यः स्वभावरुचिमानिव भाति कर्ण.॥ ४॥

शल्यः—बाढम् । ( चोदयति )

कर्णः—अहो नु खलु ।

अन्वयः—तावत्, मम, शरमार्ग-लक्ष्यभूता.; क्षितिपतयः; सजीवशेषाः; मा संप्रासाः । रणशिरसि; कुरूणा; प्रियं कर्तव्यं ( वर्तते ) यदि स धनञ्जयो मे द्रष्टव्यो भवेत् ॥ ५ ॥

व्याख्याः—तावत् = अद्यावधि पूर्वेषु युद्धेष्वित्यर्थः; मम = कर्णस्य शर । णाम् = बाणानाम्, मार्गे = पथि, लक्ष्यभूताः = लक्ष्यत्वं गताः; क्षितिपतयः = राजानः; सजीवशेषाः – प्राणवन्तः; मा संप्रासाः = नाऽभूवन् । सर्वे हता इत्यर्थः (अद्यतने) रणशिरसि = युद्धमध्ये; कुरूणाम् = धार्तराष्ट्राणाम्; प्रियम् = अभीष्टम्; कर्तव्यम् = कार्यम् ( वर्तते ) यदि = चेत्; सः = अस्मद्प्रतिभट ; धनञ्जयः = अर्जुन मे = मम द्रष्टव्य = दृष्टिगोचर.; भवेत् = स्यात् । कौरवाभीप्सितमर्जुनवधं विधाय तेषामभिलाषं पूरयिष्यामि ॥ अत्र प्रहर्षिणी छन्द । तल्लक्षणञ्च "म्याशाभिर्मनजरगा प्रहर्षणीयम्" ॥ ५ ॥

समासः—शराणाम् मार्गः = शरमार्गं ( ष० तत्० ) तस्य लक्ष्यभूताः शरमार्गलक्ष्यभूताः ( ष० तत्पु० ) । जीवेन सहिता इति सजीवा त एव शेषाः सजीवशेषा. । रणस्य शिरः रणशिरः तस्मिन् रणशिरसि ( ष० तत्पु० )

कोशः—पृषत्कबाणा विशिखा अजिह्मगखगाशुगाः ।
　　कलम्बमार्गणशरा पत्रीरोप इपुर्द्वयोः । इत्यमरः ।
　　अयनं वर्त्म - मार्गाध्वपन्थानः पदवी सृतिरित्यमरः ॥
　　अभीष्टे अभीप्सितं हृद्य दयितं वल्लभ प्रियमित्यमरः ॥

भावार्थः—कर्ण स्वमनोगतं भाव . व्यनक्ति यद्; अद्यावधि पूर्वेषु युद्धेषु मम बाणलक्ष्यीभूताः केऽपि राजानः जीवन्तः सन्त नागच्छन् । अद्य यदि युद्धे अर्जुने दृष्टिगोचरो भवेत् तर्हि तं निहत्य कौरवाभिलाष पूरयामीति ॥

हिन्दी —( भट के चले जाने के बाद पूर्वनिर्दिष्ट कर्ण और शल्य प्रवेश करतेहैं । )

कर्णः—आज तक ऐसा पहले कभी नहीं हुआ कि कोई भी राजा मेरे बाणों के रास्ते में आकर जीवित चला गया हो। आज इस युद्ध में, मैं कौरवों का अभिलाषा पूर्ण कर दूँ यदि अर्जुन को देख जाऊँ तो ॥ ५ ॥

शल्यराज ! जहाँ पर वह है मेरे रथ को वहीं ले चलो।

शल्यः—अच्छा। ( रथ ले जाता है )

कर्णः—ओहो, यह कैसे—

अन्योन्यशस्त्र-विनिपात-निकृत्तगात्र—
योधाश्ववारणरथेषु महाहवेषु।
क्रुद्धान्तकप्रतिमविक्रमिणो ममापि
वैधुर्यमापतति चेतसि युद्धकाले ॥ ६ ॥

भो कष्टम्।

पूर्वं कुन्त्यां समुत्पन्नो राधेय इति विश्रुतः।
युधिष्ठिरादयस्ते मे यवीयांसस्तु पाण्डवाः ॥ ७ ॥

अन्वयः—अन्योन्येति। अन्योन्यशस्त्रविनिपातनिकृत्तगात्रयोधाश्ववारणरथेषु; महाहवेषु, क्रुद्धान्तकप्रतिमविक्रमिणः; ममापि, चेतसि; युद्धकाले, वैधुर्यमापतति ॥ ६ ॥

व्याख्याः—अन्योन्यम् = मिथः; शस्त्राणाम् = बाणादीनाम् विनिपातैः = प्रहारैः. निकृत्तगात्राः = विक्षतविग्रहाः; योधाः = सैनिकाः; अश्वाः = हयाः; वारणाः = हस्तिनः रथाः = स्यन्दनाः येषु; तेषु महाहवेषु = महारणेषु, क्रुद्धः = कुपितः अन्तकः = यमराजः तत्प्रतिमम् = तादृशः; विक्रमः = पराक्रमो यस्य; ( तस्य ) ममापि = कर्णस्यापि चेतसि = हृदये; युद्धकाले = रणसमये; वैधुर्यम् = दैन्यम्, आपतति = आगच्छति ॥ ६ ॥ अत्र वसन्त तिलका वृत्तं लक्षणन्तु पूर्वोक्तमेव ॥

समासः—अन्योन्य शस्त्राणां विनिपातः = अन्योन्यशस्त्रविनिपातः ( ष० तत्पु० ) निकृत्तानि गात्राणि येषां ते निकृत्तगात्राः ( बहुव्रीहिः ) अन्योन्यशस्त्र-

अन्वयः—अयमेति। अयं सः क्रमलब्धशोभनः, काल आगतः अयं गुणप्रकर्षः, दिवसः, आगतः, मया हि, निरर्थम् अस्त्रम्, शिक्षितम्, पुनश्च, मातुर्वचनेन वारितः, अस्मीति शेषः ॥ ८ ॥

व्याख्याः—अयम् = उपस्थितः, सः = बहुसमय-प्रतीक्षितः, क्रमेण = दिवस-क्रमेण लब्धः = प्राप्तः, शोभनः = रमणीयः कालः = समयः आगतः = सम्प्राप्तः, अयम् = एव गुणप्रकर्षः = सद्गुणप्रकृष्टः दिवसः = वासरः आगत = प्राप्तः, हि = परन्तु मया = कर्णेन, निरर्थम् = निष्प्रयोजनम्, अस्त्रम् = आयुधम् शिक्षितम् = अभ्यस्तम् पुनश्च = भूयोऽपि मातुर्वचनेन = कुन्तिवचसा वारित. = निषिद्धोऽ-"स्मी"ति शेषः। पद्येऽस्मिन् 'वंशस्थ" नामक छन्दः। तल्लक्षणञ्च "जतौ तु वंशस्थमुदीरितं जरौ" इति ॥ ८ ॥

समास.—क्रमेण लब्धः = क्रमलब्धः (तृ० तत्पु०) क्रमलब्धश्चासौ शोभनः क्रमलब्धशोभनः (कर्मधारय) गुणानां प्रकर्षोऽयस्मिन्निति, गुणप्रकर्षः (बहुव्री०)।

कोश.—कालो दिष्टोऽप्यनेहापि समयः। इत्यमरः। सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्। इत्यमरः। घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ। इत्यमरः। व्याहार उक्तिर्लपितं भाषित वचनं वचः। इत्यमर।

भावार्थ—चिरकालात् प्रतीक्षितोऽयं समयोऽप्यागतः। सद्गुणः युक्तोऽयं वासरोऽप्यागतः "युद्धस्य"। किन्तु मया परशुरामेण व्यर्थमेवास्त्रं शिक्षितम्, एवञ्च मात्रा कुन्त्या "युधिष्ठिरादिके अस्त्रप्रहारो मा कृथा." इति बहुवारं निषिद्धोऽस्मि ॥ ८ ॥

हिन्दीः—मैं जिसकी प्रतीक्षा बहुत समय से कर रहा था वह युद्ध का समय भी आ गया और आज का दिन भी अनेक सद्गुण से युक्त है (अत एव उपयुक्त है)। परन्तु मैंने शस्त्रों का अभ्यास व्यर्थ ही किया, और माँ कुन्ती ने "युधिष्ठिरादि पर शस्त्रप्रहार न करना" ऐसा कहकर बहुत बार मना भी किया है ॥ ८ ॥

ओ! शल्यराज, मेरे शस्त्रों की कहानी सुन लीजिये।

शल्य—मुझे भी इस कहानी को सुनने का कौतूहल है। ( सुनाइये )

कर्ण—पहले एक बार मैं परशुराम के समीप गया था।

शल्य—उसके बाद क्या हुआ ?

विद्युल्लता–कपिलतुङ्ग–जटा–कलाप-
मुद्यत्प्रभावलयिनं परशुं दधानम्।
क्षत्रान्तकं मुनिवरं भृगुवंशकेतुं
गत्वा प्रणम्य निकटे निभृतः स्थितोऽस्मि ॥ ९ ॥

अन्वय:—विद्युल्लताकपिलतुङ्गजटाकलापम्, उद्यत्प्रभावलयिनम्, परशुं दधानम्, क्षत्रान्तकम्, मुनिवरम्, भृगुवंशकेतुम्, निकटे, गत्वा, प्रणम्य, निभृत, स्थितः, अस्मि ॥ ९ ॥

व्याख्याः—विद्युल्लता = सौदामिनीलता, 'इव" कपिलाः = पिशङ्गा', पिङ्गलवर्णा इत्यर्थः, तुङ्गाः = महान्तः जटाः = सटा. "तासा' कलापः = निचयो यस्य तम, उद्यन्ती = उर्ध्वं गच्छन्ती, या प्रभा = ज्योति तस्या. वलयम् = प्रकोष्ठ यस्य तम्, स्फुरत्कान्तिपरिधिमन्तमित्यर्थ.; परशुम् = कुठारम् 'एतन्नामकास्त्र-विशेषम्', दधानम् = धारयन्तम्, क्षत्रान्तकम् = क्षत्रियाणाम् कालम् मुनि-वरम् = ऋषिश्रेष्ठम्, भृगुवंशकेतुम् = भार्गवकुलकेतुम्, निकटे = समीपे गत्वा = उपसृत्य, प्रणम्य = प्रणामं कृत्वा, निभृत = शब्दरहित स्थित. = अव-स्थित', अस्मि = सवृत्त । अत्र वसन्ततिलका छन्द ॥ ९ ॥

समासः—विद्युदेव लता = विद्युल्लता; वद्वत्कपिलाः विद्युल्लताकपिला, जटायाः कलापः जटाकलापः, ( ष० तत्पु० ) तुङ्गाश्च ते जटा कलापाः तुङ्ग-जटाकलापाः; विद्युल्लताकपिलाश्च ते जटाकलापाविद्युल्लता–कपिलजटाकलापा यस्य तम्, उद्यन्तीचैवा प्रभा च उद्यत्प्रभा ( कर्मधारयः ) उद्यत्प्रभैव वलय यस्य तम्, उद्यत्प्रभावलयिनम् ।

कोशः—तडित्सौदामिनी विद्युच्चञ्चला चपला अपि । इत्यमर' । कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ इत्यमरः । स्युः प्रभारुग्रुचिस्त्विड् भाभा-श्छविद्युति दीप्तयः रोचिशोचि. । व्रतिनस्तु जटा सटा इत्यमर । निभृतविनीत-प्रश्रिताः समा. । इत्यमरः समीपे निकटासन्नसन्निकृष्टसनीडवत् इत्यमरः ।

भावार्थः—विद्युत्प्रभेवकान्तिमन्तं जटाकलापं धारयन्तं क्षत्रियकुलान्तकं कुठारनामकस्त्रविशेषधारिणं परशुराम-नामकं भार्गव-कुलकेतुं समीपं गत्वा तूष्णीं स्थितः आसमिति, कर्णः स्वशस्त्राभ्यास-प्रसंगं कथयति शल्यम् ॥

हिन्दी —बिजली के समान पीली एवं बड़ी जटा समूह को धारण करने वाले; प्रभामण्डल से परिवेष्ठित; "परशु" नामक अस्त्रविशेष धारण करनेवाले; क्षत्रियकुल के लिये काल समान, मुनिश्रेष्ठ, भृगुकुलकेतु ( परशुराम ) के समीप जाकर प्रणाम करके मैं चुपचाप बैठ गया ॥ ९ ॥

शल्यः—ततस्ततः ।

कर्णः—ततो जामदग्न्येन ममाशीर्वचनं दत्त्वा पृष्टोऽस्मि । को भवान् किमर्थमिहागत इति ।

शल्यः—ततस्ततः ।

कर्णः—ततः भगवन् अखिलान्यस्त्राण्युपशिक्षितुमिच्छामीत्युक्तवानस्मि ।

शल्यः—ततस्ततः ।

कर्णः—ततः उक्तोऽहं भगवता ब्राह्मणेषूपदेशं करिष्यामि न क्षत्रियाणामिति ।

शल्य —अस्ति खलु भगवतः क्षत्रियवंश्यैः पूर्ववैरम् । ततस्ततः ।

कर्ण —ततो नाहं क्षत्रिय इत्यस्त्रोपदेशं ग्रहीतुमारब्धं मया ।

शल्यः—ततस्ततः ।

कर्णः—ततः कतिपय कालातिक्रमे कदाचित् फलमूलसमित्कुशकुसुमाहरणाय गतवता गुरुणा सहानुगतोऽस्मि ।

शल्यः—ततस्ततः ।

कर्णः —ततः स गुरुर्वन-भ्रमणपरिश्रमान्मदङ्के निद्रावशमुपगतः ।

शल्यः—ततस्ततः ।

हिन्दी—शल्यः—उसके बाद ?

कर्णः—तब फिर परशुराम ने आशीर्वाद देकर मुझे पूछा कि; आप कौन है और यहाँ किस लिये आये हैं ?

शल्यः—उसके बाद ?

कर्ण—तब भगवन् ! "सम्पूर्ण अस्त्र विद्या सीखना चाहता हूँ" ऐसा मैंने कहा।

शल्य—तब फिर ?

कर्ण—उसके बाद भगवान ( परशुराम ) ने मुझसे कहा कि; मैं केवल ब्राह्मणों को ही अस्त्र विद्या सिखलाता हूँ, क्षत्रियों को नहीं।

शल्य—परशुराम की क्षत्रियों से पुरानी दुश्मनी है। तब फिर ?

कर्ण—"मैं क्षत्रिय नहीं हूँ" ऐसा मैंने कहकर अस्त्र सीखना प्रारम्भ कर दिया।

शल्य—तब क्या हुआ ?

कर्ण—तब कुछ दिनों के बाद एक बार फलमूल लकड़ी कुशा और फूल इत्यादि लाने के लिये जंगल को जाते हुए गुरु के साथ मैं भी जंगल चला गया।

शल्य—उसके बाद ?

कर्ण—तब फिर जंगल में भ्रमण करने के कारण थक कर गुरुजी मेरी गोद में सो गये।

शल्य—उसके बाद क्या हुआ ?

कर्णः—अतः

कृत्ते वज्रमुखेन नाम कृमिणा दैवान्ममोरुद्वये
निद्राच्छेदभयादसह्यातगुरोर्धैर्यात्तदावेदना।
उत्थाय क्षतजाप्लुतः स सहसा रोषानलोद्दीपितो
बुद्ध्वा मां च शशाप काल-विफलान्यस्त्राणि ते सन्त्विति ॥१०॥

अन्वयः—दैवात्, वज्रमुखेन, नामकृमिणा, ममोरुद्वये, कृत्ते, तदा, गुरोः, निद्राच्छेदभयात्, वेदना, धैर्यात्, असह्यत। सहसा; क्षतजाप्लुतः, सः उत्थाय; मां च बुद्ध्वा, रोषानलोद्दीपितः; कालविफलानि, ते, अस्त्राणि, सन्तु इति ( मां ) शशाप।

व्याख्याः—दैवात् = दुर्भाग्यात्, वज्रेण = कुलिशेन; मुखम् = आस्यं यस्य तेन; एतन्नामकेन कृमिणा = कीटेन मम = कर्णस्य ऊरुद्वये = जङ्घाद्वये, कृत्ते =

सत्ते, तदा = तस्मिन समये, गुरो = जामदग्न्यस्य निद्राच्छेद-भयात् = निद्राभङ्ग-भयात्; वेदना = दष्टोद्गमकष्टम्, धैर्यात् = साहसात् असह्यत = सोढा। सहसा= अकस्मात्; क्षतजाप्लुन = रक्तासञ्चित, स = गुरुर्परशुराम; उत्थाय = निद्रां विहाय, मा = कर्णं च बुद्ध्वा = एव विध साहस क्षत्रियातिरिक्तेपु न भवतीदं क्षत्रिय एवेति ज्ञात्वा; रोष = मन्यु एव अनल = वह्नि, तेन उद्दीपित = प्रज्वलित "सन्" कालविफलानि = समयासहायकानि, ते = ममोपदिष्टस्य कर्णस्य अस्त्राणि = आयुधानि सन्तु = भवन्तु इति = एव प्रकारेण (मा) शशाप = शाप दत्तवान् ॥ अत्र शार्दूलविक्रीडित नामक छन्द ॥ १० ॥

समास—वज्रवद्मुखं यस्य स वज्रमुखस्तेन। निद्रायाश्छेद = निद्राच्छेद, (प० तत्०) तस्य भय निद्राच्छेदभय (प० तत्०) तस्मात्। क्षतात् जात = क्षतज (पञ्चमी तत्०) तेन आप्लुत = क्षतजाप्लुत. (तृ० तत्०)। रोष एव अनलः तेनाद्दीपित रोषानलोद्दीपित (तृ० तत्०)। काले विफलानि = कालविफलानि (स० तत्पु०)।

कोश—दैव दिष्ट भागधेयम्। इत्यमर। सक्थिक्लीबे पुमानुरु। स्यान्निद्रा शयनं स्वाप स्वप्न सवेश इत्यपि। इत्यमर। कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रियो ॥ इत्यमर।

भावार्थ—ममाङ्क सुप्ते गुरौ मम दौर्भाग्यात वज्रमुख-नामक कश्चन कीट-विशेष मदूरुयुगले दष्टवान, अह च गुरोर्निद्राभङ्गो मा भूदिति निश्चत्य सेवा-त्रुटिर्नस्यादिति भयेन च ता वेदनामहम सहित, क्षतजेन शोणितेनार्द्र गुरु सहसोत्थाय एतादृश साहसे क्षत्रियातितरेपु वर्णेपु नैव भवितुमर्हति क्षत्रिय एवैष इति मा बुद्ध्वा ममोपदिष्टानि तवायुधानि प्रयोजन-समये विफलानि सन्त्विति मा शप्तवान् ॥ १० ॥

हिन्दी—मेरी गोद म जब भगवान् परशुराम (गुरुजी) सो गये तब मेरे दुर्भाग्य वश वज्रमुखनामक एक कोडे ने मेरे दोनो जाघो में काट लिया, 'गुरुजी की निद्रा भङ्ग न हो जाए" इस भय से मैंने उस वेदना को उस समय सह लिया, परन्तु खून के स्पर्श से गुरुजी अचानक जाग पडे और यह क्षत्रिय हो हैं (क्योंकि ऐसा साहस अन्य जाति के लोगों में नहीं हो सकता) ऐसा मुझ

जानकर 'समय आने पर मेरे सिखलाये तुम्हारे अस्त्र विफल हो जाएँ" ऐसा शाप दे डाला।

शल्यः—अहो कष्टमभिहितं तत्र भवता।

कर्णः—परीक्षामहे तावदस्त्रस्य वृत्तान्तम्। (तथा कृत्वा) एतान्यस्त्राणि निर्वीर्याणीव दृश्यन्ते। अपि च

> इमे हि दैन्येन निमीलितेक्षणा
> मुहुः स्खलन्तो विवशास्तुरङ्गमाः।
> गजाश्च सप्तच्छददानगन्धिनो
> निवेदयन्तीव रणे निवर्तनम्॥ ११॥

[illegible]

अन्वयः—इमेति। हि, दैन्येन, निमीलितेक्षणाः, इमे, मुहुः, स्खलन्तः, विवशाः, तुरङ्गमाः; सप्तच्छददानगन्धिनः, गजाश्च रणे, निवर्तनम्, इव, निवेदयन्ति।

शब्दार्थः—हि = यतः, दैन्येन = दीनतया, निमीलितानि = मुद्रितानि ईक्षणानि = अक्षीणि येषां ते इमे = पुरोवर्तिनः, मुहुः = वारंवारम्, स्खलन्तः = पतन्तः विवशाः = स्वातन्त्र्यहीनाः; तुरङ्गमाः = घोटकाः, सप्तच्छदस्य = सप्तपर्णस्य 'एतन्नामकपुष्पविशेषस्येत्यर्थः; दानस्य दानवारेः इव गन्धः = सुगन्धो येषां ते गजाश्च = हस्तिनश्च, रणे = युद्धे; निवर्तनम् = परावर्तनम्; इव = यथा निवेदयन्ति = प्रार्थयन्ति इति। अत्र वंशस्थं वृत्तम्। तल्लक्षणञ्च पूर्वोक्तमेव॥

समासः—निमीलितानि ईक्षणानि येषां ते = निमीलितेक्षणाः सप्त संख्याकाः छदाः यस्य सः सप्तच्छदः (बहु०) तस्य गन्ध इव दानगन्धो येषां ते सप्तच्छददानगन्धिनः।

कोशः—युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्, इत्यमरः।

भावार्थः—इमे मदीया अश्वा कातर्येण सम्पुटिताक्षणाः, सततः भूयोभूयः स्खलन्ति, सप्तपर्णस्य गन्धवत् येषां दानवारिः गन्धोऽस्ति ते गजाश्च युद्धे परावर्तनं मन्ये निवेदयन्ति॥

हिन्दी—शल्य—ओहो ! मुनि ने बहुत ही दु:खद बात कह डाली।

कर्ण—अच्छा, तब तक मैं अपनी अस्त्र-कथा की परीक्षा करता हूँ। (वैसा करके) ये अस्त्र भी निःसत्त्व से लग रहे हैं।

और भी। ये दीन बने, परवश घोड़े आँख बन्द किये हुए बार-बार ठोकर खाकर स्खलित हो रहे हैं, और सप्तपर्ण नामक पुष्प के गन्ध के समान जिनके मद का गन्ध है वे हाथी भी युद्ध में पीछे लौट जाने का मानो निवेदन सा कर रहे हैं।

शङ्ख, दुन्दुभियाँ भी नहीं बज रही हैं।

शल्य —भो कष्टं किं नु खल्विदम्।

कर्ण —शल्यराज ! अलमलं विषादेन।

हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः।
उभे बहुमते लोके नास्ति निष्फलता रणे ॥ १२ ॥

अन्वय —हतः, अपि, स्वर्गम्, लभते, जित्वा, तु, यशः लभते, लोके, बहुमते, रणे, निष्फला, नास्ति ॥

व्याख्या —शोक-सतप्तं शल्यमवलोक्य कर्णस्तं संतोषयति हतोऽपीत्यादिना। हतः = मृतः अपि = "युद्धे" स्वर्गम् = देवलोकम्, लभते याति; जित्वा = विजयं प्राप्य, यशः = कीर्तिं लभते = प्राप्नोति, लोके = संसारे, उभे = स्वर्गकीर्ती, बहुमते = श्लाघ्ये अतः, रणे = युद्धे, निष्फलता = फलराहित्यं "कदापि" नास्ति = न भवति अत्र अनुष्टुप् छन्दः ॥ १२ ॥

कोश —स्वरव्यय स्वर्गनाकत्रिदिवत्रिदशालयाः। इत्यमरः। यशः कीर्तिः समज्ञा च। इत्यमरः ॥

भावार्थ—शल्यं सन्तोषयति कर्णः यत्, हे यन्तः! यद्यपि स्थितिरनुकूला नास्ति तथापि न भेतव्यं यतो हि युद्धे मारितः स्याम तर्हि स्वर्गं प्राप्स्यामि, यदि च विजेष्यामि तर्हि यशः प्राप्स्यामि संसारे द्वावपि श्लाघ्यावेव, अतः युद्धं निष्फलं नैव भवति ॥

हिन्दी—शल्य—ओह ! बहुत ही दु:ख की बात है। ये सब क्या हो रहे हैं?

अर्थः—सूत! अधिक विषाद करना व्यर्थ है।

युद्धस्थल में योद्धा के मारे जाने पर वह स्वर्ग पाता है और यदि विजयी होता है तो वह यश प्राप्त करता है और संसार में स्वर्ग और यश ये दोनों अविनश्वर ही हैं। अत एव युद्ध में निष्फलता नहीं रहती।

अपि च—

इमे हि युद्धेष्वनिवर्तिताशा
हया सुपर्णेन समानवेगाः।
श्रीमत्सु काम्बोजकुलेषु जाता
रक्षन्तु मां यद्यपि रक्षितव्यम् ॥ १३ ॥

स्वस्त्यस्तु गोब्राह्मणानाम्; स्वस्त्यस्तु पतिव्रतानाम्। स्वस्त्यस्तु रणेष्वपराङ्मुखानां योधपुरुषाणाम्। स्वस्त्यस्तु मम प्रातःकालस्य। एष नौः प्रसन्नोऽम्ब।

अन्वयः—हि; युद्धेष्वनिवर्तिताशाः सुपर्णेन समानवेगाः, श्रीमत्सु काम्बोजकुलेषु जाताः, इमे, हयाः, यद्यपि, रक्षितव्यम्; "तथापि" मां, रक्षन्तु ॥ १३ ॥

व्याख्या—हि = निश्चयम्; युद्धेषु = रणेषु, अनिवर्तिताशाः = अप्रतिहताभिलाषाः; सुपर्णेन = वैनतेयेन गरुडेनेत्यर्थः, समानवेगाः = सदृशगतयः; श्रीमत्सु = शोभासम्पन्नेषु काम्बोजकुलेषु = काम्बोजाभिधेयवंशेषु, जाताः = प्राप्तजन्मानः; इमे = मदीयाः पुरोवर्तमानाः, हयाः = अश्वाः; यद्यपि रक्षितव्यम् = युद्धे मया रक्षणीयम्; "तथापि मामवश्यमनुकूलमनयात्" मा = वर्ष्म (रक्षकम्) रक्षन्तु = पान्तु ॥ अत्रोपेन्द्रवज्रेन्द्रवज्रयोः संमिश्रणादुपजातिश्छन्दः ॥

गोब्राह्मणानाम् = गोविप्राणाम्, स्वस्त्यस्तु = कल्याणमस्तु, पतिव्रतानाम् = पातिव्रत्यधर्मचारिणीनाम् स्त्रीणां स्वस्त्यस्तु = कल्याणं भवतु। रणेषु = युद्धेषु; अपराङ्मुखानाम् = अनिवर्तितवदनानाम्; योध—पुरुषाणाम् = सैनिकानाम्, स्वस्त्यस्तु = कल्याणमस्तु; प्रातःकालस्य = प्रभातसमयस्य, मम = कर्मस्य स्वस्त्यस्तु = कल्याणमस्तु।

समासः—निवर्तिता आशा येषान्ते निवर्तिताशाः; न निवर्तिताशाः अनिवर्तिताशाः, (नञ् समास)॥

भावार्थः—यद्यपि इमे सफलितमनोरथा गरुडसमानवेगवन्त. काम्बोजाः घोटका युद्धे मया रक्षितव्या सन्ति तथापि अपशकुन-दर्शनादसमर्थं मामेव ते रक्षन्तु ॥ १३ ॥

हिन्दी—जिन्होंने युद्ध में कभी भी आशाभग्न नहीं किया, जो गरुड के समान वेग वाले हैं, शोभासम्पन्न कम्बोजकुलोत्पन्न वे घोडे यद्यपि मेरे रक्षणीय हैं ( मुझे उनकी रक्षा करनी चाहिए ) फिर भी इस समय वे मेरी रक्षा करें ॥ १३ ॥

गौओं और ब्राह्मणों का कल्याण, पातिव्रत्यधर्मावलम्बन करने वाली स्त्रियों का कल्याण हो, युद्धस्थल में जो कभी भी विमुख नहीं हुए हों उन योधागण का कल्याण हो; अवसर पाये हुए मेरा भी कल्याण ही। अच्छा, तो अब मैं प्रसन्न हो गया हूँ ॥

समर—मुखमसह्यं पाण्डवानां प्रविश्य
प्रथितगुणगणाढ्यं धर्मराजं च बद्ध्वा।
ममशरवरवेगै—रर्जुनं पातयित्वा
वनमिवहतसिंहं सुप्रवेशं करोमि ॥ १४ ॥

अन्वय —पाण्डवानाम् असह्यम्; समरमुखम् प्रविश्य, प्रथितगुणगणाढ्यं धर्मराज च बद्ध्वा। मम; शरवरवेगै, अर्जुनम्; पातयित्वा, हतसिंहम् वनम्; इव; सुप्रवेश करोमि ॥ १४ ॥

व्याख्या—पाण्डवानाम् = पाण्डुसुतानाम्, असह्यम् = दुर्धर्षम्; समर-मुखम् = युद्धस्थलम्; प्रविश्य = अन्तर्गत्वा, प्रथितगुणगणेन = प्रसिद्ध-गुण-समूहेन आढ्य = श्लाघ्यतम्, धर्मराजम् = युधिष्ठिरम्, च = तथा बद्ध्वा = निगडैर्निगृह्य। मम = कर्णस्य, शरवरवेगै = श्रेष्ठबाणप्रहारै, अर्जुनम् = धनञ्जयम् "अस्मद् प्रसिद्धप्रतिभटम्"; पातयित्वा = निहत्य, हतसिंहम = मृतवनपतिम् वनम् = अरण्यम्, इव = यथा, सुप्रवेशम् = सरलतया प्रवेशार्हम् करोमि = विदधामि ॥ मालिनीनामक छन्दोऽत्र ॥ १४ ॥

समास—समरस्यमुख = समरमुखम्। गुणाना गण = गुणगण. ( ष० तत्० ) प्रथितश्चासौ गुण–गण = प्रथितगुण ( कर्म० ) तेन आढ्यस्तम् =

प्रथितगुणगणाढ्यम् =( तृ० तत्० ) शरेषु वरः = शरवरा (सप्त० तत्० ) तेषां वेगैः = शरवरवेगैः ( ष० तत्० )। हतः सिंहो यत्र तम् = हत-सिंहम् ( बहु० )।

कोशः—प्रतीते प्रथितख्यात-वित्त-विज्ञात विश्रुताः । इत्यमरः. समूह निवहव्यूह-संदोह विसरव्रजाः—समुदायः समुदयः समवायश्चयो गणः इत्यमरः। सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्ष केसरी हरिः ॥ इत्यमरः। अटव्यरण्यं विपिनं गहनं काननं वनमित्यमरः ॥

भावार्थः—पाण्डवानां दुर्धर्षं सेनाव्यूहे प्रविश्य धर्मराजं बद्ध्वा प्रमुखयोद्धारमर्जुनं मारयित्वा, एतेषां व्यूहं सरलतया प्रवेशयोग्यं यथा स्यात्तथा करोमि ॥ १४ ॥

हिन्दी—पाण्डवों के दुर्धर्ष सेनाओं के बीच प्रवेश करके; प्रसिद्धगुण समूह से श्लाघ्य धर्मराज को बाँधकर; अपने तीक्ष्ण बाणों के वेग से अर्जुन को गिराकर जिस वन का सिंह मार दिया गया हो और वह वन जैसा सरल तरीके से प्रवेश करने योग्य होता है उसी प्रकार पाण्डव व्यूहको भी बना देता हूँ ॥ १४ ॥

शल्यराज ! यावद्रथमारोहाव ।

शल्यः— बाढम् ।

( उभौ रथारोहणं नाटयतः )

कर्णः—शल्यराज ! यत्रासावर्जुनस्तत्रैव चोद्यतां रथः ।

हिन्दी—शल्यराज ! अच्छा तो अब हम लोग रथपर चढ़ें ।

शल्य—अच्छा

( दोनों रथ पर चढ़ने का अभिनय करते हैं )

कर्ण—शल्यराज ! जहाँ वह प्रसिद्ध अर्जुन है वहीं मेरे रथ को ले चलिए ।

( नेपथ्ये )

भोः कण्ण महत्तरं भिक्खं याचेमि [ भो कर्ण ! महत्तरां भिक्षां याचे ]

कर्णः [ आकर्ण्य ] अये वीर्यवान् शब्दः ।

शक्र—हे मेघ गण ! तुम लोग भी सूर्य के साथ ही चले जाओ। ( कर्ण के समीप जाकर ) हे कर्ण ! मैं बहुत बड़ी भिक्षा माँग रहा हूँ।

कर्णः—दृढ प्रीतोऽस्मि भगवन्।

यातः कृतार्थगणनामहमद्य लोके
राजेन्द्र मौलिमणिरञ्जितपादपद्मः।
विप्रेन्द्रपादरजसा तु पवित्रमौलिः
कर्णो भवन्तमहमेष नमस्करोमि ॥ १६ ॥

अन्वयः—एष; अहम्; राजेन्द्रमौलिमणिरञ्जितपादपद्म, अद्य, लोके, कृतार्थ—गणनाम्, यातः, तु विप्रेन्द्रपादरजसा, पवित्रमौलिः, कर्ण. भवन्तम् नमस्करोमि ॥ १६ ॥

व्याख्या:—एष = रणे उपस्थित, अहम् = राधेय ; राजेन्द्रमौलिमणिरञ्जितपादपद्म —राजेन्द्राणाम् = नृपश्रेष्ठानाम्; मौलिषु मस्तकेषु. "रञ्जिता." मणय = हीरकादय, तैं रञ्जितम् = रक्तीकृतम् पादपद्म = चरणकमलम् यस्य स, अद्य = अस्मिन् दिवसे; लोके = संसारे; कृतार्थ–गणनाम् – सम्पादित प्रयोजनमहत्व्याम्, यात = प्राप्त ; तु = किन्तु, विप्रेन्द्रस्य = ब्राह्मणश्रेष्ठस्य भवत· पादरजसा = चरणधूलिना, पवित्रमौलि = पूतमस्तक; कर्ण = एतन्नामक., भवन्तम् = याचकत्वेनोपस्थित विप्रम्; नमस्करोमि = प्रणमामि ॥ वसन्ततिलका नामकम् = छन्द ।

समासः—कृता अर्था यैस्ते कृतार्था ( बहु० ) तेषां गणनाम् - कृतार्थगणनाम् ( ष० त० ), राज्ञामिन्द्र राजेन्द्र ( ष० तत्० ) तेषां मौलि = राजेन्द्रमौलि ( ष० तत्० ) तेषु ये मणय = राजेन्द्रमौलिमणय ( बहु० ) तै रञ्जितं पादपद्म यस्य स राजन्द्रमौलिमणिरञ्जितपादपद्म ( बहु० व्री० )। विप्रेषु इन्द्र विप्रेन्द्र ( स० तत्० ); तस्य पाद. विप्रेन्द्रपाद ( ष० तत् ) तस्य रज विप्रेन्द्रपादरज. तेन विप्रेन्द्रपादरजसा ( ष० तत्० )

कोश —लोकस्तु भुवने जने; इत्यमर । चूडा किरीटं केशाश्च संयता मौलयस्त्रय ; इत्यमर । रेणुर्द्वयो स्त्रियांधूलि पांशुर्ना न द्वयो रज ; इत्यमर. । पवित्र प्रयत पूत ; इत्यमर. ॥

भावार्थ —"सर्वेषामभ्यागतो गुरुः" इति वाक्यानुसारेण आतिथेयः कर्णः विप्रं नमस्कुर्वन् कृतकृत्यमात्मानं मन्यते इति कथनमस्ति "यस्य मम कर्णस्य पादपद्मं नृपश्रेष्ठानां मस्तकस्थितैः मणिभिः रज्यते सोऽहं भवत्पादधूलिपूत—मस्तकः भवन्तं प्रणमामि ॥ १६ ॥

हिन्दी—मैं अत्यन्त खुश हूँ भगवान् । जिसके चरणों को श्रेष्ठ राजागण अपने मस्तकमणि से सुशोभित करते रहते हैं, वह कर्ण आपकी चरणधूलि से पवित्र मस्तक वाला अपने को कृत–कृत्य मानता हुआ आपको प्रणाम करता है ।

शक्रः—( आत्मगतम् ) किं नु खलु मया वक्तव्यं यदि दीर्घायुर्भवेति वक्ष्ये दीर्घायुर्भविष्यति । यदि न वक्ष्ये मूढ इति मां परिभवति । तस्मादुभयं परिहृत्य किं नु खलु वक्ष्यामि । भवतु दृष्टम् । ( प्रकाशम् ) ( भो कण्ण ! सुय्ये विअ चन्दे विअ हिमवन्ते विअ, साअले विअ, चिट्ठदु दे जसो ) । भो कर्ण ! सूर्य इव, चन्द्र इव, हिमवानिव, सागर इव तिष्ठतु ते यशः ।

हिन्दी—( अपने मन में ही ) इस समय मुझे क्या कहना चाहिए, यदि 'दीर्घायु' हो यह कहता हूँ तो दीर्घायु हो जायगा । यदि कोई आशीर्वाद न दूं तो मुझे मूर्ख समझेगा । इसलिए इन दोनों को छोड़कर क्या कहूँ ? अच्छा ! सोच लिया ( स्पष्ट रूप में ) हे कर्ण सूर्य के समान, चन्द्रमा के समान, हिमालय के समान और समुद्र के समान आपका यश स्थिर रहे ।

कर्ण —भगवन् किं न वक्तव्यं दीर्घायुर्भवेति । अथवा एतदेव शोभनम् ! कुतः —

धर्मो हि यत्नैः पुरुषेण साध्यो भुजङ्गजिह्वाचपला नृपश्रियः ।
तस्मात्प्रजापालनमात्रबुद्ध्या हतेषु देहेषु गुणा धरन्ते ॥ १७ ॥

अन्वय —धर्मेति । धर्मः, पुरुषेण, यत्नैः, साध्यः । हि नृपश्रियः, भुजङ्गजिह्वाचपलाः, तस्मात्, प्रजापालनमात्रबुद्ध्या; हतेषु, देहेषु, गुणाः, धरन्ते ।

व्याख्याः—धर्मः = शास्त्रविहितं कर्म, पुरुषेण = मानवेन, यत्नैः = प्रयासैः, साध्यः = विधातव्यः । हि = यतः, नृपश्रियः = राजविभवाः, भुजङ्गानां = भुजगानाम्, जिह्वा इव = रसना इव चपलाः = चञ्चलाः 'अस्थिराः'

इति यावत, तस्मात् = राजलक्ष्म्या अस्थिरत्वात्, प्रजानाम् = जनानाम् पालनम् = रक्षणम्; मात्रम् = स्वबुद्ध्या = विचारेण 'राज्यं करणीय न तु विलास विचारेण" इति शेष; "यतो हि" हतेषु = मृतेषु, देहेषु = शरीरेषु गुणा = यशांसि 'एव" धरन्ते = प्राणयन्ति। अत्रोपजाति वृत्ति ॥ १७ ॥

समास –भुजङ्गाना जिह्वा = भुजङ्गजिह्वा ( ष० तत्० ) नृपाना श्रिय – नृपश्रिय ( ष० तत्० ) भुजङ्गजिह्वावच्चपला नृपश्रिय = भजङ्गजिह्वाचपलानृपश्रिय ( मध्यमपदलोपी ) प्रजाना पालन = प्रजापालन ( ष० तत्० ) तस्मात्रावद्ध्या प्रजापालनमात्रबुद्ध्या।

कोश –स्याद्धर्ममस्त्रियां पुण्य श्रेयसी सुकृत वृष । इत्यमर । सर्प पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गम ॥ इत्यमर । रसज्ञा रसना जिह्वा। प्रजा स्यात सन्ततौ जने । इत्यमर ।

भावार्थ —पुरुषेण धर्म बहुप्रयासैः कर्तव्य, यतोहि राजैश्वर्यादिक भुजङ्गरसनावच्चञ्चला भवति। अत प्रजापालनमात्रविचारेण राज्यङ्कर्तव्यं न भोग-विलासादि-दृष्ट्या यतो हि स्वर्गते मनुष्ये अस्मिन् ससारे तत्कीर्तिरेव त जीवयति ॥ १७ ॥

हिन्दी—

कर्ण —भगवन् ! आपने 'दीर्घायु हो' ऐसा आशीर्वाद क्यो नही दिया ? अथवा आपने जो कहा वही अच्छा।

क्योंकि—

मनुष्य को प्रयास पूर्वक धर्म का ही पालन करना चाहिए। राज-लक्ष्मी तो सर्प को जीभ की तरह चञ्चल है। अत प्रजापालन करने की बुद्धि मात्र से ( विचार से ) राज्य करना चाहिए, क्योकि मनुष्य के मर जाने पर ( इस ससार मे ) उसका यश ( धर्म ) ही उसे जीवित रखता है।

भगवन ! किमिच्छसि किमह ददामि।

शक्र—महत्तर भिक्ख याचेमि। [ महत्तरा भिक्षा याचे। ]

कर्ण—महत्तरा भिक्षा भवते प्रदास्ये। श्रूयन्ता मद्विभवा ।

हिन्दी—भगवन् ! आप क्या चाहते हैं। आपको मैं क्या दूँ ?

शक्र—मैं बहुत बड़ी भिक्षा माँग रहा हूँ।

कर्ण—मैं बहुत बड़ी भिक्षा दूँगा ( मेरा वैभव सुनिए। )

गुणवदमृत-कल्पक्षीरधाराभिवर्षि
द्विजवर ! रुचि तं ते तृप्तवत्सानुयात्रम् ।
तरुणमधिक-मर्थिप्रार्थनीयं पवित्रं
विहितकनक-शृङ्गं गोसहस्रं ददामि ॥ १८ ॥

अन्वय —हे द्विजवर ! गुणवदमृतकल्पक्षीरधाराभिवर्षि, तृप्तवत्सानुयात्रम्; तरुणम्, अधिकम्, अर्थिप्रार्थनीयम्, पवित्रम् विहितकनक-शृङ्गम्-गोसहस्रं, रुचित, ते तुभ्यम्, ददामि ॥ १८ ॥

व्याख्या —हे द्विजवर ! = हे ब्राह्मण-श्रेष्ठ !, गुणवताम् = गुणयुताम्; अमृतकल्पानाम् = सुधासमानानाम्, क्षीराणाम् = दुग्धानाम् धाराभिवर्षम् = अधिकप्रस्रवण शीलमस्येति तथाभूतम्; तृप्त = सन्तुष्ट, वत्सै = अर्भकै, अनुयात्रम् = अनुगच्छन्तम् तरुणम् = युवानम्, अधिक् = बहुलम्, अर्थिभि = याचकै, प्रार्थनीयम् = याचनीयम्; पवित्रम् = पूतम्, विहित-कनकशृगम् = रचित-स्वर्ण—विषाणम् गवा = धेनूनाम सहस्रम् = दशशत—सख्याकम्; रुचिरम् = मनोहारि ते = तुभ्यम् ददामि = प्रयच्छामि ॥ १८ ॥

समास —गुणमस्यास्तीति = गुणवान् तेषाम्, अमृतकल्पानाम् क्षीराणाम् ( या ) धारा ( तस्याः ) अभिवर्षण शीलमस्यति गणवदमृतकल्पक्षीरधाराभिवर्षि; तृप्तश्चासौ वत्साश्चेति = तृप्तवत्साः ( कर्मधारय ) तैरनुयात्रम् = तृप्तवत्सानुयात्रम्, अर्थिभि प्रार्थनीयम् अर्थिप्रार्थनीयम् ( तृ० तत्० ) कनकस्य शृङ्गम् = कनकशृङ्गम् ( ष० तत्० ) विहितं च तत् कनकशृङ्गम् विहितकनकशृङ्गम् ( कर्मधारय ) । गवां सहस्रम् = गोसहस्रम् ( ष० तत्० ) ।

कोश —हृष्टे मत्तस्तृप्त प्रह्ल प्रमुदितः प्रीतः। इत्यमरः। वयस्थतरुणो युवा। इत्यमर। वनीपको याचनको मार्गणो याचकार्थिनौ। इत्यमर। स्वर्णं कनकं हेम हाटकम्। इत्यमर।

भावार्थः—हे विप्रवर ! यदि भवते रोचते तर्हि गुणवता सुधातुल्यानां क्षीराणां या अभिवर्षणं कुर्वते, संतुष्टा वत्सतरा यासामनुगच्छन्ति, तरुण;

विशेषा याचकैश्च या प्रार्थनीया सन्ति, पवित्राणि सन्ति, यासां शृंगाणि स्वर्ण खचितानि सन्ति तथा भूता. दशशत-सङ्ख्याकाः गा तुभ्यं ददामि ॥ १८ ॥

हिन्दी—हे ब्राह्मण श्रेष्ठ यदि आप चाहें तो, अमृत तुल्य दुग्ध देने वाली, सन्तुष्ट बछड़े जिनके पीछे चलते हों, तरुणियाँ हैं, अधिक हैं; जो याचकों द्वारा माँगने योग्य हैं, जिनकी सींगें सोने से मढ़ दी गयी हैं ऐसी पवित्र हजारों गायें मैं आपको दूँ ॥ १८ ॥

शक्र—गो सहस्स त्ति । मुहुत्तअं खिरं पिबामि । णेच्छामि कण्ण ! णेच्छामि । (गोसहस्रमिति । मुहूर्तकं क्षीरं पिबामि । नेच्छामि कर्ण ! नेच्छामि ।)

कर्ण—किं नेच्छति भवान् । इदमपि श्रूयताम् ।

रवितुरग-समानं साधनं राजलक्ष्म्याः
सकलनृपतिमान्यं मान्यकाम्बोजजातम् ।
सुगुणमनिलवेगं युद्धदृष्टापदानं
सपदि बहुसहस्रं वाजिनां ते ददामि ॥ १९ ॥

अन्वयः—रवितुरगेति । रवितुरगसमानम्, राजलक्ष्म्याः; साधनम्, सकल-नृपतिमान्यम्, मान्यकाम्बोज-जातम्, सुगुणम्; अनिलवेगम्; युद्धदृष्टापदानम्, बहुसहस्रम्, ते सपदि, ददामि ॥ १९ ॥

व्याख्याः—रवेः = दिनकरस्य, तुरगाः = घोटकाः, तत्समानम् = तत्तुल्यम्, राजलक्ष्म्याः = नृपश्रियः, साधनम् = हेतुभूतम्, सकलानाम् = सम्पूर्णानाम्; नृपतीनाम् नृपाणाम्, मान्यम् आदरणीयम्, मान्यानाम् = आदरणीयानाम्, काम्बोजानाम् = काम्बोजदेशोद्भवानाम्; "कुले" जातम् = उत्पन्नम्, सुगुणम् = सुन्दरगुणयुक्तम्, अनिलवेगम् = वायुजवम्, युद्धे = रणे दृष्टम् = प्रदर्शितम्; अपदानम् = अवदानम् "वीरतापूर्णकार्यमित्यर्थः" येन तथाभूतम्, वाजिनाम् = अश्वानाम्, बहुसहस्रम् = अपारमित दशशतसङ्ख्याकम्, ते = तुभ्यम्, सपदि — सद्यः ददामि = प्रयच्छामि ।

समासः—रवेः तुरगः = रवि तुरगः ( ष० तत्० ) तत् समानम् रवितुरग-समानम् । सकलानां नृपतीनां मान्यम् सकलनृपतिमान्यम् ( बहु० ) । मान्या-

इयते काम्बोजाः मान्यकाम्बोजाः ( कर्मधारय० ) तेषु जातः=मान्यकाम्बोजजात ( स० तत्० ) । युद्धे दृष्टानि अपदानि येन तत् युद्धदृष्टापदानम् ( बहु० ) ।

कोशः—सूरसूर्यार्यमादित्य द्वादशात्म दिवाकराः इत्यमरः। श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः। पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः। इत्यमरः।

भावार्थः—यदि तुभ्यं गोसहस्रं न रोचते तर्हि चेदिच्छसि, दिनकराश्व-समानवेगतुल्यान्, नृपश्रियः हेतुभूतान्, निखिलनृपति-प्रशस्यान्, सम्मान्यकम्बोज-देशोत्पन्न कुलोत्पन्नान्; सद्गुणान्वितान्, वायुसदृशवेगवतः; युद्धे प्रदर्शितपराक्रमान् असंख्यसहस्रान् घोटकान् तुभ्यं ददामि ॥ १९ ॥

हिन्दी—

शकः—क्या ? हजार गौएं । थोड़े समय तक दूध पीऊँगा ! मुझे यह नहीं चाहिए, कर्ण ! मुझे नहीं चाहिए।

कर्ण—क्या आप गाय नहीं चाहते ? तो यह भी सुनिए। सूर्य के घोड़ों की तरह, राजलक्ष्मी के उपायभूत, सम्पूर्ण राजाओं से प्रशंसनीय कम्बोज देश से होनेवाली काबुली जाति में उत्पन्न, हवा की तरह वेग वाले; जिन्होंने अपना पराक्रम युद्धभूमि में दिखा दिया है, ऐसे हजारों घोड़े मैं आपको तुरत दे रहा हूं ॥ १७ ॥

शक्रः—भस्सत्ति । मुहुत्तअं आलुहामि । णेच्छामि कण्ण । णेच्छामि । [ अश्व इति । मुहूर्तकमारोहामि । नेच्छामि कर्ण । नेच्छामि । ]

कर्णः—किं नेच्छति भगवन् । अन्यदपि श्रूयताम् ।

मदसरितकपोलं षट्पदैः सेव्यमानं
गिरिवर-निचयाभं मेघ-गम्भीरघोषम् ।
सितनखदशनानां वारणानामनेकं
रिपुसमर-विमर्दं वृन्दमेतद्ददामि ॥ २० ॥

अन्वय —मदसरित-कपोलम्, षट्पदैः सेव्यमानम्; गिरिवर-निचयाभम्; मेघगम्भीरघोषम्; रिपुसमर-विमर्दम्; एतत् वारणानामनेकम्; वृन्दम्; ददामि ॥ २० ॥

व्याख्याः—मदैः = दानवारिभिः, सरिता = आप्लाविता ; कपोला = गण्डस्थलानि येषा तत्, षट्पदैः = भ्रमरैः, सेव्यानम् = युक्तम्; गिरिवराणाम = पर्वतश्रेष्ठानाम निचयः = समूहः; तस्य आभा इव आभा = कान्तिर्यस्य तथा भूतम्; मेघानां = जलदानाम्, यः गम्भीरः = ओज-सम्पन्नः, घोषः = दाब्दः तेन युक्तम्, सिताः = श्वेता, नखा = करजा, दशनानि = दन्ताः येषां तथाभूतानाम्, रिपुसमर-विमर्दम् = शत्रुरणध्वंसकम्, वारणानाम = हस्तीनाम, अनेकम् = अधिकम्; वृन्दम् = समूहम् ददामि = प्रयच्छामि । मालनी नामकमत्र छन्द. ॥२०॥

समासः—मदैः सरितौ कपोलौ यस्य तत् मदसरित् कपोलम् ( बहु० ) गिरिषु वरा = गिरिवराः ( स० तत० ) तथा निचय = गिरिवरनिचय ( ष० तन० ) तस्य आभा इव आभा यस्य तत् गिरिवरनिचयाभम् । गम्भीरश्चासौ घोषः गम्भीरघोष ( कर्मधारय ) मेघस्य गम्भीर-घोष = मेघ- गम्भीरघोषः ( ष० तत० ) तद्वत गम्भीरघोषो यस्य तत् मेघगम्भीर नख इव दशनानि चेति = ( द्वन्द्व ) नखदशनम्, सितानि नखदशनानि येषां तथाभूतानां- मिति = सितनखदशनानाम् ( बहुव्रीहिः ) ।

कोश—मदो दानम् । अथ नदी सरित । इत्यमर । मधुव्रता मधुकरो मधुलिण्मधुपालिनः । द्विरेफ पुष्पलिड्भृङ्गषट्पदभ्रमरालय । इत्यमर. । अद्रि गोत्र गिरि ग्रावाल शैल शिलोच्चया. ॥ इत्यमरः ।

भावार्थ—यदि भवते अश्व न रोचते तर्हि मद वारिभि सिक्तकपोलान, भ्रमरैरुपेतान् मेघाना गम्भीरघोषेव गम्भीरशब्दशालिन; श्वेत नखदशन- शालिन, अनेक, शत्रुसमर विनाशकन् हस्तीन् तुभ्य ददामि ॥ २० ॥

हिन्दी—

शक्र—क्या घोडे ? मुहूर्तभर चढूँगा। नही मुझे नही चाहिए । नही चाहिए ।

कर्ण—क्या नही चाहते भगवन् ! अच्छा और भी सुनें । मदजल से जिनके गण्डस्थल भीग गये हैं, जो भ्रमरो से सुशोभित हो रहे हैं, जो ऊंचे पवतो के समूह के समान शोभा वाले हैं, मेघ की तरह ओजस्वी शब्द वाले हैं शत्रुओ के रण को नष्ट करने वाले हैं, उजले नख और दाँत वाले हैं उन हाथियोंके समूह को आपको देता हूँ ॥ २० ॥

शक्रः—गमत्ति । मुहुत्तअं आलुहामि । णेच्छामि कण्ण ! णेच्छामि [ गच्छति । मुहूर्तकमारोहामि । नेच्छामि । कर्ण ! नेच्छामि ।

कर्णः—किं नेच्छति भवान् । अन्यदपि श्रूयताम् । अपर्याप्तं कनकं ददामि ।

शक्रः—गह्णिअ गच्छामि । ( किञ्चिद्गत्वा ) णेच्छामि कण्ण । णेच्छामि । ( गृहीत्वा गच्छामि । ( किञ्चिद् गत्वा ) नेच्छामि कर्ण ! नेच्छामि । )

कर्णः—तेन हि जित्वा पृथिवीं ददामि ।

शक्रः—पुहुवीए किं करिस्सम् । [ पृथिव्याः किं करिष्यामि ]

कर्णः—तेन ह्यग्निष्टोमफलं ददामि ।

शक्रः—अग्गिट्टोम फलेण किं कय्यम् [ अग्निष्टोम-फलेन किं कार्यम् ।

कर्णः—तेन हि मच्छिरो ददामि ।

शक्रः—अविहा अविहा [ अविहा अविहा ]

हिन्दीः—क्या हाथी ? कुछ समय तक चढूँगा । मैं नहीं चाहता कर्ण ! नहीं चाहता ।

कर्णः—क्या आप इसे भी नहीं चाहते ! और भी सुनिए । अपरिमित सोना दे दूँ ।

शक्रः—लेकर चला जाऊँगा ( थोड़ी दूर जाकर ) मुझे नहीं चाहिये कर्ण ! नहीं चाहिये ।

कर्णः—तब जीतकर पृथिवी दे दूं आपको ।

शक्रः—पृथिवी लेकर क्या करूँगा ?

कर्णः—तब "अग्निष्टोम" नामक यज्ञ का फल आपको दूँगा ।

शक्रः—अग्निष्टोम का फल लेकर क्या करूँगा ।

कर्णः—तो अपना मस्तक आपको दूँगा ।

शक्रः— भगवान् रक्षा करे ! रक्षा करे ।

कर्णः—न भेतव्यं न भेतव्यम् । प्रसीदतु भवान् । अन्यदपि श्रूयताम् ।

अङ्गैः सहैव जनितं मम देहरक्षा
देवासुरैरपि न भेद्यमिदं सहस्त्रैः।
देयं तथापि कवचं सह कुण्डलाभ्यां
प्रीत्या मया भगवते रुचितं यदि स्यात् ॥ २१ ॥

अन्वयः—अङ्गैः; सहैव; जनितम्; सहस्त्रैः, अपि, देवासुरैः न भेद्यम्; इदं मम देहरक्षा, कुण्डलाभ्यां सह कवचम्, तथापि, यदि, रुचितं स्यात्; भगवते, मया, प्रीत्या देयम् ॥ २१ ॥

व्याख्याः—अङ्गैः = अवयवैः, सहैव = साकमेव, जनितम्; = उत्पन्नम्; सहस्त्रैः = असंख्यैः; "अपि" न भेद्यम् = अच्छिद्यम्; इदम् = देहसंसक्तम्, मम= मामकीनम्; देहरक्षा (भूतम्) = शरीर-संरक्षकी-भूतम्; कुण्डलाभ्याम् = कर्णमण्डनाभ्याम् सह = सार्धम् कवचम् = वर्म; तथापि = अथापि (भवद्भिर्नयाच्यमस्मद्देहरक्षाभूतत्वात् तथापीति भावः) यदि = चेत् रुचितम् = इच्छितम् स्यात् = भवेत् (तर्हि) भगवते = भवते; मया = कर्णेन, प्रीत्या = प्रसन्नतया, देयम् = दातुं योग्यमस्ति। अत्र वसन्ततिलका वृत्तिः ॥ २११ ॥

समासः—देहस्य रक्षा = देहरक्षा (ष० तत्०) देवाश्च असुराश्चेति = देवासुरा (द्वन्द्व) तैः देवासुरैः ॥

कोशः—अङ्ग प्रतीको ऽवयवो ऽपघन. इत्यमर। सार्धं तु साकं सत्रा समं सह। इत्यमरः। अथ तनुत्रं वर्म दंशनम्। उरश्छदः कङ्कटको जगरः कवचो ऽस्त्रियाम् इत्यमरः।

भावार्थः—यदि भवद्भ्यो मया प्रदत्तमेतानि वस्तूनि न रोचन्ते तर्हि, मम शरीरेण साकमेवोत्पन्नं देवराक्षसैरपि न खण्डनीय कुण्डलाभ्यां सहितं कवचं यदि भवद्भ्यो रोचते, तर्हि तदपि (यद्यपि तेन मम देहरक्षा भवति) अस्मद् देह-रक्षाभूतं सप्रसन्नोऽहं तुभ्यं ददामि ॥ २१ ॥

हिन्दी—डरें न। डरें न। आप प्रसन्न हों। और भी सुनें।
मेरे अङ्गों के साथ ही उत्पन्न, हजारों देवदानवों से भी न भेदन करने

योग्य, मेरे शरीर के रक्षक भूत यह कुण्डलों के साथ कवच है, फिर भी यदि आप इसे चाहें तो मैं सुखी से आपको दे दूँ ॥ २१ ॥

शक्रः—( सहर्षम् ) देदु, देदु ( ददातु, ददातु )

कर्णः—( आत्मगतम् ) एष एवास्य कामः। किं नु खल्वनेककपट-बुद्धेः कृष्णस्योपाय । सोऽपि भवतु । धिगयुक्तम् नुशोचितुम् । नास्ति संशयः। ( प्रकाशम् ) गृह्यताम् ।

शल्यः—अङ्गराज ! न दातव्य न दातव्यम् ।

हिन्दी—शक्र—( हर्ष के साथ ) दीजिए। दीजिए।

कर्णः—( मन में ही ) यही इसकी इच्छा थी। अवश्य ही अनेक कपट व्यवहार में जिसकी बुद्धि हमेशा लगी रहती है उस कृष्ण का ही उपाय है। अच्छा वह भी हो। अनुचित सोचना बेकार है ( धिक्कार )। कोई शंका नहीं। ( स्पष्ट रूप में ) लीजिए।

शल्यः—अङ्गराज ! नहीं देना चाहिए। नहीं देना चाहिए।

कर्णः—शल्यराज ! अलमलं वारयितुम् । पश्य

शिक्षा क्षयं गच्छति कालपर्ययात्
सुबद्धमूला निपतन्ति पादपाः ।
जलं जलस्थानगतं च शुष्यति
हुतं च दत्तं च तथैव तिष्ठति ॥ २२ ॥

तस्माद् गृह्यताम् ( निकुरय ददाति )

अन्वयः—कालपर्ययात्, शिक्षा, गच्छति, सुबद्धमूला, पादपा.निपतन्ति। जलस्थानगतं च जलं शुष्यति, हुतं च, दत्तं च तथैव, तिष्ठति ॥ २२ ॥

व्याख्या—कालपर्ययात् = समयपरिवर्तनात्, शिक्षा = विद्या क्षयं = विस्मृतिं गच्छति = याति, सुबद्धमूला = सुदृढ मूला; पादपा. = वृक्षाः, निपतन्ति = धराशायिताः भवन्ति, जलस्थान-गतम् = तडागप्राप्तम्, च = तथा; जलम् = उदकम्, शुष्यति = शुष्कतां प्राप्नोति, ( परन्तु ) हुतञ्च = वैदिकमन्त्रेण

यज्ञेषु हवन-कुण्डेषु प्रक्षिप्तम्; दत्तञ्च = सुपात्रेभ्यो प्रतिपादितम्; तथैव = यथा स्थितमेव तिष्ठति = सुरक्षितं भवति ॥ २२ ॥

**समासः**—कालस्य पर्ययः—कालपर्ययः ( ष० तत्० ) तस्मात् । सुष्ठु बद्धानि मूलानि येषान्ते सुबद्धमूला ( बहुव्रीहि० ) । जलस्य स्थानम्=जलस्थानम् (.ष० तत्० ) तस्मिन् गतम् = जलस्थानगतम् ( सप्त० तत० )

**कोशः**—कालो दिष्टोऽप्यनेहापि समय इत्यमर. । वृक्षोमहीरुहः शाखी विटपी पादपस्तरुः इत्यमरः । आप स्त्री भूम्निवार्वारि सलिलं कमल जलम् । इत्यमरः ।

**भावार्थः**—सांसारिकानि सर्वाण्यपि वस्तूनि क्षयशीलानीति ध्वनति कर्णे । यत् समय-परिवर्तनादभ्यस्ताऽपि विद्या विस्मृता भवति, सुदृढमूला अपि वृक्षाः प्राचीनेषु सत्सु पतन्ति, तडागस्था आपोऽपि शुष्यन्ति परन्तु वैदिक-मन्त्रेण याज्ञिक हवनकुण्डेषु प्रक्षिप्तं सत्पात्रेभ्यो दत्तं च वस्तु यथाप्रवत्तमेव तिष्ठति ॥२२॥

**हिन्दी**—शल्यराज ! मत रोकिए ! देखिए । समय परिवर्तन होनेपर अभ्यास की गई विद्या भी विस्मृत हो जाती है, मजबूत जडवाले ( पुराने ) वृक्ष भो धराशायी हो जाते है, तालाब का पानी भी ( गर्मीमें ) सूख जाता है, किन्तु हवनमें आहुत किया हुआ और अच्छे पात्र को दिया गया वस्तु उसी तरह सुरक्षित रहता है ॥२२॥

इसलिए ग्रहण कीजिए । ( काटकर देता है )

**शक्रः**—( गृहीत्वा आत्मगतम् । ) हन्त गृहीते एते । पूर्वमेवार्जुनविजयार्थं सर्वदेवैर्यत् समर्थितं तदिदानीं मयानुष्ठितम् । तस्मादहमप्यैरावतमारुह्यार्जुन-कर्णयोर्द्वन्द्व-युद्धं पश्यामि । ( निष्क्रान्त. )

**शल्यः**—भो अङ्गराज ! वञ्चित. खलु भवान् ।

**कर्णः**—केन ?

**शल्यः**—शक्रेण ।

**हिन्दी**—

शक्र —( लेकर मनही मन ) ओह् ये ले लिये गये। पहले ही अर्जुन की विजय के लिये देवताओंने जिसका समर्थन किया था, इस समय उस कार्य को मैंने कर डाला इसलिए ऐरावत पर चढ़कर मैं भी अर्जुन और कर्ण का मल्ल युद्ध देखूंगा। ( निकल जाता है। )

शल्य—हे अंगराज ! आपको ठग लिया।

कर्ण—किसने ?

शल्य—इन्द्र ने।

शक्रः—न खलु। शक्रः खलु मया वञ्चितः। कुतः

अनेक – यज्ञाहुति – तर्पितो द्विजैः
किरीटवान् दानवसंघमर्दनः।
सुरद्विपास्फालन — कर्कशाङ्गुलि-
र्मया कृतार्थः खलु पाकशासनः ॥ २३ ॥

अन्वयः—द्विजैः, अनेक-यज्ञाहुति-तर्पितः, किरीटवान्, दानवसंघमर्दनः, सुरद्विपास्फालन-कर्कशाङ्गुलिः पाकशासनः खलु मया कृतार्थः ॥ २३ ॥

व्याख्या —द्विजैः = ब्राह्मणक्षत्रियवैश्यैः, अनेकेषु = बहुषु = यज्ञेषु = मखेषु; आहुतिभिः = शाकल्यादिभिः ; तर्पितः = संतुष्टः, किरीटवान् = मुकुटमण्डितः ; दानवानाम् = दैत्यानाम्; संघ = समूह, तस्य मर्दनः = ध्वंसक, दैत्य-समूह विनाशक इत्यर्थः। सुरद्विपस्य = ऐरावतस्य, स्फालनैः = सचालनैः कर्कशा = परुषा "रूक्षा इति यावत्; अङ्गुलयः = करशाखा. यस्य सः, पाकशासनः = इन्द्रः खलु = निश्चयेन, मया = कर्णेन कृतार्थः = सतोषितः इति। अत्र "वंशस्थ" नामक छन्दः ॥ २३ ॥

समास —न एके = अनेके च ते यज्ञाः = अनेकयज्ञाः ( कर्मधारय ) तेषां आहुतयः = अनेकयज्ञाहुतयः; ( ष० तत्० ) ताभिः. तर्पितः. यः सः = अनेक यज्ञाहुतितर्पितः ( बहुव्रीहिः )।

दानवानां संघः = दानवसंघः ( ष० तत्० ) दानवसंघस्य मर्दनः = दानवसंघमर्दनः ( ष० तत्० )। सुराणां द्विपः = सुरद्विपः ( ष० तत्० ) तस्य

स्फालनम् = सुरद्विपास्फालनम् ( प० तत्० ) तेन कर्कशाः अंगुलयो यस्य सः = सुरद्विपास्फालन-कर्कशांगुलिः;

कोशः—यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः । इत्यमरः । दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप । इत्यमरः । इन्द्रो मरुत्वान् मघवा विडौजा पाकशासनः । इत्यमरः ।

भावार्थः—द्विजातिभिः बहुषु आहुतिभिर्संतुष्टः, मुकुटमण्डितः, असुरकुल-विमर्दकः, ऐरावत-संचालनेन यदीयाः अंगुलयो रूक्षाः सञ्जाताः सः, इन्द्रः मया कृत-कृत्य कृतः अतः इन्द्र एव मया वञ्चित न खलु तेनाहम् । इति भावः ॥२३॥

हिन्दीः—नहीं । मैंने ही इन्द्र को ठग लिया क्योंकि—ब्राह्मणक्षत्रिय, और वैश्यों के द्वारा अनेकयज्ञोंमें दी गयी आहुतियों से संतुष्ट; मुकुटमण्डित; दैत्य-समूह को विनष्ट करनेवाले; ऐरावत हाथीको चलाने के कारण जिनकी अंगुलियाँ कठोर हो गयी उन इन्द्रको मैंने कृतकृत्य कर दिया ॥ २३ ॥

( प्रविश्य ब्राह्मणरूपेण )

देवदूतः—भोः कर्ण ! कवचकुण्डलग्रहणाज्जनितपश्चात्तापेन पुरन्दरेणानुगृहीतोऽसि । पाण्डवेष्वेकपुरुषवधार्थममोघमस्त्रं विमला—नाम शक्तिरियं प्रतिगृह्यताम् ।

कर्णः—धिग्; दत्तस्य न प्रतिगृह्णामि ।

देवदूतः—ननु ब्राह्मणवचनाद् गृह्यताम् ।

कर्णः—ब्राह्मणवचनमिति । न मयातिक्रान्तपूर्वम् । कदा लभेय ।

देवदूतः—यदा स्मरसि तदा लभस्व ।

कर्णः—बाढम् । अनुगृहीतोऽस्मि । प्रतिनिवर्ततां भवान् ।

देवदूतः—बाढम् । ( निष्क्रान्तः )

कर्णः—शल्यराज ! यावद्रथमारोहावः ।

शल्यः—बाढम् । ( रथारोहणं नाटयतः )

हिन्दी—

( ब्राह्मण वेश में प्रवेश करके )

देवदूत—हे कर्ण ! कवच और कुण्डल ले लेने के कारण पश्चात्ताप करते हुए इन्द्र के द्वारा तुम अनुगृहीत हो। पाण्डवों में से किसी एक को मारने के लिये यह अमोघ अस्त्र "विमला" नामकी शक्ति स्वीकार करो।

कर्ण—धिक् ! मैं दान का बदला नहीं लेता।

देवदूत—ब्राह्मण के कहने से ले लो।

कर्ण—ब्राह्मण का कथन ! पहले मैंने कभी नहीं टाला है। ( अच्छा ) मुझे कब मिलेगी ( शक्ति )।

देवदूत—जभी उसका स्मरण करोगे तभी मिल जायगी।

कर्ण—अच्छा अनुगृहीत हूं। आप लौट जाएं।

देवदूत—बहुत अच्छा। ( निकल जाता है। )

कर्ण—शल्यराज ! तब ( तक ) हम दोनों रथ पर चढ़ें।

शल्य—अच्छा ( दोनों रथ पर चढ़ने का अभिनय करते हैं। )

कर्णः—अये शब्द इव श्रूयते। किं नु खल्विदम्।

शङ्खध्वनिः प्रलय-सागर-घोषतुल्यः
कृष्णस्य वा न तु भवेत् स तु फाल्गुनस्य।
नूनं युधिष्ठिरपराजय-कोपितात्मा
पार्थः करिष्यति यथाबलमद्य युद्धम् ॥ २४ ॥

शल्यराज ! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः।

शल्यः—बाढम् !

अन्वयः—शङ्खध्वनीति। प्रलयसागरघोषतुल्यः; शङ्खध्वनिः; कृष्णस्य, वा तु फाल्गुनस्य भवेत्, युधिष्ठिर-पराजयकोपितात्मा, पार्थः नूनम्, अद्य, यथाबलम्; युद्धम् करिष्यति ॥ २४ ॥

व्याख्या—शङ्खध्वनीति। प्रलयसागरस्य = प्रालेय-समुद्रस्य; घोषः = ध्वनिः, तेन तुल्यः = समानः, शङ्खध्वनिः = कम्बुशब्दः, कृष्णस्य = वासुदेवस्य, वा = अथवा, तु फाल्गुनस्य = अर्जुनस्य, भवेत् = स्यात्; युधिष्ठिरस्य = धर्मराजस्य

पराजयेन = पराभवेन, कोपितः = क्रुद्ध, आत्मा = हृदयं यस्य सः; पार्थः = अर्जुनः, नूनम् = निश्चयेन, अद्य = अस्मिन् दिवसे, यथाबलम् = स्वशक्त्यनुरूपम्; युद्धम् = रणम्; करिष्यति = विधास्यति ॥ अत्र वसन्ततिलका वृत्तिः ॥ २४ ॥

**समासः**—शङ्खस्य ध्वनिः = शङ्खध्वनिः (ष० तत्०)। प्रलयस्य सागर = (ष० तत्०) तस्य घोषः = प्रलयसागरघोष (ष० तत्०) तेन तुल्यः = प्रलयसागरघोषतुल्यः (तत् पुरुष)। युधिष्ठिरस्य पराजयः = युधिष्ठिरपराजयः (ष० तत्०), कोपितश्चासौ आत्मा = कोपितात्मा (कर्मधा य) युधिष्ठिर-पराजयेन कोपितात्मा यस्य स युधिष्ठिर-पराजय-कोपितात्मा (बहुव्रीहि०) ॥

**कोशः**—शङ्खः स्यात् कम्बुरस्त्रियौ। सवर्तः प्रलय कल्पक्षय कल्पान्त इत्यपि। इत्यमरः। समुद्रोऽब्धिर-कूपार पारावारी सरित्पतिः। उदन्वानुदधिः सिन्धु सरस्वान् सागरोऽर्णः। इत्यमरः ॥

**भावार्थः**—प्रलयसामयिक-सागरशब्द-तुल्यः कस्यचिच्छङ्खध्वनिः श्रूयते; सध्वनिः कृष्णस्य अथवा अर्जुनस्य भवेत्। स्वाग्रज-पराभवेन क्रुद्धात्मा यावच्छक्तिः निश्चयमेव युद्ध करिष्यति ॥ २४ ॥

हिन्दी—

कर्ण—अरे! शब्द सा सुनाई दे रहा है। यह क्या है? यह प्रलयकालीन समुद्र की तरह गम्भीर ध्वनि वाला या तो कृष्ण का शंख है, या अर्जुन का। युधिष्ठिर के पराजय से क्रुद्ध होकर अर्जुन आज अवश्य यथाशक्ति युद्ध मुझसे करेगा ॥ २४ ॥

शल्यराज! जहाँ अर्जुन है मेरे रथ को वहीं ले चलिये।

शल्य—बहुत अच्छा।

(भरत वाक्यम्)

सर्वत्र सम्पद सन्तु नश्यन्तु विपद सदा।
राजा राजगुणोपेतो भूमिमेक प्रशास्तु नः ॥ २५ ॥

अन्वयः—सर्वत्र, सम्पद, सन्तु सदा, विपद, नश्यन्तु।
राजगुणोपेतः, एकः राजा, नः, भूमिम्, प्रशास्तु ॥

व्याख्या:—सर्वत्र = सम्पूर्णे संसारे, सम्पदः = वैभवाः, सन्तु = भवन्तु, सदा = सर्वकाले, विपदः = विपत्तयः; नश्यन्तु = नष्टाः भवन्तु; राजगुणोपेत = नृपगुण-संयुक्तः "दयादाक्षिण्यादिभियुक्त इत्यर्थः" एकः = अद्वितीयः; राजा = नृपतिः, नः = अस्माकम्; भूमिम् = वसुन्धराम्; प्रशास्तु = पालयतु ॥

समासः—राज्ञः गुणः = राजगुणः (ष० तत्) तेनोपेतः राजगुणोपेतः (तृ० तत्)।

कोशः—अथ सम्पदि संपत्तिः श्रीश्च लक्ष्मीश्च। इत्यमरः। विपत्तौ विपदापदौ। इत्यमरः।

राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः इत्यमरः ॥

भावार्थः—अत्र खलु भगवान् भासः स्वनाटकावसाने भरत-वाक्यमर्थात् मङ्गलवाक्यं-प्रयुङ्क्ते सर्वत्रेति। तस्यायं भावः अखिले जगति सम्पत्तयः भवन्तु; विपत्तयो नश्यन्तु सर्वदा; दयादाक्षिण्यादियुक्तः एकाकी सम्राट् एनामस्मद् सम्बन्धिनीं पृथ्वीं रक्षतु ॥ इति शम् ॥ २५ ॥

"जलपुरा" ग्राम-निवासिना श्रीपाह्वेन "वैद्यनाथ"।
शर्म्मणा रचिता "इन्दुकला" नाम्नी टीका सम्पूर्णा ॥

हिन्दी—सम्पूर्ण जगत् में सम्पत्तियाँ हों, हमेशा विपत्तियाँ विनष्ट होती रहें; राजा के समस्त गुणों से युक्त कोई एक राजा हमलोगों की इस पृथ्वी का शासन करे ॥ २५ ॥



कृष्णदास संस्कृत सीरीज

८५

महाकविभासविरचितम्

# ऊरुभङ्गम्

'प्रभा' संस्कृत-हिन्दीव्याख्योपेतम्

व्याख्याकार

डॉ० रामप्रभा ओझा

साहित्यविभागाध्यक्ष

श्रीभागवत-महाविद्यालय, रुस्मी, वाराणसी-५



कृष्णदास अकादमी, वाराणसी

१९८६

# प्राक्कथन

संस्कृत नाटकों के महान् लेखक महाकवि भास ने अपनी कल्पना से महाभारत के प्रसङ्ग-विशेष (भीम द्वारा दुर्योधन का ऊरुभङ्ग) को अपने एकांकी नाटक 'ऊरुभङ्ग' में अत्यन्त आकर्षक ढंग से प्रस्तुत किया है। वस्तुत इस नाटक ग्रन्थ का अध्ययन अध्यापन मात्र साहित्य के छात्र तथा अध्यापकों तक ही सीमित नहीं है, अपितु महाभारत की कथा में अभिरुचि रखने वाले सामान्य जन भी इसे पढ़ने की आकांक्षा रखते हैं। इसका हिन्दी अनुवाद अत्यन्त अपेक्षित था तथा छात्रों के हित में इस ग्रन्थ की सरलतम संस्कृत व्याख्या भी आवश्यक थी, जिसे दृष्टि में रखते हुए मैंने ऊरुभङ्ग का सरल हिन्दी अनुवाद तथा 'प्रभा' नाम्नी संस्कृत टीका की रचना कर आपके समक्ष प्रस्तुत किया है। यद्यपि इसकी अन्य टीकायें भी उपलब्ध हैं, तथापि इस टीका को अत्यन्त सरल एवं स्पष्ट करने का प्रयास किया गया है। इस ग्रन्थ के विभिन्न संस्करणों में उपलब्ध पाठ भेद को फुटनोट द्वारा नीचे दर्शाया गया है तथा आवश्यकतानुसार तत्तद् पाठों की व्याख्या कर प्रसङ्ग के अनुरूप उसकी सङ्गति दिखलाई गई है।

इस कार्य में आदरणीय डॉ० सुधाकर मालवीय जी से निरन्तर प्रोत्साहन उचित निर्देश के साथ-साथ ग्रन्थ की अनुपलब्ध प्रति प्राप्त कराने में विशेष योगदान रहा है। पूज्य गुरुजनों प्रो० रेवाप्रसाद द्विवेदी, प्रो० कैलासपति त्रिपाठी एवं डॉ० श्रीनारायण मिश्र जी द्वारा समय-समय पर महत्वपूर्ण निर्देश प्राप्त होता रहा है। अतः इन सभी विद्वानों का मैं हृदय से आभारी हूँ।

इस लघु नाटक की हिन्दी-संस्कृत टीका की रचना मेरा प्रथम प्रयास है, अत इसमे कुछ त्रुटि हो तो सुधीजन उसे सुधार कर पढें तथा हमे सूचित करें ताकि अग्रिम संस्करणो मे उसे सशोधित किया जा सके।

विद्वानो का स्नेही
डॉ० रामप्रभा ओझा

# भूमिका

## महाकवि भास

संस्कृत साहित्य के नाटककारों में सर्वप्रथम भास का नाम आता है, क्योंकि अन्य नाटककारों के पूर्ववर्ती महाकवि कालिदास ने ससम्मान भास का उल्लेख[1] किया है, जिससे यह स्पष्ट है कि कालिदास की काव्य रचना के समय भास के नाटक अत्यन्त प्रचलित हो चुके थे। महाकवि कालिदास के बाद भी कवियों तथा आलङ्कारिकों ने भास के नाटकों का अत्यन्त सम्मान करते हुए आवश्यकतानुसार अपने ग्रन्थों में उनके श्लोक उद्धृत किये हैं। भास के सम्बन्ध में महाकवि बाणभट्ट ने हर्ष चरित में कहा है "सूत्रधार से *आरम्भ किये गये, बहुत भूमिका वाले तथा पताका से सुशोभित मन्दिरों* की तरह, अपने नाटकों से भास ने *बहुत यश प्राप्त किया*[2]। काव्यमीमांसा के रचयिता राजशेखर ने भास के नाटकचक्र का उल्लेख करते हुए उनके नाटकों की अग्निपरीक्षा तथा "स्वप्नवासवदत्तम्" की उत्कृष्टता बतलायी है[3]। आचार्य बलदेव उपाध्याय जी के अनुसार दशम शती के आरम्भ में राजशेखर द्वारा भास के एक नाटक के नाम का प्रथमतः उल्लेख किया गया है जो बहुत महत्त्वपूर्ण है[4]।

---

१. प्रथितयशसां भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः ( मालविकाग्निमित्रम् )

२. सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ( हर्षचरितम् )

३. भासनाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥

४. संस्कृत साहित्य का इतिहास।

मस्य भीमसेनस्य भ्रातृशतवधक्रुद्धस्य महाराजदुर्योधनस्य च द्वैपायनहलायुधकृष्णविदुरप्रमुखाना कुरुयदुकुलदैवताना प्रत्यक्षं प्रवृत्त गदायुद्धम् ।

द्वितीयः—

भीमस्योरसि चारु¹काञ्चनशिलापीने प्रतिस्फालिते
भिन्ने वासवहस्तिहस्तकठिने दुर्योधनासस्थले ।
अन्योऽन्यस्य भुजद्वयान्तरतटेष्वासज्यमानायुधे
यस्मिश्चण्डगदाभिघातजनित शब्द समुत्तिष्ठति ।। १६ ।।

---

खल्विति । एतत् = पुरोदृश्यमानम्, खल्विति वाक्यसयोजनसौन्दर्ये । द्रौपद्या = पाञ्चाल्या केशाना = वेणीना घर्षणेन = बलादाकर्षणेन अवमर्षितस्य = कुपितस्य पाण्डवमध्यमस्य भीमसेनस्य = वृकोदरस्य भ्रातृशतवधक्रुद्धस्य— भ्रातृणा = दु शासनादीना शतसख्यकाना भ्रातृणा वधेन = समरे हतेन क्रुद्धस्य = अवमर्षितस्य महाराजदुर्योधनस्य = कौरवाधिपस्य द्वैपायन = व्यास हलायुध. = बलराम कृष्ण = माधव विदुरश्च एतेषा प्रमुखाना कुरुयदुकुलदैवतानाम्—कुरुयदुकुलयो = कुरुयदुवशयो दैवतानाम् = पूज्याना प्रत्यक्षम् = समक्ष प्रवृत्तम् = आरब्ध गदायुद्धम् । द्वितीय —भीमस्येति ।

अन्वयः—चारुकाञ्चनशिलापीने उरसि भीमस्य प्रतिस्फालिते वासवहस्तिहस्तकठिने दुर्योधनासस्थले भिन्ने अन्योऽन्यस्य भुजद्वयान्तरतटेषु आसज्यमानायुधे यस्मिन् चण्डगदाभिघातजनित शब्द समुत्तिष्ठति ।। १६ ।।

व्याख्या—चारुकाञ्चनशिलापीने—चारु = शोभना 'तप्त' इति पाठे सति तप्त = अग्नौ शोधिता काञ्चनशिला = सुवर्णशिला इव पीने = पीवरे

---

भीमसेन तथा सौ भाईयो के वध से अत्यन्त क्रुद्ध हुए महाराज दुर्योधन के पूज्य जनो व्यास, बलराम, कृष्ण, विदुर, जो यदुकुल तथा कुरुकुल के दैवतरूप हैं के समक्ष परस्पर गदायुद्ध हो रहा है ।

दूसरा—अग्नि मे तपाये गये अत्यन्त उज्ज्वल सुवर्णशिला की भाँति भीमसेन के विशाल वक्ष स्थल पर हुए प्रहार तथा इन्द्र के ऐरावत हाथी के

---

१ 'तप्त' इति पाठान्तरम्

तृतीयः—एष महाराज,
शीर्षोत्कम्पनवल्गमानमुकुट क्रोधाग्निकाक्षानन:
स्थानाक्रामणवामनीकृततनु प्रत्यग्रहस्तोच्छ्रय ।
यस्यैषा रिपुशोणिताद्रकलिला भात्यग्रहस्ते गदा
कैलासस्य गिरेरिवाग्ररचिता सोल्का महेन्द्राशनि ॥१७॥

---

भीमस्य=मध्यमपाण्डवस्य प्रतिस्फालिते=प्रताडिते वासवहस्तिहस्तकठिने—वासवस्य=इन्द्रस्य, हस्तिन:=गजस्यैरावतस्य य ह॰त=शुण्डादण्ड तद्वत्कठिने दुर्योधनासस्थले दुर्योधनस्य असस्थले=स्कन्धदेशे भिन्ने=भीमगदया प्रताडिते सति अन्योऽन्यस्य=परस्परस्य भुजद्वयान्तरतटेषु—भुजद्वयस्य=बाहुयुगलस्य अन्तरतटेषु=मध्यभागेषु आसज्यमानायुधे—आसज्यमानानि=प्रहृतानि आयुधानि=अस्त्राणि यत्र तस्मिन्, यस्मिन्=गदायुद्धे चण्डगदाभिघातजनित=प्रचण्डश्चासौ गदाभिघातजनित=समुद्भूत शब्द=घोरशब्द समुत्तिष्ठति=सर्वा दिश व्याप्नोतीत्यर्थ ॥ १६ ॥

*अन्वय*—*यस्य रिपुशोणिताद्रकलिला एषा गदा अग्रहस्ते कैलासस्य* गिरे. अग्ररचिता सोल्का महेन्द्राशनि इव भाति (सोऽयम्) शीर्षोत्कम्पनवल्गमानमुकुट क्रोधाग्निकाक्षानन स्थानाक्रामणवामनीकृततनु प्रत्यग्रहस्तोच्छ्रय (अस्तीति) ॥ १७ ॥

व्याख्या—यस्य=राज्ञो दुर्योधनस्य रिपुशोणिताद्रकलिला-रिपु=शत्रु: भीम, तस्य शोणितेन=रक्तेन, आर्द्रकलिला=तरलत्वव्याप्ता एषा=पुरोदृश्यमाना गदा अग्रहस्ते=हस्तस्याग्रभागे कैलासस्य—कैलासाख्यस्य गिरे=

---

सूँड के समान अति कठोर दुर्योधन के कधे पर हुए प्रहार के कारण इन दोनों के परस्पर भुजाओ के मध्य प्रचण्ड गदा के आघात से होने वाला शब्द दिशाओ मे फैल रहा है ॥ १६ ॥

तीसरा—यह महाराज (दुर्योधन), जिसका मुकुट शिर के कम्पित होने से चञ्चल है, क्रोध के कारण रक्त नेत्र धधकती अग्नि के समान है, युद्ध मे शत्रु के प्रहार से बचने के लिए इधर उधर चलते हुए अपने शरीर को संकुचित करते हैं, तथा भीम के रक्त से रञ्जित गदा को दाहिने हाथ से

प्रथम —एष सप्रहाररुधिरसिक्ताङ्गस्तावद् दृश्यतां पाण्डव ।
निर्भिन्नाग्रललाटवान्तरुधिरो भग्नांसकूटद्वयः
सान्द्रैर्निर्गलितै प्रहाररुधिरैरार्द्रीकृतोर स्थल ।
भीमो भाति गदाभिघातरुधिरक्लिन्नावगाढव्रण
शैलो मेरुरिवैष धातुसलिलासारोपदिग्धोपल ॥ १८ ॥

---

पर्वतस्य अग्ररचिता सोल्का = उल्कया सहिता महेन्द्राशनि —महेन्द्रस्य = इन्द्रस्य अशनि. = वज्र इव भाति = सुशोभते (स) = (दुर्योधनः) शीर्षोत्कम्पनवल्गमानमुकुट —शीर्षस्य = मूर्ध्नं कम्पनेन वल्गमानम् = प्रस्खलनमवाप्तम् मुकुटम् = मूर्द्धज क्रोधाग्निकाक्षानन —क्रोधाग्निना = कोपवह्निना काक्षानन = विस्तृतवदन स्थानाक्रामणवामनीकृततनु — स्थानाय आक्रमणं तस्मै वामनीकृता = लघुकृता तनु सन् प्रत्यग्रहस्तोच्छ्रय प्रत्यग्रे = तत्क्षणे एव हस्त = बाहु उच्छ्रय. = ऊर्ध्वीकृत (अस्तीति) शेष । शार्दूलविक्रीडितम् वृत्तम् ॥ १७ ॥

**प्रथम एष इति ।** एष सम्प्रहाररुधिरसिक्ताङ्ग —सम्प्रहारेण = शस्त्रप्रहारेण नि सृतरुधिरेण = रक्तेन सिक्ताङ्ग —सिक्तानि आर्द्राणि अङ्गानि यस्य सः एतादृश पाण्डव = भीम दृश्यताम् = अवलोक्यताम् ।

**अन्वय** — निर्भिन्नाग्रललाटवान्तरुधिर भग्नांसकूटद्वय सान्द्रै. निर्गलितै प्रहाररुधिरैं आर्द्रीकृतोर स्थल गदाभिघातरुधिरक्लिन्नावगाढव्रण एष भीम धातुसलिलासारोपदिग्धोपल मेरु शैल इव भाति ॥ १८ ॥

---

बार बार ऊपर उठाता हुआ ऐसा प्रतीत हो रहा है, मानो कैलास पर्वत के अग्रभाग से रचित इन्द्र का चमकता हुआ वज्र ही सुशोभित हो रहा हो ॥ १७ ॥

पहला—गदाप्रहार के कारण खून से लथपथ शरीर वाले मध्यमपाण्डव भीमसेन को देखें—

गदाप्रहार के कारण जिसके फटे मस्तक से रक्त निकल रहा है तथा दोनो स्कन्ध टूट गये हैं, भीषण शस्त्राघात से बहते हुए रुधिर से जिसका वक्ष स्थल आर्द्र हो गया है एव गदा के प्रचण्ड प्रहार से चलते हुए रुधिर से

---

१. निर्गलितेत्यन्यत्र पाठ

द्वितीय—भीमा गदां क्षिपति गर्जति वल्गमानः
शीघ्रं भुजं हरति तस्य कृतं भिनत्ति ।
चारीं गतिं प्रचरति प्रहरत्यभीक्ष्णं
शिक्षा'न्वितो नरपतिर्बलवांस्तु भीमः ॥ १९ ॥

---

व्याख्या—निर्भिन्नाग्रल्लाटवान्तरुधिर—निर्भिन्नम् = विदीर्णम् अर्थात् गदाप्रहारेण प्रस्फुटितम् अग्रम् = पुरोभागो यस्य तादृशं यल्ललाटम् = मस्तकं तस्माद् वान्तम् = उद्गीर्णं रुधिरं यस्य स, भग्नांसकूटद्वय = भग्नौ एकत्रावेव कूटमङ्गे रिव यस्य स, सान्द्रे = निबिडे, निर्गलिते = निःसृते, प्रहाररुधिरे = गदाप्रहारजनितरक्ते, आर्द्रीकृतम् अत एव शोणमिश्रितं वक्षःस्थलं यस्य सः गदाभिघातरुधिरक्लिन्नावगाढव्रण—गदाघातेन = गदाप्रहारेण निःसृतेन रुधिरेण = रक्तेन क्लिन्ना = पार्द्रा अवगाढा = व्याप्ता व्रणा यस्य स, एष = युद्धासक्तः पुरोदृश्यमानः भीमः = वृकोदरः धातुसलिलासारोपदिग्धोपल—धातूनाम्—पर्वतीयधातुगैरिकादीनां, सलिलासारे = जलप्रवाहे उपदिग्धा = समभ्याप्ताः उपला = प्रस्तरा यस्य स मेरु = मेरुनामा शैल = पर्वत इव भाति = सुशोभत इति । अत्र पर्वतवृकोदरयोरुपमानोपमेयदर्शनादुपमालङ्कारः । वृत्तञ्च शार्दूलविक्रीडितम् ॥ १८ ॥

भीमेति । अन्वय—नरपतिः भीमां गदां क्षिपति वल्गमानः (सन्) गर्जति शीघ्रं भुजं हरति तस्य कृतं भिनत्ति अभीक्ष्णं प्रहरति चारीं गतिं प्रचरति शिक्षान्वितः भीमः तु बलवान् ॥ १९ ॥

व्याख्या—नरपतिः = राजा दुर्योधनः भीमाम् = भयमुत्पादिकां गदाख्यमस्त्रं क्षिपति = भीमस्योपरि चालयति वल्गमानः = उच्छलन् सन् गर्जति =

---

जिसका घाव भीगा हुआ है इस अवस्था में भीमसेन गैरिक आदि धातुओं से मिश्रित बहते हुए जलधारा युक्त सुमेरु गिरि के समान सुशोभित हो रहा है ।। १८ ।।

दूसरा—राजा दुर्योधन भयङ्कर गदा भीम पर चलाता है छलाग लगाते हुए गरजता है, भीम के द्वारा किये गये गदा प्रहार को काटता हुआ

---

१. "सविशिक्षितो" इति पाठान्तरम् ।

तृतीय —एष वृकोदर.,

शिरसि गुरुनिखातस्रस्तरक्तार्द्रगात्रो
धरणिधरनिकाश. सयुगेष्वप्रमेय ।
प्रविशति गिरिराजो मेदिनों वज्रदग्ध
शिथिलविसृतधातुर्हेमकूटो यथाद्रि ॥ २० ॥

---

गर्जना करोति शीघ्रम्=झटिति भुजम्=बाहु हरति=आकर्षति, भीमस्य गदाप्रहारादात्मान रक्षितु स्वबाहुमाकर्षति। तस्य=प्रतियोद्धारस्य भीमसेनस्य कृतम्=प्रयास भिनत्ति=निष्फल करोति अभीक्ष्णम्=मुहुर्मुहु प्रहरति=प्रहार करोति एव गदायुद्धे कुशलोऽस्ति तथापि भीम =मध्यमपाण्डव तु बलवान्=दुर्योधनाद् बलिष्ठोऽस्ति इति ॥ १९ ॥

अन्वय —शिरसि गुरुनिखातस्रस्तरक्तार्द्र गात्र धरणिधरनिकाश सयुगेषु अप्रमेय शिथिलविसृतधातु वज्रदग्ध हेमकूट अद्रि यथा मेदिनी प्रविशति ॥ २० ॥

व्याख्या—शिरसि=मस्तके गुरुनिखातस्रस्तरक्तार्द्र गात्र'-गुरुनिखात =अत्यधिकाघात स्रस्तेन=निर्गलितेन रक्तेन=शोणितेन, आर्द्राणि=क्लिन्नानि गात्राणि=शरीराणि, यस्य स , धरणिधरनिकाश -धरणिधर =पर्वत तन्निकाश =तुल्य , सयुगेषु=सङ्ग्रामेषु अप्रमेय =अनुपमपराक्रमयुक्त भीम इति गद्यांशेन सम्बद्ध्यते । शिथिलविसृतधातु —शिथिला =छिन्नसन्धय यद्वशाद् विसृता =प्रकीर्णा धातव =गैरिकादय तथाविध , वज्रदग्ध.—

---

उससे बचने के लिए अपनी भुजा को खींच लेता है । चारों गति से चलता हुआ बार-बार प्रहार कर रहा है, इस प्रकार महाराज दुर्योधन गदायुद्ध में निपुण तो है, किन्तु भीम अधिक बल वाला है ॥ १९ ॥

तीसरा—यह भीमसेन—

सिर मे गम्भीर चोट लगने के कारण बहते हुए रक्त से जिसका शरीर आर्द्र हो गया है, अतुल बल वाला जो पर्वत की भाँति दीख रहा है गैरिकादि धातुशिला से युक्त फटे हुए सुमेरुपर्वत के समान (असह्य आघात) से पृथ्वी पर गिर रहा है ॥ २० ॥

प्रथम —एष गाढप्रहारशिथिलीकृताङ्ग निपतन्त भीमसेन दृष्ट्वा,
एकाग्राङगुलिधारितोन्नतमुखो व्यास स्थितो विस्मित
द्वितीय —
दैन्य याति युधिष्ठिरोऽत्र विदुरो बाष्पाकुलाक्ष स्थित ।
तृतीय —
स्पृष्ट गाण्डिवमर्जुनेन गगन कृष्ण समुद्वीक्षते

---

वज्रेण = अशनिना दग्ध = प्रज्वलित हेमकूट. = सुमेरु अद्रि = पर्वत इव मेदिनीम् = मही प्रविशति = निपतति गदाघातेन व्यथातिरेकात् पृथिव्या पतति भीमसेन इति सभाव्यत इति भाव ॥ २० ॥

प्रथम इति । 'एष' इत्यस्य अग्रिमेन "व्यास" इति कर्त्रा सम्बन्ध । गाढप्रहारशिथिलीकृताङ्गम्—गाढप्रहारेण = गुरुणाघातेन शिथिलानि कृतानि अङ्गानि यस्य त निपतन्त = भूमौ पतन्त भीमसेन दृष्ट्वा = वीक्ष्य—

अन्वय —एकाग्राङगुलिधारितोन्नतमुख व्यास विस्मित स्थित ।

व्याख्या —एकाग्राङ्गुलिधारितोन्नतमुख —एका अग्राङ्गुलि धारिता = न्यस्ता यत्र तदेकाग्राङ्गुलिधारित तच्च तादृश मुखम् = आस्य यस्य स व्यास = द्वैपायन विस्मित = आश्चर्यान्वित सन् स्थित = स्तब्ध ।

अन्वय —अत्र युधिष्ठिर दैन्य याति बाष्पाकुलाक्ष विदुर स्थित ।

अत्र = समराङ्गणे निपतन्त भीमसेन दृष्ट्वेति गद्यांशेन सम्बन्ध, युधिष्ठिर = धर्मपुत्र दैन्यम् = दीनता याति = अधिगच्छति, बाष्पाकुलाक्ष = अश्रुपूरितनेत्र विदुर स्थित ॥

अन्वय.—अर्जुनेन गाण्डिव स्पृष्टम्, कृष्ण गगन समुद्वीक्ष्यते ।

---

पहला—भीषण प्रहार की चोट से शिथिल शरीर वाले भीम को गिरते हुए देखकर मुख पर अंगुली रखे हुए भगवान् व्यास अपने सिर को ऊपर उठाये आश्चर्यचकित होकर खडे हो गये ।

दूसरा—युधिष्ठिर दीन हो रहे हैं तथा अश्रुपूरित नेत्रो वाले विदुर खडे हैं ।

तीसरा—अर्जुन अपने हाथो से गाण्डीव थाम लिए हैं और श्रीकृष्ण

सर्वे—

शिष्यप्रीतितया हल भ्रमयते रामो रणप्रेक्षक ॥ २१ ॥

प्रथम.—एप महाराज,

वीर्यालयो विविधरत्नविचित्रमौलि-
युंक्तोऽभिमानविनयद्युतिसाहसैश्च ।
वाक्य वदत्युपहसन्न तु भीम ! दीन
वीरो निहन्ति समरेपु भय त्यजेति ॥ २२ ॥

---

व्याख्या—अर्जुनेन = गाण्डिविना गाण्डिवम् = स्वीय धनु, स्पृष्टम् = किञ्चिदुन्नमितम्, कृष्ण = माधव गगनम् = आकाश समुद्वीक्षते = पश्यति ।

अन्वय--रणप्रेक्षक राम शिष्यप्रीतितया हल भ्रमयते ।

व्याख्या—रणप्रेक्षक = दुर्योधनवृकोदरयो गदायुद्धस्य द्रष्टा राम = बलराम शिष्यप्रीतितया—शिष्यम् = दुर्योधन प्रति प्रीतितया = स्नेहतया हलम् = स्वकीयमस्त्र भ्रमयते = घूर्णयत इति ॥ २१ ॥

अन्वय —वीर्यालय विविधरत्नविचित्रमौलि अभिमानविनयद्युतिसाहसै. च युक्त (एप महाराज) उपहसन् वाक्य वदति, भीम ! वीर समरेपु दीन न तु निहन्ति (अत) भय त्यज ॥ २२ ॥

व्याख्या—वीर्यालय = महान् पराक्रमी विविधरत्नविचित्रमौलि — विविधरत्नै = नानाप्रकारैर्मणिभि विचित्र = अलङ्कृत मौलि = मुकुटो यस्य तादृश अभिमानविनयद्युतिसाहसै –अभिमान = गर्व विनय = विनम्रता

---

आकाश की ओर देख रहे हैं ॥ २१ ॥

सभी—सङ्ग्रामदर्शक बलराम अपने शिष्य (दुर्योधन) मे अत्यधिक स्नेह होने के कारण हल को घुमा रहे है ।

पहला—यह महाराज (दुर्योधन)—

महान् बलशाली विविध मणियो से मण्डित मुकुट वाला, स्वाभिमान, विनय, तेज और बल से परिपूर्ण हँसता हुआ भीम से कह रहा है—वीर, समरभूमि मे दैन्यभाव प्राप्त योद्धा को नही मारते हैं अत भय छोडो और (पुन लडने के लिए तैयार हो जाओ) ॥ २२ ॥

द्वितीय —एष इदानीमुपहास्यमान भीमसेन दृष्ट्वा स्वमूरुम-भिहत्य कामपि सज्ञा प्रयच्छति जनार्दन ।

तृतीय —एष सज्ञया समाश्वासितो मारुति,
सहृत्य भ्रुकुटीं ललाटविवरे स्वेद करेणाक्षिपन्
बाहुभ्या परिगृह्य भीमवदनश्चित्राङ्गदा स्वा गदाम् ।

---

द्युति =ओज साहसम्=दृढत्वम् एतेषा समाहार अत एतैरभिमानादिभि युक्त =भूषित (एष महाराज =दुर्योधन ) उपहसन्=उपहास कुर्वन् वाक्य वदति=वक्तव्य कथयति—हे भीम ! वीर =शूर समरेषु=रणस्थलेषु दीनम्=आपद्ग्रस्त प्रतियोद्धार न तु=नैव निहन्ति=मारयति (अत ) भयम्=मत्प्रयुक्त नाशत्रभीति त्यज=जहीहि । सर्वथा नि शङ्क सन् पुन सङ्ग्रामाय स नद्धो भव इति भाव । वसन्ततिलका ॥ २२ ॥

द्वितीय इति । इदानीम्=साम्प्रतम् उपहास्यमानम्=दुर्योधनेनोपहसित भीमसेनम्=मध्यमपाण्डव दृष्ट्वा=अवलोक्य स्वमूरुम्=स्वकीया जङ्घाम्, अभिहत्य=सताडय कामपि सज्ञाम्=किञ्चिद्गुह्य प्रयच्छति=सङ्केतयति जनार्दन =श्रीकृष्ण ।

तृतीय इति । एष मारुति =अय मरुत्सुतो भीम सज्ञया=श्रीकृष्णस्य गुह्यसङ्केतेन समाश्वासित =धैर्यमुत्पादित ।

अन्वय —भ्रुकुटी सहृत्य ललाटविवरे करेण स्वेदम् आक्षिपन् चित्रा-ङ्गदा स्वा गदा बाहुभ्या परिगृह्य दीन पुत्रम् उदीक्ष्य सर्वगतिना दत्त बल लब्ध्वा इव गर्जन् सिंहवृपेक्षण भीमवदन एष मारुति भूय क्षितितलात्

---

दूसरा—गदा के आघात से उपहास योग्य हुए भीमसेन को देखकर भगवान् श्रीकृष्ण अपनी जाङ्घ को थपथपाते हुए (दुर्योधन को मारने के लिए) सङ्केत कर रहे हैं।

तीसरा—इस सङ्केत से भीम आश्वस्त हो गया है। अपनी भृकुटियों को समेट कर ललाट पर स्थित पसीनों को पोछ कर, अपनी चित्राङ्गदा नामक गदा को बाहुओं मे सभाले दीन पुत्र को देखने वाले मानो पवन

भ्रान्तं करपञ्जरान्तरगतो द्वैपायनज्ञापितो
भीमः कृष्णभुजावलम्बितगतिर्निर्वाह्यते पाण्डवैः ॥ २५ ॥
प्रथमः—अये अयमप्यमर्षोन्मीलितरभसलोचनो भीमसेनापक्रमण-
मुद्वीक्षमाण इत एवाभिवर्तते भगवान् हलायुधः । य एष,
चल¹विलुलितमौलिः क्रोधताम्रायताक्षो
भ्रमरमुखविदष्टां किंचिदुत्कृष्य मालाम् ।

गतः कृष्णकरावलम्बितगतिः भीमः निर्वाह्यते ॥ २५ ॥

व्याख्या—मालासहृतलोचनेन—मालया हेला' इति पाठे तु छलेन दुर्योधनस्य हननभूता या हेला=अवज्ञा तया सवृते=आवृते लोचने=नयने यस्य तेन हलिना=हलधरेण बलरामेण नेत्रोपरोधः कृतः=नेत्रसवरण विहितम् । दुर्योधनापेक्षया—दुर्योधनस्य=कुरुराजस्य पक्षपातानुरोधेन क्रोध निमिलितम्-क्रोधेन=कोपेन निमिञ्चितम्=सङ्कुचितदेह हलधरम्=बलभद्र दृष्ट्वा=वीक्ष्य, सम्भ्रान्तं=सम्भ्रमप्राप्तै पाण्डवैः=पाण्डुपुत्रैः द्वैपायन ज्ञापितः—द्वैपायनेन=भगवता व्यासेन, ज्ञापितः=सङ्केतितः करपञ्जर गतः=हस्तमध्यगतः कृष्णकरावलम्बितगतिः=कृष्णस्य कराभ्याम् अव-लम्बिता भासाभ्या गतिः=दशा यस्य स भीमः निर्वाह्यते=सरक्ष्यते अर्थात् रक्षितुम् इतस्ततो नीयते ॥ २५ ॥

प्रथमः—अयमपीति । अमर्षेण=क्रोधेन उन्मीलिते=ऊर्ध्वं मीलिते रभसलोचने=उद्विग्ननयने यस्य सः भगवान् हलायुधः=बलदेवः भीमसेना पक्रमणम्-भीमसेनस्य अपक्रमणम्=निगमनम् उद्वीक्षमाणः=प्रतीक्षमाण सन् इत एव अभिवर्तते=प्रत्यावर्तते ।

अन्वयः—चलविलुलितमौलिः क्रोधताम्रायताक्षः भ्रमरमुखविदष्टां

आश्रित स्थिति वाले भीम को अपनी भुजाओं मे सुरक्षित रख लिया है ॥२५॥

पहला—अरे ! अत्यधिक क्रोध के कारण सङ्कुचित नेत्रो वाले भगवान् हलायुध भीम के निकलने की प्रतीक्षा में इधर उधर देखते हुए इधर ही आ रहे हैं । जो —

१ 'प्रचललुलितमौलिरि' त्यपि पाठः ।

अचिततनुविलम्बिस्रस्तवस्त्रानुकर्षी
क्षितितलमवतीर्णः पारिवेषीव चन्द्रः ॥ २६ ॥

द्वितीयः—तदागम्यतां वयमपि तावन्महाराजस्य प्रत्यनन्तरीभवामः।

उभौ—बाढम्। प्रथमः कल्पः।

---

मालां किञ्चित् उत्कृष्य असिततनुविलम्बिस्रस्तवस्त्रानुकर्षी पारिवेषी क्षिति-तलम् अवतीर्णः चन्द्र इव ॥ २६ ॥

व्याख्या—चलितचतुरमौलिः—चलः=चञ्चलः चितुरितः=कम्पाय-मानः मौलिः=मुकुटः प्रचलचलितमौलिरिति पाठे सति चञ्चलोऽयं च ललितः=सुन्दरो मौलिः=मुकुटो यस्य सः कोधताम्रायताक्षः—क्रोधेन=कोपेन ताम्रे=रक्तवर्णे अथ च आयते=विस्फारिते अक्षिणी=नेत्रे यस्य सः, भ्रमरमुखरविरुताम्—भ्रमराणाम्=मधुकराणां मुखैः=अस्यैः विरुताम्=ध्वनैः सम्मिलिताम् मालाम्=स्रजाम् उत्कृष्य=स्तोकमाकृष्य, असिततनुवि-लम्बिस्रस्तवस्त्रानुकर्षी—असितम्=नीलमय च तनुविलम्बि=शरीरे लम्बमानं स्रस्तम्=स्वस्थानात् स्खलितं यद् वस्त्रम्=वासः तस्यानुकर्षी=आकृ-ष्यकः परिवेष=वृत्तपरिधि स चास्यास्तीति पारिवेषी=मण्डलसहितः, क्षितितलम्=भूभागम् अवतीर्णः=प्राप्तः चन्द्र इवावलोक्यत इति शेषः। उत्प्रेक्षालङ्कारः मालिनी च वृत्तम् ॥ २६ ॥

द्वितीयः—महाराजस्य=दुर्योधनस्य प्रत्यनन्तरीभवाम=समीपं गच्छाम इति।

---

चञ्चल एवं सुन्दर मुकुट वाले, क्रोध से रक्तरञ्जित नेत्रों वाले भ्रमरों से आच्छादित माला को पहने हुए, नीले वर्ण एवं शिथिल वस्त्रों को संभालते हुए मानों पृथिवी पर उतरे मण्डलाकार चन्द्रमा के समान प्रतीत हो रहा है ॥ २६ ॥

दूसरा—तब आओ, हमलोग भी महाराज (दुर्योधन) के पास चलें।

दोनों—अच्छा! यह तो उचित ही है।

( नेपथ्ये )

प्रसीदतु प्रसीदतु भगवान् हलायुध ।

बलदेव —अये एवगतोऽप्यनुगच्छति मा तपस्वी दुर्योधन । य एप,

श्रीमान् सयुगचन्दनेन रुधिरेणार्द्रानुलिप्तच्छवि-
भू ससर्पणरेणुपाटलभुजो बालव्रत ग्राहित ।

---

च्छिष्टम्=अवशिष्ट स्पृष्ट वा मुख येन तम्, महासुरपुरप्राकारकूटाङकुशम्—महासुर =शाल्व तस्य पुरस्य =नगरस्य यत् प्राकारकूटम्=वप्रशृङ्खला तस्य अङ्कुशम्, कालिन्दीजलदेशिकम्—कालिन्द्या =यमुनाया जलस्य=जलप्रवाहस्य देशिकम्=पथप्रदर्शकम्, रिपुबलप्राणोपहारार्चितम्—रिपूणाम् =अरीणा बलम्=सैन्यशक्तिस्तस्य प्राणा =असव एवोपहार =उपायनम् यस्य तेन अर्चितम्=समादृत हस्तोत्क्षिप्तहलम्—हस्तेन=करेण उत्क्षिप्तम =उद्धृतम् हलम्=सीर, भीमस्य=मध्यमपाण्डवस्य विपुले=विशाले उरसि=वक्ष स्थले, अद्य यावत्=साम्प्रत रुधिरस्वेदार्द्रपङ्कोत्तरम्—रुधिरम् =रक्तम्, स्वेदश्च=स्वेदकण ताभ्यामार्द्र =तरलै अतएव पङ्क =पङ्किल तेनोत्तर तादृश हल पाकोत्तरे इति पाठे रुधिरमेव स्वेद स एवार्द्रपङ्क सद्यस्क कर्दम तेन उत्तरे तद्युक्ते केदारमार्गाकुलम्—केदारमार्ग=क्षेत्र वर्त्मनि आकुलम्=व्याप्त करोमि=विदधे इति ।। २८ ।।

बलदेव—'अये' इति विस्मयास्पद सम्बोधनम् । एवङ्गतोऽपि=ऊरुभग्ने सत्यपि सभाजयितु माम् अनुगच्छति=अनुसरतीत्यर्थ ।

अन्वय —सयुगचन्दनेन रुधिरेण आर्द्रानुलिप्तच्छवि श्रीमान् भूससर्पणरेणु-पाटलभुज बालव्रत ग्राहित अमृतमन्थने निर्वृत्ते सासुरै क्षितिधरात् मुक्त

---

(नेपथ्य मे) भगवान् बलदेव प्रसन्न होवें, प्रसन्न हो ।

वलदेव—इस दशा मे भी तपस्वी दुर्योधन मेरा अनुसरण करता है । जो यह—

युद्ध मे रक्त चन्दन रूप रुधिर से अनुलिप्त आर्द्र अङ्गो वाला, समरभूमि

निर्वृत्तेऽमृतमन्थने क्षितिधरान्मुक्तः सुरैः सासुरै-
राकर्षन्निव भोगमर्णवजले श्रान्तोज्झितो वासुकि ॥ २९ ॥

( ततः प्रविशति भग्नोरुयुगलो दुर्योधनः । )

दुर्योधन—एष भोः !

---

श्रान्तोज्झितः अर्णवजले भोगम् आकर्षन् वासुकिः इव ॥ २९ ॥

व्याख्या—सघृणचन्दनेन—सघृणे=समरे, चन्दनेन=मलयजरसेन तद्रू-पिणा रक्तेन=शोणितेन, आर्द्रानुलिप्तच्छविः=सद्यः प्रसृतेन शोणितेन सरलेनानुलिप्ता=व्याप्ता छविः=शोभा यस्य सः श्रीमान्=शोभा-सम्पन्नो दुर्योधनः साञ्जनम्, भूसंसर्पणरेणुपाटलभुजः—भुवि=पृथिव्या ससर्पणेन=रिङ्खणेन यो रेणुः=रजः तेन पाटलौ=धूसरितौ भुजौ=बाहू यस्य सः भूसंसर्पणरेणुपाटलभुजः सन् बालगमनम्—बालानां=शिशूनां गमनम्=चेष्टा आहितः=सम्प्राप्तः, अतएव अमृतमन्थने=सुधाविलोडने निर्वृत्ते=परिपूर्णे सासुरैः=दैत्यैः सह सुरैः=देवैः क्षितिधरात्=मन्दरगिरेः मुक्तः=विमुक्तः श्रान्तोज्झितः—श्रान्तः=क्लान्तः, अथ च उज्झितः=परित्यक्तः अर्णवजले=समुद्रजले भोगम्=स्वशरीरम् आकर्षन्=आलिखन् वासुकिः=नागराज इव=सदृशः सुशोभत इति भावः ॥ २९ ॥

तत इति—प्रविशति=रङ्गभूमिमागच्छति, भग्नोरुयुगलः—भग्नः=गदाघातेन त्रुटितम् उरुयुगलम्=जङ्घाद्वयं यस्य स दुर्योधन =कौरवेश्वरः ।

दुर्योधन.—'एष भोः' इति । एष=दुर्योधनोऽहमित्यस्याग्रिमश्लोकेन "भीमेन भित्त्वे"त्यादिनान्वयः ।

---

में गिरकर भी चलने के कारण धूलधूसरित भुजाओं वाला पृथ्वी पर रेंगने वाले शिशुओं की भाँति प्रतीत हो रहा है । तथा समुद्र मन्थन के अनन्तर असुरों तथा देवताओं द्वारा मुक्त मन्दराचल से खींचकर जल में अपने परिश्रान्त शरीर को सरकाते हुए सर्पराज वासुकि की तरह सुशोभित हो रहा है ॥ २९ ॥

( इसके बाद भग्न जङ्घों वाला दुर्योधन प्रवेश करता है )

दुर्योधन—अरे ! यह मैं—

भीमेन भित्त्वा समयव्यवस्थां गदाभिघात[1]क्षतजर्जरोरुः ।
भूमौ भुजाभ्यां परिकृष्यमाणः स्वं देहमर्धोपरतं वहामि ॥ ३० ॥
प्रसीदतु प्रसीदतु भगवान् हलायुधः ।
त्वत्पादयोर्निपतितं पतितस्य भूमा—
वेतच्छिरः प्रथममद्य विमुञ्च रोषम् ।
जीवन्तु ते कुरुकुलस्य निवापमेघा
वैरं च विग्रहकथाश्च वयं च नष्टाः ॥ ३१ ॥

---

अन्वय.—भीमेन समयव्यवस्था भित्त्वा गदाभिघातक्षतजर्जरोरुः भूमौ भुजाभ्या परिकृष्यमाण स्वम् अर्धोपरतं देह वहामि ॥ ३० ॥

व्याख्या—भीमेन=वृकोदरेण समयव्यवस्थाम्=साम्प्रतिकव्यवस्था—रणनीतिमित्यर्थः भित्त्वा=समुपेक्ष्य गदाभिघातक्षतजर्जरोरु.—गदायाः अभिघातेन=प्रहारेण निपातेनेति पाठे निपातेन=प्रक्षेपेणेति समान्येवार्थः जर्जरोरुः जर्जरित.=विनष्टः ऊरु यस्य सोऽहं दुर्योधन. भूमौ=क्षितौ भुजाभ्याम्=बाहुभ्यां परिकृष्यमाणम्=समाकृष्यमाण स्वम्=आत्मानम्, अर्धोपरत=अर्धमृतम् देहम्—शरीर वहामि=धारयामि अन्यत्र वा सञ्चालयामीति ॥ उपजातिवृत्तम् ॥ ३० ॥

अन्वय.—भूमौ पतितस्य त्वत्पादयोः निपतितम् एतत् शिरः अद्य प्रथमं रोष विमुञ्च ते कुरुकुलस्य निवापमेघा जीवन्तु वैरं च विग्रहकथाः च वयं च नष्टा. ॥ ३१ ॥

---

युद्ध सम्बन्धी नियमो की उपेक्षा कर भीमसेन के द्वारा किये गये गदा-प्रहार से भग्न ऊरु वाला अपनी भुजाओ से भूमि पर घसीटता हुआ अपने अधमरे शरीर को ढो रहा हूँ ॥ ३० ॥

प्रसन्न होवें भगवान् हलायुध ।

समर भूमि मे गिरा हुआ मेरा शिर तथा मेरी दोनो भुजायें आपके चरणो पर पडे हैं, प्रथमत. आप क्रोध का त्याग करें, जिससे कौरवकुल को जलाञ्जलि देने वाले मेघ की भाँति पाण्डव अब जीवित रह सकें आज हम-

---

१ 'निपात' इत्यपि पाठो लभ्यते ।

बलदेव —भो दुर्योधन ! मुहूर्तं तावदात्मा धार्यताम् ।
दुर्योधन —किं भवान्करिष्यति ।
बलदेव —भो श्रूयताम्

आक्षिप्तलाङ्गलमुखोल्लिखिते शरीरे-
निर्दारितासहृदयान्मुसलप्रहारैः ।
दास्यामि सयुगहतान्सरथाश्वनागान्
स्वर्गानुयात्रपुरुषास्तव पाण्डुपुत्रान् ॥ ३२ ॥

---

व्याख्या—भूमौ = पृथिव्यां पतितस्य = गदाप्रहारेण निपतितस्य मम दुर्योधनस्य त्वत्पादयो = पुरः स्थितस्य त्वदीयाङ्घ्रयोः निपतितम् = नमस्कर्तुं पतितम् एतत् शिर —इदं मस्तकं (अतएव) अद्य = इदानीं प्रथमम् = आदौ रोषम् = क्रोधं विमुञ्च = त्यज त्वमिति शेषः । ते = पाण्डवाः कुरुकुलस्य = कुरुवंशस्य निवापमधा = तर्पणाय प्रदानाय मघभूता जीवन्तु = प्राणान् धारयन्तु वस्तुतस्तु साम्प्रतं कुरुपाण्डवयो वैरं = शत्रुता च विग्रहकथा = युद्धवार्ता च किं वा वयम् = शतभ्रातारोऽस्य रणयोद्धार, च नष्टा = समाप्ता इति ॥ ३१ ॥

अन्वय —*आक्षिप्तलाङ्गलमुखोल्लिखिते शरीरे मुसलप्रहारैः निदारितासहृदयान् सरथाश्वनागान् सयुगहतान् पाण्डुपुत्रान् स्वर्गानुयात्रपुरुषान् तव दास्यामि* ॥ ३२ ॥

व्याख्या—आक्षिप्तलाङ्गलमुखोल्लिखिते —आक्षिप्तस्य = प्रहर्तुं प्रक्षिप्तस्य

---

दोनों ( कौरव पाण्डवों ) की शत्रुता तथा युद्धकथा शान्त हो गयी, और हमलोगों (कौरवों) का नाश हो गया ॥ ३१ ॥

बलदेव—अरे दुर्योधन ! थोड़ी देर और प्राण धारण करो ।

दुर्योधन—तब आप क्या करेंगे ।

बलदेव—सुनो—

चलाये गये हल के अग्रभाग से क्षत विक्षत शरीर वाले, मुसलप्रहार से चूर्णित स्कन्ध तथा वक्ष स्थल पाण्डवों को रथ, घोड़े हाथियों सहित मारकर स्वर्ग में जाते हुए तुम्हारा अनुगामी बना दूँगा ॥ ३२ ॥

दुर्योधन —मा मा भवानेवम् ।

प्रतिज्ञावसिते भीमे गते भ्रातृशते दिवम् ।
मयि चैव गते राम ! विग्रह किं करिष्यति ॥ ३३ ॥

वलदेव —मत्प्रत्यक्ष[1] वञ्चितो भवानित्युत्पन्नो मे रोप ।

---

सञ्चालितस्य वा लाङ्गलस्य=हलस्य मुखेन=अग्रभागेन उल्लिखिते=विदारिते शरीरे=देहे अथ च मुशलप्रहारै=मुसलाघातै निर्दारितास-हृदयान्-निर्दारितम्=विदीर्णम् असम्=स्कन्धश्च हृदयञ्च येषा तान् सरथाश्वनागान्=रथाश्वहस्तिभि सहितान् सयुगहतान्-सयुगे=सग्रामे हतान्=उपरतान् पाण्डुपुत्रान्=पाण्डोस्सुतान् युधिष्ठिरार्जुनादीन् स्वर्गानुयात्र-पुरुषान् —स्वर्गम्=द्युलोकम् अनुयाता=प्रस्थिता पुरुषा=सैनिका येषा तान् तव=तुभ्य दास्यामि=अर्पयिष्यामि वसन्ततिलका वृत्तम् ॥ ३२ ॥

अन्वय —राम ! भीमे प्रतिज्ञावासिते भ्रातृशते दिव गते मयि च एव गते विग्रह किं करिष्यति ॥ ३३ ॥

व्याख्या—हे राम ! भीमे=भीमसेने प्रतिज्ञावसिते=दुर्योधनोरु गदया सचूर्णयामीति प्रतिज्ञा प्रपूरिते अथ च मम भ्रातृशते दिवम्=स्वर्लोक गते=प्रस्थिते किं वा मयि च=दुर्योधने च एवङ्गते=भग्नोरौ सति इदानीं विग्रह=युद्ध किं करिष्यति=परिणमिष्यति ? युद्धेन नोचित कश्चिद् परिणामो भविष्यतीति भाव ॥ ३३ ॥

वलदेव —मत्प्रत्यक्षम्—मम (वलदेवस्य) समक्ष प्रत्यक्षमिति पाठे तु व्यासकृष्णादीना सर्वेषा समक्ष वञ्चित=छलित एतस्मोद्धतो मे=मम

---

दुर्योधन—नही नही आप ऐसा न करें।

मध्यम पाण्डव भीम की प्रतिज्ञा पूर्ण हो गयी मेरे सौ भाई स्वर्ग सिधार गये तथा मैं इस दशा को प्राप्त कर लिया हूँ। राम ! अब आप क्यो युद्ध करेंगे ॥ ३३ ॥

वलदेव—मेरे सामने ही तुमको धोखा दिया गया है, अत मेरा क्रोध उभड रहा है।

---

१ 'प्रत्यक्षमि'ति पाठान्तरम् ।

दुर्योधनः—वञ्चित इति मां भवान् मन्यते ।
वलदेव —क संशयः ?
दुर्योधन —हन्त भो. ! दत्तमूल्या इव मे प्राणा । कुत —
आदीप्तानलदारुणाज्जतुगृहाद् बुद्धयात्मनिर्वाहिणा
युद्धे वैश्रवणालयेऽचलशिलावेगप्रतिस्फालिना[1] ।
भीमेनाद्य हिडिम्ब[2]राक्षसपतिप्राणप्रतिग्राहिणा
यद्येव ममर्वेपि मा छलजितं भो राम ! नाह जित. ॥ ३४ ॥

रोष'=क्रोधः उत्पन्न =समुद्भूतः ।

दुर्योधन –'हन्त' इति हर्षसूचकमव्ययपदम्=छलेनाह भीमेन जित इति भवता=वलदेवेन स्वीकृते सति मे=मम प्राणा =जीवाः दत्तमूल्याः=सफला इति ।

अन्वय —आदीप्तानलदारुणात् जतुगृहात् बुद्धयात्मनिर्वाहिणा वैश्रवणालये अचलशिलावेगप्रतिस्फालिना हिडिम्बराक्षसपतिप्राणप्रतिग्राहिणा भीमेन अद्य युद्धे यदि एव मा छलजित समर्वेपि (तदा) भो राम ! अह न जित. (इति मन्ये) ॥ ३४ ॥

व्याख्या—आदीप्तानलदारुणात्—आदीप्तेन=प्रज्वलितेन अनलेन=

दुर्योधन—मुझे धोखा दिया गया है, इसे आप स्वीकार करते हैं ?

वलदेव—इसमें क्या सन्देह है ।

दुर्योधन=अहो ! अच्छा तो, मानो प्राणधारण का मूल्य मुझे मिल गया । क्योंकि—

सभी ओर से धधकती अग्नि से युक्त लाक्षागृह से बुद्धिमत्ता से निकलने वाले, कुवेर के रहते हुए युद्ध में शिलाखण्डो की वर्षा करने वाले, तथा महाबली दैत्यराज हिडिम्ब का प्राणहरण करने वाले भीम ने यदि छल से मुझको जीत लिया है ( आप स्वीकार करते हैं ) तो वस्तुत मैं पराजित नहीं हुआ हूँ ॥ ३४ ॥

१. "(प्रतीसालिना)" प्रतीसारिणा इति पाठभेद ।
२. "हिडम्ब" इति पाठान्तरम् ।

बलदेव —भीमसेन इदानीं तव युद्धवञ्चनामुत्पाद्य स्थास्यति ।
दुर्योधन —किं चाहं भीमसेनेन वञ्चित ।
बलदेव —अथ केन भवानेवंविध कृत ।
दुर्योधन —श्रूयताम्,
येनेन्द्रस्य स पारिजातकतरुर्मानेन तुल्य हृतो
दिव्य वर्षसहस्रमर्णवजले सुप्तश्च यो लीलया ।

---

व्यङ्गिना दारुणात् = भयङ्करात् जतुगृहात् = लाक्षागृहात् वुद्धया = धिया आत्मनिर्वाहिणा = स्वसरक्षकेण वैश्रवणालये = कुबेरालये अचलशिलावेग-प्रतिस्फालिना—अचलानाम् = पर्वतानां या शिला तासां वेगेन = जवेन प्रति-स्फालिना = प्रतीसारिणा हिडिम्बराक्षसपतिप्राणप्रतिग्राहिणा—हिडिम्ब राक्षसपते = हिडिम्बाभिधस्य राक्षसाधिपस्य प्राणप्रतिग्रहिणा = प्रणापहारिणा भीमेन अद्य = इदानीं सैन्यबन्धूना च विनाशेपि युद्धे = सङ्ग्रामे यदि एव माम् = स्वबन्धुविनाशेन दु खित दुर्योधन छलजितम् = कपटेन जित समवैपि = जानामि (तदा) भो राम अह न जित नैव सग्रामे पराजित ॥ ३४ ॥

बलदेव —इदानीम् = साम्प्रत युद्धे छलप्रयोगेन त्वा जित्वा जीविष्यति भीमसेन इत्याशय ।

दुर्योधन —भगवत कृष्णस्य महात्म्य वर्णयन् कथयति—

अन्वय —येन इन्द्रस्य स पारिजातकतरु मानेन तुल्य हृत य च दिव्य वर्षसहस्रम् अर्णवजले लीलया सुप्त तेन जगत प्रियेण हरिणा तीव्रा भीमगदा

---

बलदेव—युद्धस्थल मे तुम्हारे, साथ छल करने वाला भीम अब (जीवित) रह सकेगा ? ।

दुर्योधन—क्या भीम के द्वारा मेरी वञ्चना की गयी है ?

बलदेव—और क्या । किसके द्वारा आपकी दशा की गयी है ?

दुर्योधन—सुनिये जिन्होंने सम्मान के साथ ही इन्द्र का पारिजात नामक कल्पवृक्ष का हरण कर लिया था, अपनी लीला से जिन्होंने दिव्य हजारों वर्ष पर्यन्त क्षीरसागर म शयन किया था वही जगत् के अभीष्ट देव छलरहित

तीव्रा भीमगदा प्रविश्य सहसा निर्व्याजयुद्धप्रिय-
स्तेनाहं जगतः प्रियेण हरिणा मृत्योः प्रतिग्राहितः ॥ ३५ ॥
( नेपथ्ये )

उस्सरह उस्सरह अय्या ! उस्सरह । उत्सरतोत्सरतार्या ! उत्सरत । ]

बलदेव —( विलोक्य ) अये अयमत्रभवान् धृतराष्ट्रः गान्धारी च दुर्जयेनादेशितमार्गोऽन्तःपुरानुबन्धः शोकाभिभूतहृदयश्चकितगतिरित एवाभिवर्तते । य एष ,

सहसा प्रविश्य निर्व्याजयुद्धप्रिय अहं मृत्यो प्रतिग्राहितः ॥ ३५ ॥

व्याख्या–येन=भगवता इन्द्रस्य=सुराधीपते ः=प्रसिद्ध पारिजातक-तरु=कल्पवृक्ष मानेन=अभिमानेन तुल्यम्=साकं हृत=बलाद्गृहीत. दिव्य वर्षसहस्रम्=देवाना वर्षसहस्र यावद् अर्णवजले=समुद्रजले लीलया=मायया सुप्त=योगनिद्रां गृहीत तेन=लोकवेदस्यातेन जगतः प्रियेण=मङ्गलकारिणा हरिणा=श्रीकृष्णेन तीव्रा=तीक्ष्णा भीमगदाम्=भयङ्करगदां भीमसेनस्य गदा वा सहसा=अकस्मात् प्रविश्य=निविश्य निर्व्याजयुद्ध-प्रिय=निष्कपटयुद्धप्रेमी धर्मयोद्धा अहं=दुर्योधन मृत्यो=कालस्य यमस्य वा प्रतिग्राहित=हस्ते समर्पित इति ॥ ३५ ॥

बलदेव—अये इत्याश्चर्यसूचकम् । धृतराष्ट्र=दुर्योधनस्य पिता गान्धार्या=दुर्योधनस्य जनन्या दुर्जयेन=दुर्योधनपुत्रेण आदेशित=प्रदर्शित' मार्ग=पथ अन्त पुरानुबन्ध=अन्त पुरीयस्वजनसहित शोकाभिभूतहृदयः=

युद्धप्रिय भगवान् श्रीकृष्ण ने भीम की गदा मे प्रविष्ट होकर मुझे मृत्यु के हाथो समर्पित कर दिया है ।

(नेपथ्य मे) हटें हटें आर्यो हटें ।

बलदेव– (देखकर) अरे यह शोक सतप्त होने से स्खलित गति वाले आदरणीय महाराज धृतराष्ट्र तथा गान्धारी, दुर्जय (दुर्योधन पुत्र) द्वारा निर्दिष्ट मार्ग पर अन्त पुर के परिजनो के साथ इधर ही आ रहे हैं । जो यह—

वीर्याकरः सुतशतप्रविभक्तचक्षु-
र्दर्पोद्धतः कनकयूपविलम्बबाहुः।
सृष्टो ध्रुवं त्रिदिवरक्षणजातशङ्कै-
र्देवैररातितिमिराञ्जलिताडिताक्षः ॥ ३६ ॥
( ततः प्रविशति धृतराष्ट्रो गान्धारी देव्यौ दुर्जयश्च । )

---

पुत्रविनाशेनाभिसंतप्तहृदयः इतः एव=दुर्योधनाभिमुखमेव अभिवर्तते=आगच्छति ।

अन्वय :—वीर्याकरः सुतशतप्रविभक्तचक्षुः दर्पोद्धतः कनकयूपविलम्बबाहुः त्रिदिवरक्षणजातशङ्कैः देवैः अरातितिमिराञ्जलिताडिताक्षः ध्रुवं सृष्टः ॥ ३६ ॥

व्याख्या-वीर्याकरः=बलस्य आलयः सुतशतप्रविभक्तचक्षुः-सुतानाम्=पुत्राणां शतम्=शतसंख्याकं सुतशतं प्रति प्रविभक्तम्=संलग्नं चक्षुः=नेत्रम्=यस्य सः अर्थात् दुःशासनादीनां शतपुत्राणां विनाशेन शोकाभिभूत इति भावः, दर्पोद्धतः—दर्पः=अभिमानेः उद्धतः अहङ्कारयुक्तः कनकयूपविलम्बबाहुः-कनकयूपवत्=स्वर्णमययज्ञस्तम्भवद् विलम्बौ=लम्बायमानौ बाहू=भुजौ यस्य सः त्रिदिवरक्षणजातशङ्कैः-त्रिदिवस्य=स्वर्गलोकस्य रक्षणं=संरक्षणे जाता=समुद्भूता शङ्का=सन्देहो यस्य तैः देवैः=सुरैः अरातितिमिराञ्जलिताडिताक्षः—अरातयः=शत्रवः एव तिमिराञ्जलिः=घोरान्धकारः तेन ताडिते=हते अक्षिणी=नयने यस्य सः तद्रूपः ध्रुवं=निश्चयेन सृष्टः=सरचितः इति मन्ये । अत्रोत्प्रेक्षालङ्कारः ॥ ३६ ॥

---

अत्यन्त पराक्रमी हैं जिनकी दृष्टि (ज्ञानशक्ति) सौ पुत्रों में बटी हुई है अर्थात् मरे हुए पुत्रों के शोक से अस्थिर चित्त है । दर्प से भरी हुई जिनकी लम्बी भुजायें स्वर्ण निर्मित यज्ञ-स्तम्भ की भाँति प्रतीत होते हैं । निश्चित ही स्वर्ग की रक्षा के लिए उत्पन्न शङ्का वाले देवताओं ने शत्रुता रूपी अन्धकार से जिन्हें मानो नेत्रहीन कर दिया गया हो ॥ ३६ ॥

( इसके बाद धृतराष्ट्र, गान्धारी, दो रानियाँ तथा दुर्जय प्रवेश करते हैं )

धृतराष्ट्रः--पुत्र ! क्वासि ?

गान्धारी—पुत्तअ ! कहिं सि ? [ पुत्रक ! क्वासि ? ]

देव्यौ—महाराअ ! कहिं सि ? [ महाराज ! क्वासि ? ]

धृतराष्ट्रः—भो ! कष्टम् ।

वञ्चनानिहतं श्रुत्वा सुतमद्याहवे मम ।

मुखमन्तर्गतास्राक्षमन्धमन्धतरं कृतम् ॥ ३७ ॥

गान्धारि ! किं धरसे ?

गान्धारी—जीवाविदह्मि मन्दभाआ । [ जीवितास्मि मन्दभागा । ]

देव्यौ—महाराअ ! महाराअ ! [ महाराज ! महाराज ! ]

---

अन्वय—अद्य आहवे वञ्चनानिहतं सुतं श्रुत्वा मम अन्धं मुखम् अन्तर्गतास्राक्षम् अन्धतरं कृतम् ॥ ३७ ॥

व्याख्या—अद्य आहवे=रणक्षेत्रे वञ्चनानिहतम्—वञ्चनया=छलेन कपटेन वा निहतम्=मारितं सुतम्=आत्मजं पुत्रं श्रुत्वा=संश्रुत्य अन्धम्=नेत्रहीनमपि मम=धृतराष्ट्रस्य मुखम्=आस्यम् अन्तर्गतास्राक्षम्—अन्तर्गतानि=अन्तर्विलीनानि अस्राणि=अश्रूणि अक्षिणी=चक्षुषी यस्य तद् अन्धतरम्=अधिकतरमन्धं कृतम्=विहितम् ॥ ३७ ॥

---

धृतराष्ट्र—पुत्र ! कहाँ हो ?

गान्धारी—पुत्र ! कहाँ हो ?

रानियाँ—महाराज ! कहाँ हैं ?

धृतराष्ट्र—ओह ! बहुत कष्ट है ।

गदायुद्ध में शत्रुओं द्वारा छल पूर्वक मारे गये पुत्र को सुनकर पहले से ही अँधा मैं शोकातिरेक के कारण अश्रुपूरित नेत्रों से अधिक अन्धा बना दिया गया हूँ ॥ ३७ ॥

गान्धारी ! क्या तुम हो ?

गान्धारी—हाँ मन्दभागिनी मैं अभी तक जीवित हूँ ।

दोनों रानियाँ—महाराज ! महाराज !

राजा—भो ! कष्टम् । यन्ममापि स्त्रियो रुदन्ति ।

पूर्वं न जानामि गदाभिघातरुजामिदानीं तु समर्थयामि ।
यन्मे प्रकाशीकृतमूर्धजानि रणं प्रविष्टान्यवरोधनानि ॥ ३८ ॥

धृतराष्ट्र—गान्धारि ! किं दृश्यते दुर्योधननामधेयः कुलमानी ।

गान्धारी—महाराज ! ण दिस्सदि । [ महाराज ! न दृश्यते । ]

धृतराष्ट्र—कथं न दृश्यते । हन्त भो ! अद्यास्म्यहमन्धो योऽहं अन्वेष्टव्ये काले पुत्रं न पश्यामि । भो कृतान्तहतक !

---

अन्वय—पूर्वं गदाभिघातरुजां न जानामि तु इदानीं समर्थयामि यत् प्रकाशीकृतमूर्धजानि मे अवरोधनानि रणप्रविष्टानि ॥ ३८ ॥

व्याख्या-प्रथमम्=प्राक गदाभिघातरुजाम्=गदाप्रहारोद्भवा रुजाम्=पीडा न जानामि=नानुभूतवान् तु=परम् इदानीम्=साम्प्रतम् समर्थयामि=गदाघातजनिता पीडाम् अनुभवामि यत्=यत प्रकाशीकृतमूर्धजानि—प्रकाशीकृतानि=वेणीरहितानि कृतानि मूर्धजानि=स्वात्मनः केशा यैस्तानि मे=मम अवरोधनानि=अन्तःपुराणि अन्तःपुरीया स्त्रियः रणम्=सङ्ग्रामभूमि प्रविष्टानि=समागतानि ॥ ३८ ॥

---

राजा—ओह ! अत्यधिक खेद है कि आज मेरी भी पत्नियाँ रो रही है ।

पहले मै गदा के प्रहार से हुए पीडा का अनुभव नही किया था, किन्तु अपने अन्तःपुर की मुक्तवेणी रानियो को रणस्थल पर देखकर अब मुझे पीडा की अनुभूति हो रही है ॥ ३८ ॥

धृतराष्ट्र—कौरवकुल का मानी दुर्योधन दीख रहा है ।

गान्धारी—महाराज ! वह नही दिखाई पड रहा है ।

धृतराष्ट्र—क्या नहीं दीख रहा है ? ओह ! वस्तुतः आज मैं अन्धा हूँ, जो कि इस खोजने के समय मे पुत्र को नही देख रहा है । अये ! पापी यमराज ! —

रिपुसमरविमर्दं मानवीर्यप्रदीप्तं
सुतशतमतिधीरं वीरमुत्पाद्य मानम् ।
धरणितलविकीर्णं किं स योग्यो न भोक्तुं
सकृदपि धृतराष्ट्रः पुत्रदत्तं निवापम् ॥ ३९ ॥

गान्धारी—जाद सुयोधण ! देहि मे पडिवअणं । पुत्तसदविणास दुक्खिदं समस्सासेहि महाराजं । [ जात सुयोधन ! देहि मे प्रतिवचनम् । पुत्रशतविनाशदुःखितं समाश्वासय महाराजम् । ]

बलदेव—अये ! इयमत्रभवती गान्धारी ।

या पुत्रपौत्रवदनेष्वकुतूहलाक्षी
दुर्योधनास्तमितशोकनिपीतधैर्या ।

---

अन्वय—रिपुसमरविमर्दम् अतिधीरं मानवीर्यप्रदीप्तं धरणितलविकीर्णं मानं वीरं सुतशतम् उत्पाद्य धृतराष्ट्रः पुत्रदत्तं निवापं सकृत् अपि किं भोक्तुं न योग्यः ॥ ३९ ॥

व्याख्या—रिपुसमरविमर्दम्–रिपूणाम्=अरीणां समरे=रणे विमर्दम्=विध्वंसं अतिधीरम्=धैर्यवन्तम् मानवीर्यप्रदीप्तम्—मानेन=प्रतिष्ठया अपि च वीर्येण=शौर्येण प्रदीप्तम्=प्रसिद्धिमवाप्तम् धरणितलविकीर्णम्–धरणितले=भूमण्डले विकीर्णम्=परित्यक्तं मानं=मानयुक्तं सुतशतम्=शतसंख्याकान् पुत्रान् उत्पाद्य=जनित्वा, धृतराष्ट्रः पुत्रदत्तम्=पुत्रैः पुत्रेण वा समर्पितं निवापम्=तर्पणार्थं तिलोदकम् सकृत्=एकवारम् अपि किं भोक्तुम्=ग्रहीतुं न योग्य=न शक्तः ? ॥ ३९ ॥

अन्वय—या पुत्रपौत्रवदनेषु अकुतूहलाक्षी दुर्योधनास्तमितशोकनिपीत

---

युद्ध में शत्रुओं का मर्दन करने वाला सम्मान और पराक्रम से देदीप्यमान अत्यन्त वीर अभिमानी सौ पुत्रों को उत्पन्न करने वाला धृतराष्ट्र अपने एक भी पुत्र द्वारा इस पृथ्वी पर दिये गये तर्पण जल का एक बूँद भी ग्रहण करने के योग्य नहीं है ॥ ३९ ॥

गान्धारी—पुत्र सुयोधन ! मुझे उत्तर दो । सौ पुत्रों की मृत्यु से दुःखी इस अभागे महाराज को धैर्यावलम्बन दो ।

बलदेव—अरे ! यह आदरणीया गान्धारी हैं ।

दुर्जय —अङ्कं उपवेसं किण्णिमित्तं तुवं वारेसि । [ अङ्क उपवेशं किन्निमित्तं त्वं वारयसि । ]

राजा—

त्यक्त्वा परिचितं पुत्र ! यत्र तत्र त्वयास्यताम् ।
अद्य प्रभृति नास्तीदं पूर्वभुक्तं तवासनम् ॥ ४४ ॥

दुर्जयः—कहिं णु हु महाराओ गमिस्सदि । [ कुत्र नुखलु महाराजो गमिष्यति । ]

राजा—भ्रातृशतमनुगच्छामि ।

दुर्जय.—म पि तहिं णेहि । [ मामपि तत्र नय । ]

राजा—गच्छ पुत्र ! एवं वृकोदरं ब्रूहि ।

दुर्जयः—एहि महाराअ ! अण्णेसीअसि । [ एहि महाराज ! अन्विष्यसे । ]

---

अन्वयः—पुत्र ! परिचितं त्यक्त्वा त्वया यत्र तत्र आस्यताम् अद्य प्रभृति पूर्वभुक्तम् इदम् तव आसन नास्ति ॥ ४४ ॥

व्याख्या—पुत्र ! परिचितम्=प्रागनुभूतम् ( मदङ्कम् ) त्यक्त्वा=परित्यज्य त्वया यत्र तत्र=यस्मिन् कस्मिंश्चिदपि स्थाने आस्यताम्=समुपविश्यताम् अद्य प्रभृति=अद्य यावत् पूर्वभुक्तम्=पूर्वानुभूतम् इदम्=मत्क्रोडम् तव=भवतः आसनम्=स्थातुं योग्य नास्ति=न विद्यते ॥ ४४ ॥

---

दुर्जय—आप गोद मे बैठने से मुझे क्यो रोक रहे हैं ।

राजा—बेटा ! तुमने पहले जिस ( मेरे गोद रूपी ) आसन का उपयोग किया, उस पूर्वपरिचित आसन को छोड कर अब जहाँ चाहो बैठो, आज से यह तुम्हारे योग्य नही है ।

दुर्जय—तो अब महाराज कहाँ जायेंगे ?

राजा—अपने सौ भाइयो का अनुगमन करता हूँ ।

दुर्जय—मुझे भी वहाँ ले चलिए ।

राजा—बेटा ! जाओ भीम से कहो ।

दुर्जय—आइये, महाराज ! आप खोजे जा रहे हैं ।

राजा—पुत्र केन।

दुर्जयः—अय्याए, अय्येण, सव्वेण अतन्उरेण अ। [ आर्ययार्येण सर्वेणान्तःपुरेण च। ]

राजा—गच्छ पुत्र ! नाहमागन्तुं समर्थः।

दुर्जयः—अहं तुम णइस्सं। [ अहं त्वा नेष्यामि ]

राजा—बालस्तावदसि पुत्र !

दुर्जय —(परिक्रम्य) अय्या ! अयं महाराओ। [ आर्या. ! अयं महाराजः। ]

देव्यौ—हा हा ! महाराओ ! [ हा हा ! महाराज.। ]

धृतराष्ट्र —क्वासौ महाराजः।

गान्धारी—कहिं मे पुत्तओ। ( कुत्र मे पुत्रक । )

दुर्जय.—अअं महाराओ भूमीऐ उवविट्ठो। ( अयं महाराजो भूम्यामुपविष्टः। )

धृतराष्ट्र —हन्त भो.! किमयं महाराज.।

---

राजा—किसके द्वारा ?

दुर्जय—पूज्य पितामही पूज्य पितामह, तथा अन्त पुर के सभी लोगों द्वारा।

राजा—पुत्र ! जाओ, मैं आने में असमर्थ हूँ।

दुर्जय—मैं आपको ले चलूँगा।

राजा—बेटा ! तू अभी बालक हो।

दुर्जय —माताओ ! यह महाराज हैं।

देवियाँ—हाय ! हाय ! महाराज।

धृतराष्ट्र—महाराज कहाँ हैं।

गान्धारी—मेरा पुत्र कहाँ है।

दुर्जय—यह महाराज भूमि पर बैठे हुए हैं।

धृतराष्ट्र—ओह ! यह महाराज हैं।

यः काञ्चनस्तम्भसमप्रमाणो लोके किलैको वसुधाधिपेन्द्रः ।
कृतः स मे भूमिगतस्तपस्वी द्वारेन्द्रकीलार्धसमप्रमाण. ॥ ४५ ॥

गान्धारी—जाद सुयोधण ! परिस्सतोसि । [ जात सुयोधन ! परिश्रान्तोऽसि । ]

राजा—भवत्याः खल्वहं पुत्र. ।

धृतराष्ट्रः—केय भो. !

गान्धारी—महाराअ ! अहमभीदपुत्तप्पसविणी । [ महाराज ! अहमभीतपुत्रप्रसविनी ।]

---

अन्वयः—य. लोके काञ्चनस्तम्भसमप्रमाण. एक: वसुधाधिपेन्द्रः स मे तपस्वी भूमिगतः द्वारेन्द्रकीलार्धसमप्रमाणः कृत ॥ ४५ ॥

व्याख्या—य =दुर्योधन. लोके=पृथिव्याम् काञ्चनस्तम्भसमप्रमाण.—काञ्चनम्=स्वर्णम् तस्य स्तम्भसमम्=स्थूणसदृशम् प्रमाणम् यस्य सः किल=वस्तुत: एक:=अद्वितीय. वसुधाधिपेन्द्र —वसुधायाम्=पृथिव्याम् ये खलु अधिपाः=राजान तेषा तेषु वा इन्द्र =श्रेष्ठ: चक्रवर्ती (आसीत्) स-मे=मम धृतराष्ट्रस्य पुत्र', तपस्वी=वराकः भूमिगत.=गदाघातेन भूमौ पतित. द्वारेन्द्रकीलार्धसमप्रमाण.—द्वारेन्द्र:=गृहस्य प्रमुख द्वार तस्य य. कील=अर्गला तस्य अर्धम्=अर्धभाग. तेन तुल्यम् प्रमाणम्=परिमाणं यस्य स. तथा कृत.=जात. ॥ ४५ ॥

---

जो सोने के खम्भे की भाँति सुदृढ शरीर वाला इस पृथ्वी पर सभी राजाओ मे श्रेष्ठ था उस मेरे तपस्वी पुत्र को भूमि पर पडे हुए दरवाजे के टूकडे की भाँति बना दिया गया है ॥ ४५ ॥

गान्धारी—बेटा सुयोधन ! क्या तुम थके हो ।

राजा—मै, आपका पुत्र हूँ । ( अर्थात् वीर प्रसविनी जननी का पुत्र कैसे थक सकता हूँ ? )

धृतराष्ट्र—यह कौन है ?

गान्धारी—मैं निर्भय पुत्र की जननी (गान्धारी) हूँ ।

राजा—अद्योत्पन्नमिवात्मानमवगच्छामि। भोस्तात किमिदानीं वैक्लव्येन।

धृतराष्ट्र—पुत्र कथमविक्लवो भविष्यामि।

यस्य वीर्यबलोत्सिक्तं संयुगाध्वरदीक्षितम्।
पूर्वं भ्रातृशतं नष्टं त्वय्येकस्मिन्हते हतम्॥ ४६॥

[ पतति ]

राजा—हा धिक्! पतितोऽत्रभवान्। तात! समाश्वासयात्रभवतीम्।

धृतराष्ट्र—पुत्र! किमिति समाश्वासयामि।

राजा—अपराङ्मुखो युधि हत इति। भोस्तात शोकनिग्रहेण

---

अन्वय—यस्य वीर्यबलोत्सिक्तम् संयुगाध्वरदीक्षितम् भ्रातृशतम् पूर्वम् नष्टम् त्वयि एकस्मिन् हते हतम्॥

व्याख्या—यस्य=तव दुर्योधनस्य, वीर्यबलोत्सिक्तम्=उद्धतम् संयुगाध्वरदीक्षितम्—संयुग=समर एवाध्वर=यज्ञ तस्मिन् दीक्षितम्=निपुणम् भ्रातृशतम् पूर्वम्=प्रागेव युद्धे नष्टम्=दिवङ्गतम् (इदानीम्) त्वयि एकस्मिन्=एकमात्रावशिष्टे मत्पुत्रे हते=मृते हतम्=सर्वं समाप्तमिति॥ ४६॥

---

राजा—मैं अपने को आज ही उत्पन्न हुआ समझ रहा हूँ। पिताजी! अब पश्चात्ताप करने से क्या होगा।

धृतराष्ट्र—पुत्र! कैसे शोकरहित हो सकूँ।

युद्ध रूपी यज्ञ में दीक्षित बल तथा पराक्रम से परिपूर्ण जिसके सौ भाई मृत्यु के मुख में चले गये हैं इस प्रकार तुम्हारे एक की ही मृत्यु से मैं भी मारा गया॥ ४६॥ (गिर जाता है)

राजा—हाय! बहुत कष्ट है। आप गिर गये। पिताजी! माता जी को सान्त्वना दिलायें।

धृतराष्ट्र—बेटा! कैसे सान्त्वना दिलाऊँ।

राजा—मैं युद्ध में शत्रु का सामना करते हुए मारा गया हूँ। हे

क्रियता ममानुग्रह ।

त्वत्पादमात्रप्रणताग्रमौलिर्ज्वलन्तमप्यग्निमचिन्तयित्वा ।
येनैव मानेन सम प्रसूतस्तेनैव मानेन दिव प्रयामि ॥ ४७ ॥

धृतराष्ट्र —

वृद्धस्य मे जीवितनि स्पृहस्य निसर्गसम्मीलितलोचनस्य ।
धृतिं निगृह्यात्मनि सम्प्रवृत्तस्तीव्रस्समाक्रामति पुत्रशोक ॥ ४८ ॥

---

अन्वय —त्वत्पादमात्रप्रणताग्रमौलि येन एव मानेन समम् प्रसूत तेन एव मानेन ज्वलन्तम् अग्निम् अपि अचिन्तयित्वा दिवम् प्रयामि ॥ ४७ ॥

व्याख्या — त्वत्पादमात्रप्रणताग्रमौलि —त्वत्पादमात्र = भवच्चरणमात्रे प्रणत = नत अग्रमौलि = शिर यस्य स (अहम्) येनैव मानेन = प्रतिष्ठया समम् = सह प्रसूत = अजाये तेनैव मानेन = सम्मानेन ( सह ) ज्वलन्तम् = प्रज्वलितम् अग्निम् = वह्निम् अपि अचिन्तयित्वा = अविचार्य दिवम् = स्वर्गम् प्रयामि = गच्छामि ॥ ४७ ॥

अन्वय —जीवितनि स्पृहस्य निसर्गसम्मीलितलोचनस्य वृद्धस्य मे धृतिम् निगृह्य आत्मनि सम्प्रवृत्त तीव्र पुत्रशोक समाक्रामति ॥ ४८ ॥

व्याख्या—जीवितनि स्पृहस्य—जीविते = प्राणधारणे नि स्पृहस्य = अभिलापरहितस्य निसर्गसम्मीलितलोचनस्य निसर्गेण = ज मनैव सम्मीलिते = सङ्कुचिते लोचने = अक्षिणी यस्य वृद्धस्य = जरातुरस्य मे = मम धृतराष्ट्रस्य धृतिम् = धैर्यम् निगृह्य = अपवृत्य आत्मनि = हृदि सम्प्रवृत्त = समुत्पन्न

---

पिताजी ! इसे जान कर नि शोक होकर मेरे ऊपर कृपा करें ।

आपके चरणो मे नतमस्तक रहने वाला मैं जिस अभिमान के साथ उत्पन्न हुआ उसी सम्मान के सहित जलती हुई अग्नि की चिन्ता न करता हुआ स्वर्लोक जा रहा हू ॥ ४७ ॥

धृतराष्ट्र—अपने जीवन के प्रति निराश मुझ ज मान्ध का पुत्रविनाश जनित शोक, धैर्य को रोक कर अति तीव्र गति से मुझे आक्रान्त कर रहा है ॥ ४८ ॥

बलदेव—भो ! कष्टम् ।

दुर्योधननिराशस्य नित्यास्तमितचक्षुषः ।
न शक्नोम्यत्रभवतः कर्तुमात्मनिवेदनम् ॥ ४९ ॥

राजा—विज्ञापयाम्यत्रभवतीम् ।

गान्धारी—भणाहि जाद ! [भण जात !]

राजा—नमस्कृत्य वदामि त्वां यदि पुण्यं मया कृतम् ।
अन्यस्यामपि जात्यां मे त्वमेव जननी भव ॥ ५० ॥

---

तीव्रः=असह्यः पुत्रशोकः=पुत्रविनाशजनितशोकः समाक्रामति—समन्ततः आत्मनि=आक्रमणं करोतीत्यर्थः ॥ ४८ ॥

अन्वय—दुर्योधननिराशस्य नित्यास्तमितचक्षुषः अत्रभवतः आत्मनिवेदनं कर्तुं न शक्नोमि ॥ ४९ ॥

व्याख्या—दुर्योधननिराशस्य=दुर्योधनस्य जीवनं प्रति नैराश्यमवाप्तस्य नित्यास्तमितचक्षुषः-नित्यम्=सर्वदैव अस्तमिते=सद्दृष्टिहीने चक्षुषी=अक्षिणी यस्य सः तस्य अत्रभवतः=मान्यस्य ( शोकाकुलस्य ) समक्षम् आत्मनिवेदनम्=धैर्यावलम्बनाय किञ्चिद्वक्तुं न शक्नोमि=समर्थोऽस्मि ॥ ४९ ॥

अन्वय.—( हे मातः ! ) त्वां नमस्कृत्य ( अहम् ) वदामि यदि मया पुण्यं कृतम् ( तदा ) मे अन्यस्याम् अपि जात्यां त्वम् एव जननी भव ॥ ५० ॥

व्याख्या—मातरं गान्धारीं प्रति दुर्योधनः कथयति त्वाम्=भवतीम्

---

बलदेव—ओह ! खेद है ।

दुर्योधन के जीवन के प्रति हताश नित्य निमीलित नेत्रों वाले आप (धृतराष्ट्र) के समक्ष मैं अपनी कुछ भी बातें कहने में असमर्थ हूँ ॥ ४९ ॥

राजा—माँ ! मैं आपसे कुछ निवेदन करना चाहता हूँ ।

गान्धारी—कहो बेटा ।

राजा—मैं अभिवादन करके आपसे कहता हूँ कि यदि मैंने कुछ पुण्य किया है तो दूसरे जन्म में भी आप ही मेरी माता होवें ॥ ५० ॥

भीष्मो रामशरावलीढकवचस्तातश्च योद्धा रणे
व्यक्तं निर्जित एव सोऽप्यतिरथः कालेन दुर्योधनः ॥ ५८ ॥

तत् क्व नु खलु गतो गान्धारीपुत्रः । ( परिक्रम्यावलोक्य ) अये अयमभिहतगजतुरगनररथप्राकारमध्यगतः समरपयोधिपारगः कुरुराजः । य एषः,

---

भीष्मः तातश्च रणे सः योद्धा अपि अतिरथः दुर्योधनः कालेन व्यक्तम् एव निर्जितः ॥ ५८ ॥

व्याख्या—रथद्विपगताः = रथारूढाश्च चापद्वितीयैः—चापः = धनुरेव द्वितीयः = सहायो येषां तादृशैः करैः = हस्तैः उद्यतप्राञ्जलयः—उद्यताः = उत्थापिताः प्राञ्जलयः = पाणिपुटाः यैः तादृशाः एकादशवाहिनीनृपतयः—एकादशसंख्यकानां वाहिनीनाम् = सेनानां नृपतयः = अधीश्वराः यस्य = दुर्योधनस्य वाक्योन्मुखाः = आज्ञापालकाः तिष्ठन्ति स्म' इति शेषः । किञ्च रामशरावलीढकवचः—रामस्य = परशुरामस्य शरैः = सायकैः अवलीढं = विद्धो कवचं यस्य सः भीष्मः = शान्तनुतनुः तातः = पिता च रणे = सङ्ग्रामे योद्धा = 'सेनापतिः' यस्य सोऽपि अतिरथः = रथिनमतिक्रम्य वर्तते इति महारथी दुर्योधनः कालेन = कालवैपरीत्येन व्यक्तमेव = निश्चितमेव निर्जितः पराजितः इति ॥ ५८ ॥

तदिति । गान्धारीपुत्रः = दुर्योधनः, अये इत्याश्चर्यम् अयमभिहतगजतुरगनररथप्राकारमध्यगतः—अयम् = कौरवाधिपः, अभिहताः = मृताः ये गजाः =

---

रथ और हाथियों पर सवार, विभिन्न शस्त्रों से सुसज्जित जिनकी आज्ञा को शिरोधार्य करने के लिए ग्यारह अक्षौहिणी सेना वाले राजा भी हाथ जोड़े खड़े रहते थे, परशुराम के बाणों से आच्छादित कवच वाले भीष्म और मेरे पिता जी (द्रोणाचार्य) जैसे पराक्रमी जिस दुर्योधन के योद्धा थे वह वीर (दुर्योधन) भी काल की प्रतिकूलता से पराजित हो गया ॥ ५८॥

तो गान्धारी का पुत्र (दुर्योधन) कहाँ चला गया । (घूम कर और देख कर) अरे ! मरे हुए हाथी, घोड़े, मनुष्य और रथरूपी प्राचीर के मध्य समरयुद्ध को पार करने वाला दुर्योधन पड़ा हुआ है । जो यह–

मौलीनिपातचलकेशमयूखजालै-
गात्रैर्गदानिपतनक्षतशोणितार्द्रैः ।
[1]भात्यस्तमस्तकशिलातलसन्निविष्टः
सन्ध्यावगाढ इव पश्चिमकालसूर्यः ॥ ५९ ॥

( उपसृत्य ) भो कुरुराज ! किमिदम् ।

---

हस्तिनः तुरगाः =अश्वाः नराः =मनुष्याः इत्यादयः तथा यत्प्राकारः तं मध्यगतः =तद्गतः प्रविष्टः, समरपयोधिपारगः –समरः =युद्धस्थलमेव पयोधिः = समुद्रः तस्य पारगः =पारं गच्छतीत्यर्थः ।

अन्वय —मौलीनिपातचलकेशमयूखजालैः गदानिपतनक्षतशोणितार्द्रैः गात्रैः अस्तमस्तकशिलातलसन्निविष्टः सन्ध्यावगाढः पश्चिमकालसूर्यः इव भाति ॥ ५९ ॥

व्याख्या-मौलिनिपातचलकेशमयूखजालैः –मौल्याः =मुकुटस्य निपातेन = प्रपतनेन चलाः =चञ्चलाः केशाः =शिरोबालाः एव मयूखजालानि =किरण-समूहाः तैः तथा गदानिपतनक्षतशोणितार्द्रैः —गदायाः निपतनेन =प्रहारेण यानि क्षतानि =व्रणस्थानानि तेभ्यः निस्सृतेन शोणितेन =रक्तेन आर्द्रैः = क्लिन्नैः गात्रैः =शरीरावयवैः अस्तमस्तकशिलातलसन्निविष्टः –अस्तमस्तकस्य=अस्ताचलशिखरस्य शिलातलेषु =प्रस्तरखण्डेषु सन्निविष्टः = संलग्नः सन्ध्यावगाढः —सन्ध्याकालीनरागेण अवगाढः =अवलिप्तः पश्चिम-कालसूर्यः =दिवावसानकालीनभास्करः इव =सदृशः भाति =सुशोभते इति ॥ ५९ ॥

---

मुकुट गिर जाने के कारण केश जिसके सूर्य की किरणों की भाँति हैं, गदा के प्रहार से हुए व्रण से निकलने के कारण जिसका रक्तरञ्जित शरीर आर्द्र होने से अस्ताचल के शिखर में डूबते हुए सूर्य की तरह अस्त होता जान पड़ता है ॥ ५९ ॥

( समीप जाकर ) अहो कुरुराज ! यह क्या हुआ ?

---

१ "यात्यस्ते"इत्यादि पाठान्तरम् ।

राजा—गुरुपुत्र ! फलमपरितोषस्य !
अश्वत्थामा—भो कुरुराज ! सत्कारमूलमावर्जयिष्यामि ।
राजा—किं भवान् करिष्यति ।
अश्वत्थामा—श्रूयताम् ।

युद्धोद्यतं गरुडपृष्ठनिविष्टदेह—
मष्टार्द्धभीमभुजमुद्यतशाङ्‌र्गचक्रम् ।
कृष्णं सपाण्डुतनयं युधि शस्त्रजालैः
सङ्कीर्णलेख्यमिव चित्रपटं क्षिपामि ॥ ६० ॥

---

राजा—फलमपरितोषस्य—फलम्=परिणामः, अपरितोषस्य=सन्तोष रहितस्य ।

अश्वत्थामा—सत्कारमूलमावर्जयिष्यामि—सत्कारपूर्वकं यथा स्यात्तथा आवर्जयिष्यामि=तवाऽनुरूपं करिष्यामि ।

अन्वय—युद्धोद्यतं गरुडपृष्ठनिविष्टदेहम् अष्टार्द्धभीमभुजम् उद्यतशाङ्‌र्गचक्रं सपाण्डुतनयं कृष्णं युधि शस्त्रजालैः सङ्कीर्णलेख्यं चित्रपटम् इव क्षिपामि ॥ ६० ॥

व्याख्या—किं भवान् करिष्यतीति दुर्योधनेन पृष्टे सत्यश्वत्थामा कथयति—युद्धोद्यतम्—युद्धाय=संग्रामाय उद्यतम्=उत्साहान्वितं तथा गरुडपृष्ठनिविष्टदेहम् गरुडस्य=वैनतेयस्य पृष्ठे=पृष्ठभागे निविष्टः=सन्निविष्टो देहः=शरीरं यस्य तम्, अष्टार्द्धभीमभुजम्—अष्टार्द्धं=चत्वारः

---

राजा—गुरुपुत्र, मेरे अत्यधिक लोभ का फल है ।

अश्वत्थामा—हे कुरुराज ! आपका ( अभीष्ट सिद्ध कर ) सत्कार करना चाहता हूँ ।

राजा—आप क्या करेंगे ।

अश्वत्थामा—युद्ध के लिए उत्साहित गरुड की पीठ पर बैठे हुए भयंकर चार भुजाओं वाले शाङ्‌र्ग नामक धनुष और चक्र धारण किए हुए कृष्ण को पाण्डवों के सहित, युद्ध में शस्त्रसमूह के द्वारा चित्रित चित्रपट की भाँति नष्ट कर फेंक दूँगा ।

राजा—मा मा भवानेवम् ।

गत धात्र्युत्सगे सकलमभिषिक्त नृपकुल
गत कर्णं स्वर्गं निपतिततनु शान्तनुसुत ।
[1]गत भ्रातृणा मे शतमभिमुख सयुगमुखे
वय चैवभूता गुरुसुत ! धनुर्मुञ्चतु भवान् ॥ ६१ ॥

भीमा = भयोत्पादका भुजा = बाहवो यस्य तम् उद्यतशार्ङ्गचक्रम्—उद्यते = सुसज्जिते शार्ङ्गम् च = धनुश्च चक्रम् च = सुदर्शनश्च इति उद्यतशार्ङ्ग चक्रे यस्य त, सपाण्डुतनय = पञ्चपाण्डवसहित कृष्णम् = वासुदेव युधि = समर शस्त्रजाले = शस्त्रसमूहे सङ्कीर्णलेख्यम् सङ्कीर्णा = परस्पर साङ्कर्यं प्राप्ता लेख्या = मूर्तय यत्र तादृश यच्चित्रपटम् तमिव निपामि = उत्सृज्यामि हनिष्यामीति भाव ॥ ६० ॥

अन्वय—अभिषिक्त सकल नृपकुल धात्र्युत्सङ्गे गतम्, कर्ण स्वर्गं गत, शान्तनुसुत निपतिततनु मे भ्रातृणा शतमभिमुख सयुगमुख गतम्, वय च एवभूता (अत ) हे गुरुसुत भवान् धनु मुञ्चतु ॥ ६१ ॥

व्याख्या—अभिषिक्तम् = युवराजपदाधिष्ठित सकलम् = समग्र नृपकुलम् = राजवश , धात्र्युत्सङ्गे—धात्र्या = पृथिव्या उत्सङ्गे = क्रोडे गतम् = प्रविष्टम् कर्ण = राधेय, स्वर्गम् = नाकलोक गत शान्तनुसुत = भीष्म निपतिततनु = पतितदेहोऽभवदिति शेष । मे = मम भ्रातृणाम् = सोदराणा शतम् = शतसख्याकम् अभिमुखम् = समक्षमेव सयुगमुखे = युद्धमध्ये गतम् = विनष्टम् वयञ्च एवभूता = एवविधा जाता (अत ) हे गुरुसुत = गुरुपुत्र भवान् धनु = शस्त्र मुञ्चतु । शिखरिणी वृत्तम् ॥ ६१ ॥

राजा—नहीं, आप ऐसा न कहिए ।

समस्त अभिषिक्त राजवश पृथिवी की गोद मे सो गया कर्ण स्वर्ग चला गया, शान्तनु-पुत्र ( भीष्म पितामह ) भी मारे गये मेरे सौ भाई भी रणक्षेत्र में स्वर्ग सिधार गये और मैं उनलोगो का अनुगमन कर रहा हूँ, इस लिए हे आचार्य पुत्र ! आप धनुष को त्याग दें ।

1 "शत भ्रातृणा मे हतमभिमुख सयुगमुखे" इत्येवमपि पाठो लभ्यते ।

अश्वत्थामा—भो. कुरुराज !

संयुगे पाण्डुपुत्रेण गदापातकचग्रहे ।
सममूरुद्वयेनाद्य दर्पोऽपि भवतो हृत. ॥ ६२ ॥

राजा—मा मैवम् । मानशरीरा राजानः । मानार्थमेव मया निग्रहो गृहीतः । पश्य गुरुपुत्र !

यत्कृष्टा करनिग्रहाञ्चितकचा द्यूते तदा द्रौपदी
यद्बालोऽपि हतस्तदा रणमुखे पुत्रोऽभिमन्युः पुनः ।
अक्षव्याजजिता वन वनमृगैर्यत्पाण्डवाः संश्रिता
नन्वल्प मयि तैः कृतं विमृश भो दर्पाहृतं दीक्षितै. ॥६३॥

---

अन्वयः—गदापातकचग्रहे संयुगे अद्य पाण्डुपुत्रेण ऊरुद्वयेन समम् एव भवतः दर्प. अपि हृत. ॥ ६२ ॥

व्याख्या—गदापातकचग्रहे—गदायाः पात.=आघात' कचानाम्=शिरोरुहाणां ग्रहः=आकर्षणं यत्र तादृशे संयुगे=संग्रामे अद्य पाण्डुपुत्रेण=भीमेन ऊरुद्वयेन=जङ्घायुगलेन समम्=सहैव भवतः=तव दर्प.=स्वाभिमानः अपि हृतः=नष्टः ॥ ६२ ॥

राजा—मानशरीराः—मानम्=प्रतिष्ठा एव शरीरा.=देहाः यस्य त एव राजानः । निग्रहः=युद्धम् गृहीतः=सरचित' ।

अन्वय'—यत् करनिग्रहाञ्चितकचाः द्रौपदी द्यूते कृष्टा पुनः पुत्रः अभिमन्युः तदा रणमुखे बालः अपि यत् हत. अक्षव्याजजिता पाण्डवाः वनमृगैः यत् वन संश्रिताः भोः दीक्षितै. तैः मयि दर्पाहृतं कृतं ननु अल्पम् ( इति ) विमृश ॥ ६३ ॥

---

अश्वत्थामा—हे कुरुराज ! पाण्डुपुत्र भीम के द्वारा युद्ध मे केश पकड कर गदा प्रहार किये जाने के कारण तुम्हारी दोनो जङ्घाओ के साथ ही तुम्हारा अभिमान भी नष्ट कर दिया गया है ॥ ६२ ॥

राजा—नही, नही अभिमान ही राजाओ का शरीर है। मान के लिए ही मैंने युद्ध किया है। आचार्यपुत्र देखे—

मैंने द्युतसभा मे हाथो से जो द्रौपदी का केश खीचा, सङ्ग्रामाङ्गण मे

चौखम्बा अमरभारती ग्रन्थमाला

३३

भासनाटकचक्रे

# पञ्चरात्रम्

सपरिशिष्ट 'विमला' संस्कृतहिन्दीव्याख्योपेतम्

व्याख्याकार—

डॉ० जगदीशचन्द्र मिश्रः

साहित्याचार्य, व्या० शा०, बी० ए० (आनर्स), एम० ए० (त्रितय),

पी० एच-डी०, डिप्-इन-एड।




चौखम्बा अमरभारती प्रकाशन

वाराणसी

१९७९

CHAUKHAMBA AMARABHARATI GRANTHAMALA
33

# PAÑCARĀTRAM

OF

MAHAKAVI BHASA

Edited with
*The 'Vimala' Sanskrit, Hindi Commentaries and Notes.*

By
Dr. J C MISHRA
B A (Hons), M A (Double), Ph-D. Dip-in-Ed.
Sahityacharya and Vyakaran Shastri.



Chaukhamba Amarabharati Prakashan
VARANASI–221001
1979

# विषय-प्रवेशः



—:०:—

# विमला विमर्श

'विमला' पञ्चरात्र की व्याख्या है। अनुवाद एवं विचारविमर्श की दृष्टि से यह व्याख्या कहाँ तक उपयुक्त है। यह मैं अपने कृपालु सुधी समीक्षकों पर छोड़ता हूँ। किन्तु, इस कृति-संरचना में जिन से मेरा सम्पर्क हुआ है, उनके सम्बन्ध में कुछ अवश्य कहना चाहूँगा।

प्रत्येक देश और काल में देशान्तर या कालान्तर की भावनाओं एवं विचारों की अभिव्यक्ति के माध्यम में अन्तर रहा है। यह अन्तर तत्संबन्धी परिवेश एवं परिवर्तन के अन्तर के कारण ही रहा है। युगविशेष अथवा देश-विशेष का कोई भी कवि या विचारक जो कुछ सोचता विचारता है, उसे अपनी भाषा में लिपिबद्ध कर देता है। अपने ही देश में कालान्तर में जब उस भाषा को जानने वालों की कमी हो जाती है तब वह विचारराशि जन सामान्य के लिए दुर्लभ एवं अग्राह्य प्रतीत होने लगता है। उन्हें तथाकथित उक्त भाषा के माध्यम से उन विचारों का बोध ही नहीं हो पाता है। यह अबोधता की दीवार भाषा के कारण उत्पन्न होती है। भाषाजन्य इस व्यवधान को दूर करना ही विमला का मुख्य उद्देश्य है।

एक ही देश की दूर दूर सीमाओं में विभक्त मानवजाति, एक दूसरे के भावों और विचारों को निकट लाने के लिए एक दूसरे की भाषा के भावों और विचारों को अपनी भाषा के भावों या विचारों में लाना चाहती है। एक ही देश में युगों से बसी मानवजाति भी अपने पूर्वजों के भावों और विचारों को समझने या जानने के लिए स्पष्टतया इसे अपनी वर्तमान भाषा में लाने की इच्छुक रहती है। यह प्रक्रिया सफल होती है केवल एक ही माध्यम से जिसे हम अनुवाद या भाषान्तर की व्याख्या कहते हैं। वस्तुतः अनुवाद भावाभि-व्यक्ति को एक भाषा से दूसरी भाषा में रूपान्तरित करने की एक विशिष्ट कला है। पञ्चरात्र की परिनिष्ठित संस्कृत भाषा को सरल संस्कृत, हिन्दी में रूपान्तरित करने की विमला की क्षमता किस हद तक सफल हुई है, विचारणीय है।

'विमला' का कार्य भारत के पुरातन और वर्तमान के बीच सम्बन्ध स्थापित करने की एक कड़ी की तरह है। 'पञ्चरात्र' में निहित भास के महाभारतीय भावों या विचारों के अतिरिक्त इसके अभिशिष्ट भारतीय संस्कृति के प्रसार तथा समृद्धि के लिए भी विमला की उपयोगिता स्पष्ट है।

किसी भी देश का रचनात्मक कृतित्व उस देश की सास्कृतिक प्रक्रिया के सर्वाधिक सवेदनशील और सर्जनात्मक रूप को उजागर करता है। अत यह स्वाभाविक है कि छात्रों के अतिरिक्त अन्य बौद्धिक वर्ग के लोग भी इस स्थिति को जानने के लिए उत्सुक हो। भारत जैसे देश के लिए जो अनेक प्रान्तो मे बटा हुआ है और जहाँ प्रान्तविशेष की अपनी अपनी स्थानीय भाषाएँ हैं, वहाँ पञ्चरात्र की सस्कृत हिन्दी व्याख्या के साथ ही अग्रेजी अनुवाद की भी बडी आवश्यकता है।

'विमला' व्याख्या की कुछ निजी समस्याएँ भी हैं। किन्ही दो भाषाओ के वातावरण समान नही होते। एक भाषा से दूसरी भाषा मे अनुवाद करते समय अविकल पर्यायो का अभाव उन शब्दो को लेकर बहुत खटकता है जो सस्कृत, वेशभूषा, खानपान, धर्म दर्शन, फलफूल आदि के वाचक होते हैं। जैसे 'पञ्चरात्र' मे प्रयुक्त यज्ञ, होम, प्राग्वश, तपस्या, पूजा-पाठ, दान-धर्म, श्रद्धा-भक्ति, दर्भ, कृष्णाजिन, राजर्षि, आचार्य, तपोनिष्ठ, पाटल, घी, स्रुवा, भाण्ड, भर्त्ता, सुभ्रुवा, वनराजि प्रभृतिशब्द जिन अर्थो के वाचक होते हैं, उनके बोधक शब्द अग्रेजी मे तो नही ही हिन्दी मे भी प्रयत्नसाध्य होते है। इसकी व्याख्या लिखते समय हिन्दी की प्रगति को ध्यान मे रखकर विमला को कठिनाइयो का सामना करना पडा है।

इस नाटक की व्याख्या लिखते समय वाक्य-रचना को लेकर भी कई समस्यायें सामने आई है। कई स्थानो पर मूल भाषा मे परस्पर किसी भाव के लिए प्रयुक्त प्रतीकात्मक शब्द के लिए हिन्दी, सस्कृत या अग्रेजी भाषा मे समानार्थी शब्दो की अनुपलब्धि के सम्बन्ध मे जब कभी समस्या उठी है तब वहाँ विमला ने स्वेच्छाचारिता बरती है। प्राय यह समस्या अधिकाशत व्यावहारिक शब्दो के प्रयोग मे ही आई है। इस समस्या या इस तरह की समस्याओ को दूर करने के लिए या तो मूल भाषा के अपरिचित शब्द सव्याख्या भाषान्तर मे ग्रहण कर लिए गये है, या फिर उसे ज्यो के त्यो ही ग्रहण कर लिया गया है।

'पञ्चरात्र' मे प्रयुक्त सस्कृत मुहाविरे या सुभाषितो को लेकर भी यह

दुर्योधनः—कोऽत्र ।

( प्रविश्य )

भटः—जयतु महाराज ।

दुर्योधनः—आपस्तावत् ।

भटः—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । इमा आपः ।

दुर्योधनः—आनय । (कलशं गृहीत्वा) भो आचार्य ! अश्रुपातोच्छिष्टस्य मुखस्य क्रियतां शौचम् ।

---

दुर्योधनः—कोऽत्र कः पुरुषविशेषः, ननु अस्मिन् स्थाने अस्ति, इति जिज्ञास्यते,

( प्रविश्य प्रवशकृत्वा )

भटः—जयतु महाराजः सर्वतोभावेन विजयताम् श्रीमान् ।

दुर्योधनः—आपः जलम्, तावदित्यवधारणे ।

भटः—यदाज्ञापयति यथादिशति, महाराजः नृपदुर्योधनः ( निष्क्रम्य बहिर्गत्वा, प्रविश्य) जयतु महाराजः विजयताम् श्रीमान्, इमा आपः जलानीति शेषः ।

दुर्योधनः—आनय देहि, ( कलशम् घटम्, गृहीत्वानीत्वा ) भो आचार्य हे गुरुदेव, अश्रुपातोच्छिष्टस्य बाष्पपातनोपहतस्य, मुखस्य आननस्य, क्रियताम् विधीयताम्, शौचम् ।

---

दुर्योधन—कोई यहाँ है ?

( प्रवेश करके )

भट—महाराज की जय हो ।

दुर्योधन—भट थोड़ा पानी तो लाओ ।

भट—महाराज की जो आज्ञा ( बाहर जाकर फिर लौटकर ) जय हो महाराज की ये रहा पानी ।

दुर्योधन—लाओ ( कलश लेकर ) आचार्य, आँसुओं से पवित्र मुख का प्रक्षालन तो कर लें ।

द्रोण —भवतु भवतु । मम कार्यक्रियैव मुखोदकमस्तु ।

दुर्योधन —हा धिक्,

यदि विमृशसि पूर्वजिह्मता मे यदि च समर्थयसे न दास्यतीति ।
शरशतकठिन प्रयच्छ हस्त सलिलमिद करण प्रतिग्रहाणाम् ॥ ३२ ॥

द्रोण —हन्त ! लब्धो मे हृदयविश्वास । पुन ! श्रूयता ।

येषा गति क्वापि निराश्रयाणा सवत्सरैर्द्वादशभिर्न दृष्टा ।

---

द्रोण —भवतु भवतु तिष्ठतु तावत्, मम द्रोणस्य, कार्याक्रयैव कर्मसिद्धिरेव, मुखोदकम् आननजलमस्तु ।

दुर्योधन.—हा धिक् इति खेदे ।

व्याख्या—यदि चेत्, मे मम पूर्वजिह्मताम् पुराकृतकुटिलकर्मत्वम्, विमृशसि विचारयसि, यदि चेत्, न नहि, दास्यति यच्छति, इति इत्थम्, समर्थयसे समर्थन करोषि तदा शरशतकठिनम् सततबाणाभ्यासेन कठोरम्, हस्तम् करम् प्रयच्छ देहि, प्रतिग्रहाणाम् उपहारस्वीकरणानाम, करणम् साधनम्, इदम् एतद्, सलिलम्, जल, उन्मृज्यते । अस्मिन् श्लोके, पुष्पिताग्रावृत्तम् ॥ ३२ ॥

द्रोण.—हन्त इति हर्षे, लब्ध प्राप्त, मे मम, हृदयविश्वास चित्तप्रत्यय, यतो हि अय दुर्योधन सर्वेषा भूपतीनाम समक्ष दक्षिणादानस्य कृत्वा प्रतिज्ञाम यथा न करिष्यतीति भाव । पुन वत्स श्रूयताम् अवधायताम् —

व्याख्या—येषाम् जनानाम्, निराश्रयाणाम् आश्रयरहितानाम, यत्र तत्र भ्रमताम् पाण्डवानाम् युधिष्ठिरादीनाम्, द्वादशभि द्वादशसख्याभि, सवत्सरै हायनै, कुत्रापि गति गमनम्, न नहि, दृष्टा अवलोकिता अर्थात् युधिष्ठिरादि

---

द्रोण—छोडो, मेरा सफलता ही मेरा मुखोदक बनेगी ।

दुर्योधन—आह, मुझे धिक्कार है ।

मेरी पूर्वकृत कुटिलता पर यदि आप ध्यान देते है, और यदि आपको यह भय है कि मैं आपकी इच्छा पूरी नही करूँगा तो लाइए बाणप्रक्षेपणाभ्यास स बना कठोर अपना हाथ, रख दूँ उस पर अभी ही सकल्प जल ॥ ३२ ॥

द्रोण—प्रसन्न हूँ बेटा, अब मैं पूर्ण आश्वस्त हूँ। सुनो—

बारह साल से जिनका कोई पता नहीं है, जो आश्रयविहीन होकर दर-दर

त्वं पाण्डवानां कुरु संविभागमेषा च भिक्षा मम दक्षिणा च ॥ ३३ ॥

शकुनि —( सोद्वेगम् ) मा तावद् भोः !

उपन्यस्तस्य शिष्यस्य विश्वस्तस्य च गौरवे ।
यत्प्रस्तुतमुत्पाद्य युक्तेयं धर्मवञ्चना ? ॥ ३४ ॥

द्रोण—कथं धर्मवञ्चनेति । तावद् भो गान्धारविषयविस्मित ! शकुने ! त्वदनार्यभावात् सर्वलोकमनार्यमिति मन्यसे । हन्त भोः !

---

पञ्चपाण्डवानां द्वादशभिर्वर्षैः कुत्रापि स्थितिः, नोपलब्धा, त्वम् भवान्, तेषाम् पाण्डवानाम्, संविभागम् सम्यक्प्रकारेणविभाजनम्, कुरु विधीयताम् अर्थात् राज्यार्धम् प्रदीयताम्, एषा पाण्डवानां कृते अर्धदानस्य घोषणा एव मम आचार्य-द्रोणस्य भिक्षायाचना च पुनः दक्षिणा यद्वेद्वृत्तस्याचार्यत्वस्य यथोचितम् वेतनम् भविष्यतीति । इन्द्रवज्रावृत्तम् ॥ ३३ ॥

शकुनि—(सोद्वेगं आवेगसहितम्) मा तावत् द्रोणवाक्यविश्वासं मा कुरु ।

व्याख्या—उपन्यस्तस्य दक्षिणादातुम् प्रस्तुतजनस्य, गौरवे भवता महत्त्वे, विश्वस्तस्य विश्वस्तस्य, शिष्यस्य अन्तेवासिनः, यत्प्रस्तुतम् सत्कारप्रस्तावम्, उत्पाद्य उत्पन्नं कृत्वा इयम् एषा, धर्मवञ्चना धर्माचरणव्याजेन छलम्, युक्ता उचिता ? सत्कारेणान्यशिष्यस्य त्वया वञ्चनम् इति न युक्तम् ॥

द्रोण—कथम्, केन प्रकारेण, धर्मवञ्चना धर्माचरणव्यपदेशेनकपटमिति, गान्धारविषयविस्मित गान्धारदेशविशेषम् राज्यत्वेन प्राप्य गर्वोद्धतशकुने, त्वत् भवत, अनार्यभावात् कुटिलविचारात्, सर्वलोकम् समस्तजनम् अनार्यम् दुष्टम्, मन्यसे, हन्त भोः कष्टम् भो —

---

की ठोकरें खा रहे हैं उन पाण्डवों को उनका आधा राज्य लौटा दो, यही मेरी भीख है, यही मेरी दक्षिणा भी ॥ ३३ ॥

शकुनि—( घबड़ाकर ) नहीं नहीं,

जिसने तुम्हारे गुरुत्व पर विश्वास किया, जिसने तुम्हारी इच्छानुकूल दक्षिणा देने का संकल्प लिया उस शिष्य के लिए यह धार्मिक वञ्चना क्या उचित है ?

द्रोण—धर्मवञ्चना कैसी ? ओ गर्वीले गान्धार नरेश, तुम स्वयं अनार्य हो इसलिए सारा संसार तुम्हें अनार्य प्रतीत होता है ।

भ्रातृणा पैतृक राज्य दीयतामिति वञ्चना ।
किं पर याचितैर्दत्त वलात्कारेण तैर्हृतम् ॥ ३५ ॥

सर्वे—कथ वलात्कारेण नाम ।

भीष्म —पौत्र ! दुर्योधन ! अवभृयस्नानमात्रमेव खलु तावत् । मित्रमुखम्य शत्रो शकुनेर्वचन न श्रोतव्यम् । पश्य पौत्र ।

यत् पाण्डवा द्रुपदराजसुतासहाया

---

व्याख्या—भ्रातृणाम् बान्धवानाम्, पैतृकम् वशकमागतम्, राज्यम ऐश्वर्यम्, दीयताम् समर्प्यताम्, इति इत्थम्, वञ्चना छलम् ? नेद कपटव्यवहारम् औचित्यमेवार्धराज्यदानमिति, याचितैः प्रार्थितैर्मया नवद्भिर्दत्तम प्रदानम् कृतम्, बलात्कारेण बलप्रयोगेण वा तैः युधिष्ठिरादिभि, हृतम् अधिकृतम, किम् कतमम, परम्, उत्कृष्टम्, मत्प्रार्थनया दीयते, युध्यमानैर्वा पाण्डवैरा ह्रियते, किमनयो श्रेष्ठ स्यादिति विचारणीयम् ॥ ३५ ॥

सर्वे—कथम् केन प्रकारेण पाण्डवा राज्यार्धं हरिष्यन्ति, वलात्कारेण बलपूर्वकेन नाम इति प्रश्नाशय:

भीष्मः—पौत्र दुर्योधन, अवभृथस्नानमात्रमेव इदम् केवलम् मखसमाप्तिमुपलक्ष्यविहितम् स्नानम् न द्यूतम् अत अस्मिन्कार्ये गुरुद्रोणस्यैव वचन ग्राह्यम न शकुनेर्वचनम ग्राह्यम् मित्रमुखस्य शत्रो कपटाचारी सुहृद शकुने वचनम कथनम न नहि श्रोतव्यम् आचरितव्यम अर्थात् मातुलस्य वचनम परित्यज्याचार्यकथनमादरणीयमिति । पश्य पौत्र अवलोकय—

व्याख्या—यत् सवनामबोधकसर्वनाम, द्रुपदराजसुतासहाय द्रौपद्या सह,

---

'अपने चचेरे भाईयो को उनका पैतृक राज्य लौटा दो, यह कथन कपटपूर्ण कैसे है ? मेरे मागने से उनका राज्य लौटा दो यह अच्छा होगा अथवा वे वल पूर्वक तुमसे अपना हक छीन लेगें यह अच्छा होगा ( सोच लो ) ॥ ३५ ॥

सव—वल पूर्वक क्यो ?

भीष्म—बेटा दुर्योधन, तुमने अभी ही यज्ञान्त स्नान किया है कपटी मित्र शकुनि का तुम विश्वास मत करो । देखो पौत्र,—जङ्गल मे धूलिधूसरितगात

कान्ताररेणुपरुषाः पृथिवीं भ्रमन्ति ।
यस्त्वं च तेषु विमुखस्त्वयि ते च वामा-
स्तत् सर्वमेव शकुनेः परुषावलेपः ॥ ३६ ॥

दुर्योधन — भवतु, एवं तावदाचार्यं पृच्छामि ।

द्रोणः—पुत्र ! कथय ।

दुर्योधन —

यत् पुरा ते सभामध्ये राज्ये माने च धर्षिता ।

---

पाण्डवाः पाण्डुपुत्राः, कान्ताररेणुपरुषाः वनधूलिधूसराः, पृथिवीम् धरित्रीम्, भ्रमन्ति पर्यटनं कुर्वन्ति, यत् च पुनः, त्वम्, भवान्, तेषु पाण्डवादिषु, विमुखः प्रतिकूलः, च पुनः, ते पाण्डवाः, त्वयि दुर्योधने, वामाः विपरीताः, तत्, सर्वम्, सकलम्, एव शकुनेः तव मातुलस्य, परुषः कठोरः, अवलेपः गर्वः । जगति एवंविधः कः प्राणी यः सुखानि उपभोक्तुं नाभिलषते । पाण्डवानामप्यन्तःकरणे एवंविधोत्कटा भूयः जरीजृम्भते यत् तेषां सविधे जगतः सकलसुखसाधनानि स्युः । समग्रस्यापि भूमण्डलस्य प्रभुत्वम् स्वायत्तं विधाय सानन्दं विहरेयुः । किन्तु शकुनेर्गर्ववशादेव तव पारस्य पाण्डवानां चेयम् हीना दशा जाता, अतः शकुनेः कथनम् विहाय पाण्डवेषु पवित्रहृदयो भवेति भावः ॥ ३६ ॥

**दुर्योधनः**—भवतु यातु, एवम् इत्थम्, तावदित्यवधारणे, आचार्य हे गुरुदेव, पृच्छामि भवतः एव ज्ञातुमिच्छामि ।

**द्रोणः**—पुत्र तनय, कथय वद—

**व्याख्या**—यत्पुरा द्यूतक्रीडासमये, ते पाण्डवाः, सभामध्ये अक्षक्रीडा-

---

पत्नी के साथ पाण्डवगण दर-दर की ठोकरें खाते फिर रहे हैं। वे आज तुमसे विमुख हैं या तुम उनके विपरीत हो, इन सारे उपद्रवों की जड़ शकुनि का अभिमान है ॥ ३६ ॥

**दुर्योधन**—अच्छा गुरुदेव, मैं आप से ही पूछता हूँ ।

**द्रोण**—पूछो बेटा,

**दुर्योधन**—यदि पाण्डव इतने बली हैं तो जिस समय सभा में उनके राज्य

बलात्कारसमर्थैस्तैः किं रोषो न धारितस्तदा ॥ ३७ ॥

द्रोण.—अत्रेदानीं धर्मच्छलेन वञ्चितो द्यूताश्रयवृत्तिर्युधिष्ठिरः प्रष्टव्यः,

येन भीमः सभास्तम्भं तोलयन्नेव वारितः।

यद्येकस्मिन् विमुक्तः स्यान्नास्मान्छकुनिराक्षिपेत् ॥ ३८ ॥

भीष्मः—अन्यत् प्रस्तुतमन्यदापतितम् । भो आचार्य ! कार्यमत्र गुरुतर, न कलहः।

---

सभायामेव, राज्ये राज्यापहारे, माने पितामहादिश्रेष्ठजनसमक्षद्रौपद्याः केशवस्त्राकर्षणादिना प्रतिष्ठायाः च घर्षिता अपमानिता, तदा तस्मिन्नेवकाले, बलात्कारसमर्थैः बलप्रयोगसमर्थै, तैः पाण्डवैः, रोषः क्रोधः किं किमर्थं धारितः ॥

**द्रोणः**—अत्र अस्मिन् विषये, इदानीम् अधुना, धर्मव्याजेन, वञ्चितः प्रचारितः, द्यूताश्रयवृत्तिः अक्षक्रीडाप्रेमी, युधिष्ठिरः पाण्डवाग्रज, प्रष्टव्यः जिज्ञासितव्यः।

**व्याख्या**—येन युधिष्ठिरेण, भीमः पाण्डवद्वितीयः, सभास्तम्भम् सभाकक्षस्तम्भम्, तोलयन् परीक्षमाण, एव यथास्यात्तथा, वारितः अवरोधित यदि स्यात्, एकस्मिन् द्यूतसभारम्भे, युधिष्ठिरेण विमुक्तः स्वेच्छया व्यवहर्तुमाज्ञप्त स्यात् तदा शकुनि- अधुना अस्मान् द्रोणादीन्, न नहि, आक्षिपेत् अधिक्षिपेद् ॥३८॥

**भीष्मः**—अन्यत् अपरम्, प्रस्तुतम्, अन्यत् अपरम्, आपतितम् जातम्, भो आचार्य हे उपाध्याय, कार्यम् करणीयम्, अत्र अस्मिन् विषये गुरुतर- श्रेष्ठतरः न नहि, कलहः शिष्यविरोधः उचितमिति भाव.।

---

तथा मान का अपहरण कर उन्हें अपमानित किया गया था, उस समय उन्होंने अपना रोष क्यों छिपा लिया था ? क्यों नहीं अपना बल प्रदर्शित किया था ? ॥३७॥

**द्रोण**—इस सम्बन्ध में धर्म के नाम पर ठगे गये द्यूतव्यसनी युधिष्ठिर से ही पूछ लो—

सभा भवन के स्तम्भों को उखाड़कर जब भीम इस अन्याय के विरुद्ध तुम सभी पर प्रहार करना चाह ही रहा था कि इसी युधिष्ठिर ने इशारे से उसे रोक दिया। केवल यदि उसी काम के लिए भीम को वह नहीं रोकता तो शायद आज इस तरह हम पर आक्षेप करने के लिए शकुनी बचे नहीं रहते ॥ ३८ ॥

**भीष्म**—कहाँ की बात कहाँ आ पड़ी ? आचार्य, काम की बात करें, झगड़ना तो बाद में भी होगा।

द्रोणः—माऽत्र कर्दनं कार्यं, कलह एव भवतु ।
भीष्मः—प्रसीदत्वाचार्यः । पश्य पौत्र ।

ये दुर्बलाश्च कृपणाश्च निराश्रयाश्च
त्वत्तश्च साम मृगयन्ति न गर्वयन्ति ।
ज्येष्ठो भवान् प्रणयिनस्त्वयि ते कुटुम्बे
तान् धारयिष्यसि मृगैः सह वर्तयन्तु ॥ ३९ ॥

---

द्रोणः—मा इति निषेधे, अत्र अस्मिन् विषये, कर्दनम् दैन्यपूर्वकम् राज्ययाच्ञा, कार्यम् करणीयम्, कलह एव भवतु क्रोधसूचिका द्रोणस्येयमुक्तिः अर्थात् न्याययुद्धमेव जायतामिति ।

भीष्म.—प्रसीदतु प्रसन्नो भवतु आचार्यो गुरुद्रोण, पश्य अवलोकय च पौत्र दुर्योधन ।

व्याख्या—ये पाण्डवा, दुर्बला. शक्तिहीना, च पुन कृपणा दैन्या, निराश्रया: असहाया, च पुन., त्वत्त. त्वत्समीपात्, साम सान्त्वना मृगयन्ति अभिलषन्ति याचयन्ति वा, न च नहि गर्वयन्ति गर्वम् कुर्वन्ति, भवान् त्वम् तेभ्य: ज्येष्ठ' वयसाऽधिक', च पुन' ते पाण्डवा, त्वयि दुर्योधने, प्रणयिन: अनुरक्ता:, अतस्त्वम तान् पाण्डवान्, कुटुम्बे स्वकीयपरिवारे धारयिष्यसि स्थानं दास्यसि, अथवा वा, ते पाण्डवा', मृगैः हरिणै:, सह सार्धम्, वर्तयन्तु तिष्ठन्तु । वसन्ततिलकावृत्तम् ॥

विचार्यताम् इदं जगत्, इमे सम्बन्धिन', इमे पुत्रकलत्रादय', इमा सम्पदः, इदम् भवनम्, इयम् धरा, इद सकलं साम्राज्य, एवा चं प्रभुता सर्वम् विहाय एकस्मिन्नहनि गन्तव्यमापतति । अतो विचार्यताम् ये युधिष्ठिरादयः शक्तिहीना. सन् त्वया सान्त्वनम् याचयन्ति तेभ्यः जीविकासाधनस्वरूपम् राज्यार्द्धम् प्रदानमुचितमथवा तदुपेक्षणम् युक्तिमिति भाव: ॥

---

द्रोण—यहाँ कायरता दिखलाना ठीक नही, कलह करना ही ठीक है ।

भीष्म—माफ करो आचार्य, पौत्र देखो—

अभी पाण्डव शक्तिहीन हैं, दु.खी हैं, आश्रयरहित हैं, तुम्हारे प्रति प्रेम रखते हैं, तुमसे शान्ति की याचना करते हैं, छोटे हैं तुम्हारे सामने कभी गर्व नही करते, ऐसी स्थिति मे तुम्ही बतलाओ उन्हे अपने परिवार मे धारण दोगे या यो ही जङ्गली हिरणों के साथ घूमने के लिए छोड दोगे ॥ ३९ ॥

शकुनि'—वर्तयन्तु वर्तयन्तु ।

कर्ण.—भो आचार्य ! अलममर्षेण । दुर्योधनो हि नाम,

हितमपि परुषार्थं रुष्यति श्राव्यमाणो
परपुरुषविशेषं नेच्छति स्तूयमानम् ।
गतमिदमवसानं रक्ष्यतां शिष्यकार्यं
गज इव बहुदोषो मार्दवेनैव वाह्य ॥ ४० ॥

---

**शकुनि**—वर्तयन्तु वनेतिष्ठन्तु, वर्तयन्तु वन्यजन्तुभि सह सदा वने एव तिष्ठन्तु ।

**कर्ण**—भो आचार्य, हे गुरुदेव, अलम् व्यर्थम्, अमर्षेण क्रोधेन, दुर्योधनो हि नाम—

**व्याख्या**—परुषार्थम् अवभाषितम्, श्राव्यमाण उच्यमान सन् हितमपि परिणामसुखकरमपि, रुष्यति कोप करोति, परपुरुषविशेषम् गुणातिशयशालिन श्रेष्ठजनम्, स्तूयमानम् प्रशस्यमानम् न नहि, इच्छति अभिलषति, इदम् एत द्विषयम्, अवसानम् समाप्तप्रायम्, गतम् जातम्, शिष्यकार्यम् दुर्योधनकृते यागसम्पादनरूपम् कृत्यम्, रक्ष्यताम् विधीयताम्, अय हि दुर्योधन बहुदोष बहुदोषयुक्त , गज , द्विप , इव यथा, मार्दवेनैव मृदुतायुक्तेनैव, ग्राह्य ग्रहणीय पाठान्तरे वाह्य. वहनीयेति भाव । स्वभावेन दुर्योधन असहिष्णुरस्ति अत-एव-मेव शान्तिमवलम्ब्य यज्ञान्ते दीयमानदक्षिणाग्रहणञ्च करोतु । अस्मिन् श्लोके उपमालकार., मालिनी वृत्तञ्च ॥ ४० ॥

---

**शकुनि**—जङ्गल मे हिरणो के साथ ही ये रहे ।

**कर्ण**—हे गुरुदेव, आप क्रोध न करें । दुर्योधन—

दुर्योधन कठोर शब्दो मे कही गई हित की बातो को सुनकर भी क्रुद्ध हो जाता है। यह अत्यन्त स्वाभिमानी व्यक्ति है। दूसरो की प्रशसा सुनकर भडक उठता है अब यह बात समाप्त हो चुकी है. अपने शिष्य का हित साधन करें, मतवाले हाथी को फुसला कर ही वश मे किया जा सकता है, दुर्योधन को भी मृदुता से ही मनाइए, झगडने से भला क्या लाभ आचार्य ! ॥ ४० ॥

द्रोणः—वत्स ! कर्ण ! तेजस्वि ब्राह्मण्यम् । काले सम्बोधितोऽस्मि । एषोऽहं भवच्छन्दमनुवर्ते । पुत्र ! दुर्योधन ! अहं तव प्रभावी ननु ।

भीष्मः—एष इदानीं मार्गेणारब्धः । सान्त्वं हि नाम दुर्विनीतानामौषधम् ।

दुर्योधनः—न ममैव, कुलस्यापि मे भवान् प्रभुः ।

द्रोणः—एतत् तवैव युक्तम् । नतु पुत्र !

त्वं वञ्च्यसे यदि मया न तवात्र दोष-

---

*द्रोण*—वत्स पुत्र, कर्ण अङ्गाधिपते, तेजस्वि उग्रस्वभावम्, ब्राह्मण्यम् द्विजत्वम्, तेन मया तथोक्तमिति । काले यथोचिते समये, सम्बोधित प्रबोधित, अस्मि भवामि । एष एतत्, भवच्छन्दम् भवदीयाशयम्, अनुवर्ते अनुसरामि पुत्र हे पुत्र, दुर्योधन गान्धारीतनय, अहम् द्रोण, तव भवतः, प्रभावी ननु तव कथनं युक्तितरम् मन्ये इति भाव ।

**भीष्म**—एष इदानीम् अधुना, मार्गेण उचितरीत्या, आरब्ध. सम्यक् रूपेण समारम्भित, सान्त्वम् मार्दवम् हि यत, ननु निश्चयार्थकमव्ययम् । दुर्विनीतानाम् दुष्टानाम् औषधम् शमनमिति ।

**दुर्योधन**—न नहि, ममैव दुर्योधनस्यैव, कुलस्यापि सम्पूर्णवंशस्यापि, भवान् त्वम्, मे मम, प्रभुः शास्तेति—

**द्रोण**—एतत् इदम् वचनम्, तव भवतः एव युक्तम् उचितम्, तत् तस्मात्, पुत्र वत्स ।

व्याख्या—यदि चेत्, त्वम् दुर्योधन, मया द्रोणेन वञ्च्यसे प्रतार्यसे तर्हि, अत्र अस्मिन्विषये, तव भवत, दोषः अपराध, न नहि, यदि चेत्-वाऽथवा त्वाम् दुर्योधन

---

द्रोण—बेटा कर्ण, ब्राह्मण प्रकृत्या तेजस्वी होते है, तुमने समय पर ही याद दिलाई है, मैं तुम्हारी इच्छा के अनुसार ही करूँगा । बेटा दुर्योधन, क्या मेरा तुम पर कुछ अधिकार है या नहीं ।

भीष्म—अब ये रास्ते पर चल रहे हैं । दुष्टों की दवा कोमलता ही है ।

दुर्योधन—अकेले मुझ पर ही नहीं, हमारे सम्पूर्ण वंश पर आपका अधिकार है आचार्य ।

द्रोण—ये बातें तुम्हारे ही अनुकूल है बेटा—

ऐसी स्थिति में यदि मैं तुम्हें ठगता हूँ तो लोग मुझे ही दोष देंगे अथवा

स्त्वां पीडयामि यदि वास्तु तवैप लाभ. ।
भेदाः परस्परगता हि महाकुलाना – –
धर्माधिकारवचनेपु नमीभवन्ति ॥ ४१ ॥

दुर्योधन —तेन हि समर्थयितुमिच्छामि ।

द्रोण —पुत्र ! केन समर्थयितुमिच्छसि ?

भीष्मेन कर्णेन कृपेण केन किं सिन्धुराजेन जयद्रथेन ।
किं द्रौणिनाऽऽहो विदुरेण सार्धं पित्रा स्वमाता वद पुत्र ! केन ॥४२॥

---

पीडयामि दक्षिणारूपेण राज्यार्द्धं पाण्डवेभ्यो दापयामि तदा एप एतद्, लाभ उपलब्धि, तव भवत एव, अस्तु भवतु, महाकुलानाम् उच्चकुलोत्पन्नानाम् भवादृशानाम् जनानाम् परस्परगताः अन्योन्यप्राप्ता. हि यत., भेदा वैमनस्या, धर्माधिकारवचनेपु आप्तकथनेपु, शमीभवन्ति प्रशमनम् यान्ति । त्वादृशानाम् महाकुलसम्भूतानाम् जनानाम् मङ्गलाय सुखशान्तिपूर्वकम् तेषाम् जीवनम् जगति व्यतीयात्, बन्धुविग्रहोऽपि प्रशमन यातु इत्येतत् प्रयोजनेन गुरुजनोपदेशो भवति । तेनैवोपदेशेन पारस्परिकविरोधा. प्रशमनम् यान्तीति भावः । अस्मिन् श्लोके वसन्ततिलकावृत्तम् ॥ ४१ ॥

**दुर्योधनः**—तेन कारणेन, हि इति निश्चयेन, समर्थयितुम् अनुमोदन प्राप्तुम् वाञ्छामि ।

**द्रोणः**—पुत्र हेवत्स, केन पुरुषविशेषेण, समर्थयितुम् सम्मति प्राप्तुम्, इच्छसि अभिलपसि—

**व्याख्या**—भीष्मेण गङ्गापुत्रेण, कर्णेन अङ्गाधिराजेन कृपेण कृपाचार्येण, सिन्धुराजेन सिन्धुदेशाधिपतिना जयद्रथेन, किम् किम्वा, द्रौणिना अश्वत्थाम्ना, आहो इति

---

यदि तुम्हे पीडा पहुँचाता हूँ तो उससे भी तुम्हे ही लाभ होगा । क्योंकि उच्चकुलोत्पन्न महापुरुषों का पारस्परिक कलह गुरुजनो के आप्त वचनो से ही शान्त होता है ॥ ४१ ॥

**दुर्योधन**—मैं इसका समर्थन चाहता हूँ ।

**द्रोण**—बेटा, किसकी सम्मति लेना चाहते हो ?

पितामह भीष्म का, कर्ण, कृपाचार्य, सिन्धुराज जयद्रथ, अश्वस्थामा, विदुर

द्रोणः—वत्स !

क्रोधप्रायं वयो जीर्णं क्षन्तव्यं वटुचापलम् ।
अस्य रूक्षस्य वचसः परिष्वङ्गः शमीक्रिया ॥ ४३ ॥

भीष्मः—( आत्मगतम् )

एष शिष्यस्य वात्सल्याच्छकुनिं याचते गुरुः ।
एवं सान्त्वीकृतोऽप्येष नैव मुञ्चति जिह्मताम् ॥ ४४ ॥

शकुनिः—( आत्मगतम् ) अहो शठः खल्वाचार्यः, स्वकार्यलोभान्मां सान्त्वयति ।

---

द्रोणः—वत्स पुत्र ।

**व्याख्या**—जीर्णम् जराग्रस्तम् विशीर्णम्, वयः आयुः, क्रोधप्रायम् कोपाविष्टम्, तत् वटुचापलम् शिशुजनोचितम् चाञ्चल्यम् कटुवचनप्रयुक्तात्मकम् क्षन्तव्यम् मर्षितव्यम् अस्य पूर्वकथितस्य द्रोणस्य रूक्षस्याप्रियस्य कठोरस्य वचसः कथनस्य परिष्वङ्गः आश्लेषः, एव शमीक्रिया शान्तिसाधनम् भवतीतिशेषः ॥ ४३ ॥

भीष्मः—( आत्मगतम् स्वगतम् )

**व्याख्या**—एषः, असौ, गुरुः, आचार्यः, शिष्यस्य, अन्तेवासिनः, वात्सल्यात्, वत्सलभावात् हेतोः शकुनिम्, दुर्योधनमातुलम्, याचते प्रार्थयते, किन्तु, एवम् इत्थम्, सान्त्वीकृतः कृपापूर्वं केनानुनीतोऽपि एषः शकुनिः, जिह्मताम् निजकुटिलताम्, नैव मुञ्चति जहातीत्यर्थः ॥ ४४ ॥

शकुनिः—( आत्मगतम् स्वगतम् ) अहो इत्याश्चर्यम्, शठः धूर्तः, खलु

---

द्रोण—बेटा,

बुढौती में लोगों को क्रोध जल्दी ही आजाता है। इसलिए क्रोधावेश में मैंने तुमसे जो कुछ भी कटुवचन कहा है उसे भूल जाओ। आओ, उस गलती के लिए तुम्हें गले लगाता हूँ ॥ ४३ ॥

भीष्म—( स्वगत )

हाय, शिष्य के प्रति स्नेह होने के कारण ही आचार्य शकुनि को इस तरह मना रहे हैं किन्तु, यह दुष्ट इस तरह मनाये जाने पर भी अपनी कुटिलता नहीं छोड़ता है ॥ ४४ ॥

शकुनि ( अपने आप ) अरे, आचार्य तो प्रपंची है, अपने काम की सिद्धि के

( सर्वे परिक्रम्योपविशन्ति )

दुर्योधन:—मातुल ! पाण्डवानां राज्यार्धं प्रति को निश्चयः ?

शकुनि:—न दातव्यमिति मे निश्चयः ।

दुर्योधन:—दातव्यमिति वक्तुमर्हति मातुलः ।

शकुनि:—यदि दातव्यं राज्यं किमस्माभिः सह मन्त्रयसे । ननु सर्वमेव प्रदीयताम् ।

दुर्योधन:—वयस्य ! अङ्गराज ! भवानिदानीं न किञ्चिदाह ।

---

निश्चयेन, आचार्यः द्रोण, स्वकार्यलोभात् निजकार्यसाधनतत्परत्वात्, माम् शकुनिम्, सान्त्वयति मृदुवचनैः सम्बोधयति ।

सर्वे सकलजनाः, परिक्रम्य भ्रमणं कृत्वा, उपविशन्ति तिष्ठन्ति

दुर्योधन —मातुल मम, पाण्डवानां पाण्डुपुत्राणाम्, राज्यार्धम् राज्यस्यार्धभागम्, प्रतिदानम्प्रति, को निश्चयः मतः कः निर्णयः ?

शकुनिः—न नहि, दातव्यम् देयम्, इति इत्थम्, मे शकुनेः, निश्चयः निर्णयः ।

दुर्योधनः—दातव्यम् दातुम् योग्यम्, इति इत्थम्, वक्तुम् कथयितुम्, अर्हति शक्नोति, मातुल मातुः भ्राता,

शकुनि —यदि चेत्, दातव्यं त्वया दातुम् निश्चितम् राज्यं राज्यार्धभागम्, किम् कथम्, अस्माभिः शकुन्यादिभिः, सह सार्धम्, मन्त्रयसे विचारं करोषि नन्विति प्रश्ने, सर्वमेव सकलराज्यमेव, प्रदीयताम् तेभ्यः दीयताम् ।

दुर्योधन —वयस्य मित्र, अङ्गराजकर्ण, भवान् त्वम्, इदानीम् अधुना, न नहि, किञ्चित् किमपि, आह कथयति वदसि ?

---

लिए मुझे इस तरह मना रहे हैं ।

( सभी घूमकर बैठ जाते हैं )

दुर्योधन—मामाजी, पाण्डवों को राज्यार्द्ध देने के सम्बन्ध में आपकी क्या राय है ?

शकुनि—मेरा अन्तिम निर्णय है कि उन्हें कुछ नहीं देना चाहिए ।

दुर्योधन—मामाजी, आपको तो कहना चाहिए कि उन्हें देना उचित है ।

शकुनि—यदि देना ही है तो फिर हमसे विचार क्यों पूछते हो ? सारा राज्य ही दे डालो ।

दुर्योधन—मित्र कर्ण, तुम अपना अभिमत क्यों नहीं व्यक्त करते ?

कर्ण —इदानीं किमभिधास्यामि,

रामेण भुक्तां परिपालितां च सुभ्रातृतां न प्रतिषेधयामि ।
क्षमाक्षमत्वे तु भवान् प्रमाणं सङ्ग्रामकालेषु वयं सहायाः ॥ ४५॥

दुर्योधन —मातुल ! बलवत्प्रत्यमित्रोऽनुपजीव्यश्च कश्चित् कुदेशश्चिन्त्यताम् । तत्र वसन्तु पाण्डवाः ।

शकुनि —हन्त भो !

---

कर्ण —इदानीम् अधुना, किम् अभिधास्यामि वक्ष्यामि ।

व्याख्या—रामेण दाशरथिना, भुक्ताम् अनुभूताम्, सुभ्रातृताम् सुष्ठुरूपेण भ्रातृभावम्, परिपालिताम् सर्वतोभावेन रक्षिताम्, न नहि, प्रतिषेधयामि निषेधयामि, क्षमाक्षमत्वे 'राज्यस्यार्धभाग देयमदेयम् वेति निर्णये, भवान् त्वम् स्वयमेव प्रमाणम् निर्णायक', वयम् तु कर्णादिकास्तु, सङ्ग्रामकालेषु यदा समरो भविष्यति तदातस्मिन् काले, सहायाः सहायकरूपेण उपस्थिता भवाम ॥ ४५ ॥

दुर्योधन —मातुल हे माम, बलवत्प्रत्यमित्र सशक्तशत्रुभिर्युक्त अनुपजीव्य जीविकाप्रदानेऽक्षम कश्चित् कोऽपि, कुदेश कुत्सितप्रदेश, चिन्त्यताम् विचार्यताम्, तत्र तस्मिन्नेव स्थाने वसेयु निवास कुर्यु, पाण्डव पाण्डो पञ्चपुत्रा ।

शकुनि —हन्त भो इति खेदे,

---

कर्ण—भला इस पर मैं तुम्हें क्या कहूँ ?

भगवान् राम की तरह अगर तुम भ्रातृत्व के सुख का उपभोग करना चाहो तो मैं भला उसका निषेध क्यों करूँ ? जहाँ तक राज्य देने या न देने का प्रश्न है इनमें तुम पूर्ण स्वतन्त्र हो, हाँ, युद्ध छिड जाने पर मैं तुम्हारा साथ दूँगा, यह निश्चित है ॥ ४५ ॥

दुर्योधन—शक्तिशाली शत्रुओं से घिरा कोई कुदेश जो जीविका देने में असमर्थ हो वहाँ पाण्डव निवास करें ।

शकुनि—खेद है—

शून्यमित्यभिधास्यामि कः पार्थाद् बलवत्तरः ?
ऊषरेष्वपि सस्य स्याद् यत्र राजा युधिष्ठिरः ॥ ४६ ॥

दुर्योधन —अथेदानी,

गुरुकरतलमध्ये तोयमावर्जितं मे
श्रुतमिह कुलवृद्धैर्यत् प्रमाण पृथिव्याम् ।
तदिदमपनयो वा वञ्चना वा यथा वा
भवतु नृप । जल तत् सत्यमिच्छामि कर्तुम् ॥ ४७ ॥

---

व्याख्या—शून्यम् नकारात्मकम् उत्तरम्, अभिधास्यामि दास्यामि यत पार्थात् अर्जुनात्, कः पुरुषविशेषः, बलवत्तर समधिकबल ? ऊषरेष्वपि अनूर्वरेष्वपि सस्यसमृद्धिम्, स्यात् भवेत्, यत्र यस्मिन् देशे, राजा नृपतिः, युधिष्ठिर धर्मराज, अस्तीति । त्वया कुदेश, चिन्त्यताम् इति कृतस्यानुरोधस्योत्तरे शून्यमित्यभिधास्यामि । जीवा स्वकीये जीवने यादृश कर्म आचरन्ति तादृशमेव फलमपि लप्स्यन्ते, सन्ति कर्माण्येव जीवनघटकानि । पाण्डवा सतत जीवन सुत्तम सर्वविध तथा समुन्नत च कर्तुं शुभान्येव कर्माणि कुर्वन्ति । अत धर्ममूर्त्तेर्युधिष्ठिरस्य स्वामित्वमात्रेण कुदेशस्यापि उर्वरत्व भवति । अर्जुनापेक्षया न कोऽपि बलवत्तर अत कस्मिश्चिदपि देशे दीयमाने तेषा प्रभावातिशयात्स्यादेवोन्नति ॥ ४६ ॥

दुर्योधनः—अथ अनन्तरम्, इदानीम् अधुना—

व्याख्या—गुरुकरतलमध्ये आचार्यद्रोणस्य हस्ते, तोयम् सलिलम्, आवर्जितम्, इह अस्मिन्विषये, मे मम, कुलवृद्धै भीष्मप्रभृतिपुराणपुरुषै, श्रुतम् अवगतम् यत् जलदानम् पृथिव्याम् भुवि, प्रमाणम् प्रसिद्धम्, तत् तस्मात्, इदम् एतत्, अपनय दुर्नीति, वा अथवा वञ्चना प्रतारणा, यथा येन प्रकारेण वा भवतु जातु, नृप हे राजन्, तत् तस्मात्, जलम् सलिलम्, सत्यम् प्रमाणितम्

---

ऐसा कोई देश नही जहाँ अर्जुन से अधिक बलशाली उसका शत्रु हो या जहाँ युधिष्ठिर का साम्राज्य हो वहाँ की भूमि उपजाऊ बन जाय ॥ ४६ ॥

दुर्योधन—अच्छा तो अब

हे राजन् मैंने गुरुदेव के हाथो मे दान का जल छोड दिया है। इसे आप अनीति कहें या ठगी । मैंने कुल वृद्धो से सुना है, शास्त्रों से जाना है कि यह जल

दूतः—विषादेनावृतो नोपगच्छति ।

सर्वे—कस्तस्य विषादः ?

दूतः—श्रोतुमर्हति महाराजः । यत् तत्सम्बन्धि सन्निकृष्टं कीचकानां भ्रातृशतं,

> रात्रौ छन्नेन केनापि बाहुभ्यामेव हिंसितम् ।
> दृश्यते हि शरीराणामशस्त्रजनितो वधः ॥ ५१ ॥

सर्वे—कथमशस्त्रजनितो वध इति ।

---

**दूतः**—विषादेन कष्टेन पीडया वा आवृतः पीडित, न नहि, उपगच्छति आयातीति भावः ।

**सर्वे**—कः कुतः, तस्य विराट्नृपते, विषादः कष्टम् ?

**दूतः**—श्रोतुम् आकर्णितुम्, अर्हति शक्नोति, महाराजः नृपतिः । यत् तत्सम्बन्धि विराट् नृपते. आत्मीयजन., सन्निकृष्टम् अत्यासन्नम्, कीचकानाम् भ्रातृशतम् शतसंख्यका. कीचकाः ।

**व्याख्या**—रात्रौ निशीथे, छन्नेन गुप्तरूपेण, बाहुभ्यामेव करमुष्ट्यादिभ्यामेव केनापि अपरिचितेन जनेनापि, हिंसितम् मारितम्। केवलमुष्ट्याघातेनैव शतसंख्यकाः विराट्श्याला' कीचकबन्धवः केनापि हताः। मुष्ट्याघातहनने प्रमाणमाह—दृश्यत इति । शरीराणाम्मृतकीचकदेहाना अशस्त्रजनितः शस्त्राघातरहित, वध. मारणम्, दृश्यते अवलोक्यते । तेषा मृतशरीरे शस्त्राघातजनितचिह्नानामनुपलब्धि. । तेन बाहुभ्यामेव हिंसित इति भावः ॥ ५१ ॥

**सर्वे**—कथम् केन प्रकारेण, अशस्त्रजनित' शस्त्राघातरहित, वध. हिंसा इति ।

---

**दूत**—नही श्रीमान् वे अभी कुछ कष्ट मे पड़े हैं ।

**सभी**—उन्हे क्या तकलीफ है दूत !

**दूत**—तो सुने महाराज, उनके निकट सम्बन्धी सौ भाई कीचको का—

किसी ने रात मे ही हाथो से वध कर डाला है । क्योकि मृतकों के शरीर पर किसी तरह के शस्त्राघात के कोई चिह्न नहीं हैं ॥ ५१ ॥

**सभी**—क्या कहा, विना हथियार के ही उन सबो की हत्या कर दी गई ?

भीष्म —कथमशस्त्रेणेति । ( अपवार्य ) भो आचार्य ! अभ्युपगम्यतां पञ्चरात्रम् ।
द्रोण —( अपवार्य ) किमर्थम् ?
भीष्म —

भीमसेनस्य लीलैषा सुव्यक्तं बाहुशालिनः ।
योऽस्मिन् भ्रातृशते रोषः स तस्मिन् कीचके गतः ॥ ५२ ॥

द्रोण —कथं भवान् जानाति ?
भीष्म —

कथं पण्डित ! कूलेषु भ्रान्तानां बाल्यचापलम् ।

---

भीष्म —कथम् इति प्रश्ने, अशस्त्रेणेति शस्त्रप्रयोगं विनैव मारिताः कीचका इति आश्चर्यस्य विषयः । ( अपवार्य ) भो आचार्य हे द्रोण, अभ्युपगम्यताम् स्वीक्रियताम्, पञ्चरात्रम् पञ्चरात्रेणैवान्विष्योपलब्धव्याः पाण्डवा इति ।

द्रोण —अपवार्य—अन्ये न शृणुयुरिति बुद्ध्याभिपताककरेणावृत्य मुखमिति बोध्यम् । किमर्थम् एतस्य कथनस्य किमाशय ।

व्याख्या—एषा श्रूयमाणा, लीला क्रीडा, बाहुशालिनः अतिशक्तिशालिनः, भीमसेनस्य पाण्डवद्वितीयस्य, सुव्यक्तम् स्पष्टं प्रतिभाति, अस्मिन् कौरवे, भ्रातृशते शतसंख्यकेषु भ्रातृषु यः रोषः क्रोधविशेषः, स असौ तस्मिन् शते कीचकादौ सूतार्यगाम् गतः । भीमादतिरिक्तः न कोऽप्यन्य एवं कर्तुम् समर्थं इति ॥५२॥

द्रोण —कथम् केन प्रकारेण, भवान् श्रीमान्, जानाति अवगतोऽसि ?

व्याख्या—पण्डित हे बुद्धिमन् द्रोण, कूलेषु, तटेषु, भ्रान्तानाम् भ्रमताम्, वत्सानाम्, वाल्यवृषभानाम्, बाल्यचापल्यम् शैशवजन्यचाञ्चल्यम्, शृङ्गस्था-

---

भीष्म—क्यों बिना हथियार के ही ( एक ओर मुँह करके ) आचार्य, अब आप पाँच रात के भीतर पाण्डवों का पता लगाने वाली शर्त स्वीकार कर लें ।

द्रोण—( एक ओर मुँह करके ) क्यों ?

भीष्म—निश्चय ही अनन्य पराक्रमी भीम के हाथों का यह खेल है । सौ भाई कौरवों पर जो उसका क्रोध था उसे उसने उन सौ भाई कीचकों पर ही उतारा ॥ ५२ ॥

द्रोण—यह आप कैसे जानते हैं ?

भीष्म—जानता हूँ आचार्य, किनारे पर दौड़ लगाने वाले बछड़ों

नाभिजानन्ति वत्सानां शृङ्गस्थानानि गोवृपाः ॥ ५३ ॥

द्रोणः—गोवृषा इति । हन्त ! सिद्धं कार्यम् । (प्रकाशम्) पुत्र ! दुर्योधन !
अस्तु पञ्चरात्रम् ।

दुर्योधनः—अथ किम् । अस्तु पञ्चरात्रम् ।

द्रोणः—भो भो यज्ञमनुभवितुमागता राजानः ! शृण्वन्तु शृण्वन्तु भवन्तः !
इहात्रभवान् कुरुराजो दुर्योधनः, न, न, न, मातुलसहितः, यदि पाण्डवानां

नानि शृङ्गेण खननस्थानानि, गोवृपाः बलीवर्दाः, कथम् केन कारणेन, न नहि,
अभिजानन्ति अवगच्छन्ति ॥ अप्रस्तुतप्रशंसालङ्कार ॥ ५३ ॥

द्रोणः—गोवृषा इति वृषराज इति, हन्त इति प्रसन्नतायाम्, सिद्धम्
सफलम्, कार्यम् मनोरथम् (प्रकाशम् यथा स्यात् प्रकटम्) पुत्र हे सुत, दुर्योधन
गान्धारीसुत, अस्तु स्वीकृतम् तव पञ्चरात्रम् मया पञ्चरात्रेणैव पाण्डवा
अन्विष्योपलब्धव्या. ।

दुर्योधन—अथ किम् किमन्यत्, अस्तु भवतु पञ्चरात्रम् स्वीकार्यताम्
मदीयकथनम् ।

द्रोणः—भो भो इति सम्बोधने, यज्ञम् मखम्, अनुभवितुम् द्रष्टुम्, आगता
सम्प्राप्ता सम्मिलिता वा राजानः नृपतयः, शृण्वन्तु शृण्वन्तु सर्वे राजान
आकर्णयन्तु, भवन्तः श्रीमन्तः, इह अस्मिन्विषये, अत्रभवान् श्रीमान्, कुरुराज
कुरुदेशस्य नृपति, दुर्योधनः कौरवानामग्रजः, न न न नहि नहि, मातुलसहित
मातुः भ्रात्रा सहित, यदि चेत्, पाण्डवानाम् पाण्डुपुत्राणाम् प्रवृत्तिरन्वेतव्या

---

चञ्चलता और उसकी सींगो के उत्खनन स्थान को भला वृषराज कैसे नहीं
जानेगा ? ॥ ५३ ॥

द्रोण—वृषराज, तब तो काम बन गया (प्रकट) दुर्योधन, तुम्हारी पाँच
रातवाली बातें मुझे मंजूर है ।

दुर्योधन—अच्छी बात है तो रही पाँच रात की बात ।

द्रोण—इस यज्ञ मे भाग लेने वाले नृपतिगण आप लोग, कान खोलकर
सुनें, समादरणीय कुरुराज, नहीं-नहीं अपने मामा के साथ, महाराज दुर्योधन

प्रवृत्तिरुपनेतव्या, राज्यस्यार्धं प्रदास्यति किल, ननु पुत्र !

दुर्योधन —अथ किम् ।

द्रोणः—एतद् द्विस्त्रिः सम्प्रधार्यताम् ।

शकुनिः—काले ज्ञास्यामि ।

द्रोणः—ननु गाङ्गेय !

भीष्मः—( आत्मगतम् )

आचार्यस्य यदा हर्षो धैर्यमुत्क्रम्य सूचितः ।
शङ्के दुर्योधनेनैष वञ्च्यमानेन वञ्चितः ॥ ५४ ॥

---

समाचार प्राप्यते, राज्यस्यार्धम् अधिकृततराएविशेषस्वार्धभागम्, प्रदास्यति प्रदानं करिष्यति, किल निश्चयेन, नन्विति प्रश्ने, पुत्र हे सुत !

दुर्योधनः—अथ किम् कथमहि ? सत्यमिदम् कथनम् ।

द्रोण—एतत् वार्ता, द्वि द्विवारम्, त्रि निवारम् वा, सम्प्रधार्यताम् सम्यक् प्रकारेण धारणम् क्रियताम् ।

शकुनिः—काले समायाते समये, ज्ञास्यामि विचारम् करिष्यामि ।

द्रोण —नन्विति प्रश्नार्थे, गाङ्गेय हे गङ्गापुत्र भीष्म !

भीष्मः—( आत्मगतम् स्वगतम् )

व्याख्या—यदा यदि, आचार्यस्य गुरुद्रोणस्य, हर्षं प्रसन्नता, धैर्यम् गाम्भीर्यम् उत्क्रम्य अतिक्रमणम् कृत्वा, सूचितः प्रकटीकृतस्तेन शङ्के सम्भावयामि, एषः गुरुद्रोणः, वञ्च्यमानेन राज्यार्धविभाजने बाध्यमानेन दुर्योधनेन,

---

ने स्वीकार किया है यदि पाँच रात के भीतर पाण्डवों का पता लग जाय तो उन्हें राज्य का आधा भाग दे दिया जायेगा । क्यों बेटे ठीक है न ?

दुर्योधन—हाँ तो और क्या ?

द्रोण—इस बात पर दो-तीन बार विचार लो ।

शकुनि—समय आने पर सोच लूंगा ।

द्रोण—क्यों गाङ्गेय,

भीष्म—(स्वगत) आचार्य की प्रसन्नता सीमा पार कर गई है । अतः मुझे

( प्रकाशम् ) पौत्र ! दुर्योधन ! अस्ति मम विराटेनाप्रकाशं वैरम्, अथ च न यज्ञमनुभवितुमनागता इति । तस्मात् क्रियतां तस्य गोग्रहणम् ।

द्रोण —( अपवार्य ) भो गाङ्गेय ! प्रियशिष्य खलु मे तत्रभवान् विराटेश्वर। किमर्थं तस्य गोग्रहणम् ।

भीष्म —( अपवार्य ) ब्राह्मणार्जवबुद्धे !

धर्षिता रथशब्देन रोषमेष्यन्ति पाण्डवा ।

---

कुरुदेशाधिपतिना, वञ्चित प्रतारित । द्रोणस्यास्मिन्विषये प्रदर्शितातिहर्ष कदाचित् खेदे परिणतो भविष्यतीति भीष्मस्याशङ्का ॥ ५४ ॥

( प्रकाशम् स्पष्टम् ) पौत्र दुर्योधन, मम भीष्मस्य विराटेन विराटदेशाधिपतिना सह अप्रकाशम् आन्तरिकम् वैरम् विरोध, अस्ति, अथ अनन्तरम्, भवच्छ्रीमत, यज्ञम् मखम्, अनुभवितुम् द्रष्टुम्, अनागता न सम्मिलिता, तस्मात् कारणेन, तस्य विराटनृपते, गोग्रहणम् गवाम् पहरणम्, क्रियताम् निधीयतामिति।

**द्रोण** —( अपवार्य आच्छाद्य ) भो गाङ्गेय ! हे भीष्म, प्रियशिष्य प्रियोऽन्तेवासी, खलु निश्चयेन, मे मम, तत्रभवान् विराटेश्वर विराटनृपति, किमर्थम् केन कारणेन तस्य विराटनृपते गोग्रहणम् गोधनहरणमिति ।

**भीष्म** —( अपवार्य जनान्तिकम् ) ब्राह्मणार्जवबुद्धे निष्कपटाभिज्ञमतेऽस्मिन्,

**व्याख्या** —रथशब्देन स्यन्दनस्य घोषेण, धर्षिता आकृष्टकर्णा, पाण्डवा पाण्डुपुत्रा, रोषम् क्रोधम्, एष्यन्ति अभिप्यन्ते, तेषाम् युधिष्ठिरादीनाम्,

---

सन्देह है कि ठगे जाने वाले दुर्योधन से कहीं आचार्य स्वयं न ठगे जायें ॥५४॥

( प्रकट ) पौत्र दुर्योधन, विराट नरेश से हमारा आन्तरिक विरोध तो है ही, इस यज्ञ में उसने भाग नहीं लिया है तो क्यों न उसका गोधन अपहृत किया जाय ।

**द्रोण**—( एक ओर मुँह फेर कर ) अजी पितामह भीष्म, विराट नरेश तो मेरे प्रिय शिष्यों में एक है तो फिर उसका गोधन क्यों अपहृत करते हो ?

**भीष्म**—( मुँह फेर कर ) अरे ओ निश्छल ब्राह्मण देवता,

दुर्योधन के रथ की घरघराहट सुनकर ही पाण्डव भड़क उठेंगे, उनमें

अस्ति तेषां कृतज्ञत्वमिष्टं गोग्रहणे स्थितम् ॥ ५५ ॥

भटः—जयतु महाराजः। सज्जा खलु रथा नगरप्रवेशाभिमुखाय।

दुर्योधनः—

एभिरेव रथैः शीघ्रं क्रियतां तस्य गोग्रहः।
गदा यज्ञप्रशान्ता च पुनर्मे करमेष्यति ॥ ५६ ॥

द्रोणः—तस्मान्मे रथमानयन्तु पुरुषाः,—

---

कृतज्ञत्वम् उपकारज्ञत्वम्, अस्ति, गोग्रहणे गोधनहरणे, इष्टम् अभिलषितम्, उपस्थितमस्ति। अर्थात् विराटेनोपकृताः पाण्डवाः तस्य गवामपहरणे तूष्णीं भूत्वा स्थातुम् न शक्नुवन्ति, तत्प्रत्युपकारार्थं ते समराङ्गणे उपस्थिताः भविष्यन्ति। अतः अनेन गोग्रहणेन नः समीहितसिद्धिः संभविष्यतीति भावः ॥ ५५ ॥

भटः—जयतु विजयताम्, महाराजः नृपः दुर्योधनः, सज्जाः सुनियोजिताः, खलु निश्चयेन, रथाः स्यन्दनाः नगरप्रवेशाभिमुखाय हस्तिनापुरं प्रवेष्टुमानीताः स्यन्दनाः।

व्याख्या—एभिः सम्मुखे स्थितैः रथैः, स्यन्दनैः, एव शीघ्रम् त्वरितम् तस्य विराटनृपतेः, गोग्रहः गोधनापहरणम्, क्रियताम् विधीयताम्, च पुनः, यज्ञप्रशान्ता यज्ञावसरे प्रशान्ता परित्यक्तनिजव्यापारा, इयम् गदा मुद्गरम्, पुनः, मे मम, करम् हस्तम् एष्यति, अर्थात् पुनरप्यहम् हस्ते गदा नीत्वा युद्धाय समुद्यतो भवामि ॥ ५६ ॥

द्रोणः—तस्मात्, मे मम, रथम् स्यन्दनम्, आनयन्तु आहरन्तु, पुरुषाः राजभृत्याः।

---

कृतज्ञता तो है ही, वे सामने आजायेंगे और आपका काम अपने आप बन जायेगा समझे देवता ॥ ५५ ॥

भट—महाराज की विजय हो, नगर मे प्रवेशार्थ रथ तैयार है श्रीमन्।

दुर्योधन—बस, इसी रथ से विराट के गोधन का अपहरण किया जाय। यज्ञ के कारण शान्त बनी मेरी यह गदा फिर से मेरे हाथ मे चमके ॥ ५६ ॥

द्रोण—मेरा रथ लाओ।

शकुनि:— —हस्ती ममानीयतां,
कर्णः— भारार्थं भृशमुद्यतैरिह हयैर्युक्तो रथः स्थाप्यताम् ।
भीष्म:— बुद्धिर्मे त्वरते विराटनगरं गन्तुं धनुस्त्वर्यतां
सर्वे—
मुक्त्वा चापमिहैव तिष्ठतु भवानाज्ञाविधेया वयम् ॥ ५७ ॥
द्रोण —पुत्र ! दुर्योधन ! आवां तव युद्धे पराक्रमं द्रष्टुमिच्छाव. ।

---

शकुनिः—मम गान्धारनृपतेः, हस्तीगजः, समानीयताम् आनय ।

कर्णः—भारार्थम् भारम् वोढुम्, भृशम् अत्यर्थम्, उद्यतैः तत्परैः, इह अस्मिन् स्थाने, हयैर्युक्तः अश्वैः संयोजितः, रथः स्यन्दनः, स्थाप्यताम् आनीयताम्।

भीष्मः—मे मम भीष्मस्य, बुद्धिः प्रज्ञा, विराटनगरम् विराटनृपतेः राजधानीम्, गन्तुम् चलितुम् त्वरते शीघ्रताम् करोति, मम धनुः चापम् त्वर्यताम् शीघ्रमेव समानीयताम् ।

सर्वे—भवान् श्रीमान् चापम् धनुः, मुक्त्वा परित्यज्य, इहैव अत्रैव, तिष्ठतु स्थीयताम् वयम् सर्वे जनाः, आज्ञाविधेया श्रीमदाज्ञानुवर्त्तिनः । अस्मिन् कार्ये वयमेव पर्याप्ताः अस्मासु सत्सु श्रीमतः तत्र गमनमनुपयुक्तम् तस्मादत्रैव तिष्ठन्तु भवन्त इत्याशयः । शार्दूलविक्रीडितम् वृत्तम् ॥ ५७ ॥

द्रोणः—पुत्र हे सुत, दुर्योधन गान्धारीसुत, आवाम् अहम् भीष्मश्च, तव भवतः, युद्धे रणे, पराक्रम विक्रमम् पुरुषार्थम् वा, द्रष्टुम् अवलोकितुम्, इच्छावः अभिलषाव ।

---

शकुनि—मेरा हाथी सजाया जाय ।

कर्ण—भार ढोने मे समर्थ मजबूत घोडो वाला रथ मेरे लिए लाया जाय।

भीष्म—विराट नगर जाने के लिए मेरा मन चचल हो उठा है, शीघ्र मेरा धनुष लाओ ।

सभी—आप अपना धनुष रख दें, वहाँ जाने के लिए आप के वशवर्त्ती हम लोग ही पर्याप्त हैं ॥ ५७ ॥

द्रोण—बेटा दुर्योधन, हम लोग, रणाङ्गण में तुम्हारा पुरुषार्थ देखना चाहते हैं ।

दुर्योधन'—यदभिरुचितं भवते ।

द्रोण'—वत्स ! गान्धारराज ! अस्मिन् गोग्रहणे तव खलु प्रथमरथ' ।

शकुनि —बाटम् । प्रथम कल्प' ।

( निष्क्रान्ता सर्वे )

इति प्रथमोऽङ्कः ।

---

दुर्योधनः—यत् यथा, अभिलषितम्, भवते गुरवे ।

द्रोण'—वत्स सुत, गान्धारराज शकुनि, अस्मिन् एतस्मिन्, गोग्रहणे गोधन-हरणे, तव भवत', खलु निश्चयेन, प्रथमरथ' सर्वतोऽग्रे श्रीमत रथ एव गच्छतु ।

शकुनिः—बाटम् स्वीकृतम्, प्रथमः कल्प मुख्यो विषय ममैवेति प्रथमम् तावदिदम् कर्तव्यमिति । इति निष्क्रान्ता' सर्वे इति अङ्कसमाप्तिम् सूचयति । तदुक्त साहित्यदर्पणेऽङ्कलक्षणनिरूपणे—

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वल' ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसयुत' ॥
विच्छिन्नावन्तरै ......... .......... ।
प्रत्यक्षचित्रचरितैर्युक्तोभावरसोद्भवै. ।
अन्तनिष्क्रान्तनिखिल. पात्रोऽङ्क इति कीर्तित , इति ॥

इति विमलाव्याख्याया प्रथमोऽङ्क' ।

---

दुर्योधन—आप का जो आदेश ।

द्रोण—वत्स गान्धार नरेश, गोग्रहण में तुम्हारा रथ पहला होगा ।

शकुनि—अच्छी बात है, ठीक है ।

( सभी जाते हैं )

प्रथम अङ्क समाप्त

# अथ द्वितीयोऽङ्क.

( तत प्रविशति वृद्धगोपालक )

वृद्धगोपालक —गावो मेऽहीनवत्सा भवन्तु। अविधवाश्च गोपयुवतयो
( गावो मे अहीणवच्छा होन्तु। अविहवा अ गोवजुवदीओ)
भवन्तु। अस्माक राजा विराट एकच्छत्रपृथिवीपतिर्भवतु। महा
( होन्तु। णो लाआ विलाडो एक्कच्छत्तपुहुवीपदो होदु। मह )
राजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्या नगरोपवीथ्या
( लाअस्स विलाडस्स वष्पवड्ढणगोप्पदाणणिमित्त इमस्सि णअलोववणवीहीए)
मागन्तु गोधन सर्वे च कृतमङ्गलामोदा गोपदारका दारिकाश्च

---

अथ प्रथमाङ्कसूचिता विराटस्य गोधनग्रहणे गदा वृत्वा युद्धोद्यतस्य दुर्योध
स्यातिविकला दशा विवर्णयिषन् तत्प्रवेशाय वृद्धगोपालकस्य प्रवेश तदवदा—
तत प्रविशति वृद्धगोपालक ।

**वृद्धगोपाल** —गाव धेनव, मे मम, अहीनवत्सा जीवद्वत्सा, भव तु म त,
अविधवा वैधव्यरहिता गोपयुवतय ग्वालवध्व, भवन्तु यातु, अस्माकम
प्रजानाम्, राजा नृपति, विराट एकच्छत्रपृथिवीपति सकलाया भुवो भर्ता
भवतु अस्तु महाराजस्य विराटनृपते, वर्षवर्धे गोप्रदाननिमित्तम वर्षारम्भ
गोदानाय अर्थात् स्वजन्मदिनमभिलक्ष्य प्रतिवर्षे स्वमङ्गलायायुप च लोक
गोदानादिकम कर्तुम चेष्टते, अत एव विराटोऽपि स्वज मदिनमभिलक्ष्य तस्मिं दिने
गोदानादिकम् कर्तुम यतते। अस्या पुरोवर्तिन्याम्, नगरोपवीथ्याम्, नगरोद्या
नस्यैकदेशे, आग तुम् एतम गोधनम गोरूपसम्पदम, सर्वे सकला, च पुन, कृत

---

**वृद्ध गोपाल**—मेरी गायें सदा सवत्सा रहे। यादव तरुणियाँ सदा सधवा
रहे। धरती की सार्वभौम सत्ता हमारे महाराज विराट के हाथो मे हो। आज
महाराज विराट का जन्म दिन है। इस शुभावसर पर दान करने के निमित्त
नगर के उपवन की राह पर गायें सजाई गई है। गोपबाल और बालाएँ
सजधजकर इस मङ्गलोत्सव म भाग लेने के लिए तत्पर है। इनमे सबसे बडा

( नेपथ्ये )

किं धार्तराष्ट्रैरिति ?

भटः—आर्य ! अथ किम् ।

( प्रविश्य )

काञ्चुकीयः—सदृशमेतद् भ्रातृजनेष्वपि द्रोहिणाम् । एते हि,

कुलिताम् कृतेन विहितेनार्त्तनादेन भीतस्वरेणाकुलितम् पीडितम्, व., धेनूना कुलम् समूहः, समन्तत सर्वत', क्षोभ्यम् चिन्तनीयम् जायते ॥ १ ॥

चौरकृतेनोपद्रवेण संत्रस्ता वत्सा. पलायन्ते, धेनुसमूहाः, पीडामनुभवन्ति, दस्यूनाम् दर्शनमात्रेण गोवृषाः त्रस्तानना जायन्ते, धेनूनामार्त्तनादः सर्वत्र विजृम्भते, सम्पूर्णगोकुल चिन्त्यदशाम् प्राप्तम् ॥ वंशस्थं वृत्तम् ॥ १ ॥

नेपथ्ये रङ्गस्थलातिरिक्तम् यवनिकान्तरितम् नटाना वेषरचनादिस्थलम् नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभेदे, इति । कुशीलवकुटुम्बस्य स्थलं नेपथ्यमुच्यते इति च । वेषरचनागृहे ।

किम् कथम्, धार्तराष्ट्रैः धृतराष्ट्रपुत्रै. दुर्योधनादिभिः कृतमुपद्रवमिति ।

नटः—आर्य देव, अथ किम् अस्त्वेवमिति भावः ( प्रविश्य प्रवेशम् कृत्वा )

**काञ्चुकीयः**—एतत् इदम्, सदृशम् युक्तम्, भ्रातृजनेषु पाण्डवेषु द्रोहिणाम् द्रोहम् कुर्वताम् ये धृतराष्ट्रसुताः स्वपितृव्या. पुत्रेषु द्रोहं कुर्वन्ति ते भिन्नविराटस्य गोधनं हरेयुरिति युक्तितरमिति । एते हि—

---

के मुंह सूख रहे है, चारो ओर हाहाकार मचा है, गोवश की दशा अति चिन्तनीय हो रही है ॥ १ ॥

( नेपथ्य मे )

क्या कहा ? कौरवो ने उपद्रव मचा रखा है ?

भट, हाँ आर्य, और क्या ?

( मंच पर उपस्थित होकर )

**काञ्चुकीय**—अपने भाईयो के प्रति जलन एव ईर्ष्या रखने वाले कौरवो के लिए यह उचित ही है। ये कौरव—

मञ्जैश्चापैर्वद्धगोधाङ्गुलित्रा वर्मच्छन्ना कल्पितस्यन्दनस्था ।
वीर्योत्सिक्ता युद्धसज्जा कृतास्त्रा राज्ञो वैरं गोषु निर्यातयन्ति ॥ २ ॥

जयसेन ! जन्मनक्षत्रक्रियाव्यापृतस्य महाराजस्य तावदकालनिवेदा मन्युमुत्पादयति । तस्मात् पुण्याहावसाने निवेदयिष्ये ।

भट —आर्य अतिपाति कार्यमिदं, शीघ्रं निवेद्यताम् ।

व्याख्या—मञ्जैः युद्धाय तत्परैः चापैः धनुर्भिः, बद्धेऽधृते, गोधा ज्याघातवारणम् अङ्गुलित्रम् अङ्गुलित्राणम् च यैस्ते तथोक्ताः धृतगोधाङ्गुलित्राः वर्मच्छन्ना धृतकवचाः कवचेनावृतशरीराः कल्पितस्यन्दनस्थाः सुसज्जितरथे उपस्थिताः, वीर्योत्सिक्ताः, पराक्रमगर्वोद्धताः, युद्धसज्जाः संग्रामार्थं समुत्सुकाः अत एव च कृतास्त्राः गृहीतप्रहरणाः एते अकृतज्ञाः राज्ञो विराटस्य वैरम् शत्रुताम्, गोषु धेनुषु निर्यातयन्ति, प्रतिशोधयन्तीति भावः शालिनी वृत्तम् ॥ २ ॥

जन्मनक्षत्रक्रियाव्यापृतस्य जन्मदिनकृत्ये लग्नस्य, महाराजस्य नृपतेः, तावद्, अकालनिवेदनम् असमये सूचनाप्राप्तम् । मन्युमुत्पादयति अनवसरे प्राप्तसूचना कोपं जनयति । तस्मात् कारणात्, पुण्याहावसाने धार्मिके कृत्यसमाप्तौ निवेदयिष्ये कथयिष्ये ।

भट —आर्यं देव, अतिपाति शीघ्रं कथनीयम्, इदम् एतद्, कार्यम् कर्म, शीघ्रम् त्वरितम्, निवेद्यताम् कथ्यताम् ।

सभी सजाये रथों पर सवार हैं। शरीर पर कवच लगाये हैं, अंगुलियों में अंगुलित्राण लगाये धनुष ताने हैं। अस्त्र-शस्त्र से सुसज्जित ये गर्वान्वित कौरव युद्ध के लिए उद्यत हैं। महाराज के साथ दुश्मनी का बदला गायों से चुका रहे हैं ॥ २ ॥

जयसेन ! महाराज तो इस समय जन्मदिन मनाने में लगे हैं। असमय सूचना से तो कुपित होंगे। अतः इस धार्मिक कृत्य की समाप्ति पर ही उन्हें सूचित किया जायेगा।

भट—आर्य, यह काम तो जल्दी का है। उन्हें शीघ्र स्थिति से अवगत कराया जाय।

काञ्चुकीयः—इदं निवेद्यते ।

( ततः प्रविशति राजा )

राजा—

मा तावद् व्यथितविकीर्णबालवत्सा गावो मे रथरवशङ्कया ह्रियन्ते।
पीनांसश्चलवलयः सचन्दनार्द्रो निर्लज्जो मम च कर कराणि भुङ्क्ते ॥३॥

जयसेन ! जयसेन !

( प्रविश्य )

भट'—जयतु जयतु महाराज' ।

---

**काञ्चुकीयः**—इदम् एष, निवेद्यते कथ्यते । (तत तदनन्तरम्, प्रविशति प्रवेशं करोति राजा नृप. ।

**व्याख्या**—रथरवशंकया स्यन्दनशब्दसन्देहेन, व्यथितविकीर्णबालवत्सा, व्यथिता' दु खिता' अत एव च विकीर्णा यत्र तत्र प्रचलिता', बालवत्सा' नव जातवत्सा' यासां तास्तथोक्ता मे मम, गाव', धेनव', ह्रियन्ते बलान्नीयन्ते. मातावदिति कुत्सायाम्, पीनांस , स्थूलस्कन्ध , चलवलय चपलकट , सचन्दनार्द्र चन्दनेन लिप्त', मे मम कर हस्त , च पुन. कराणि भोज्यद्रव्याणि, निर्लज्ज लज्जारहित. सन् भुङ्क्ते भोजनग्रहणम् करोति प्रहर्षिणी वृत्तम् ॥ ३ ॥

जयतु विजयतामिति, जयतु इति द्विरुक्ताभ्याम् शब्दाभ्यां आदरातिशयो द्योतते । महाराज नृप. ।

---

**काञ्चुकीय**—अभी सूचित करता हूँ ।

( राजा का प्रवेश )

**राजा**—मुझे धिक्कार है, बछड़े डर कर इधर-उधर भाग रहे हैं । गायें लुट रही हैं और मेरा यह मोटा कंधा चन्दन चर्चित हो रहा है और मेरे निर्लज्ज हाथ भोजन चख रहे हैं ॥ ३ ॥

ओ जयसेन, जयसेन—

( प्रवेशकर )

**भट**—महाराज की विजय हो, जय हो श्रीमान् की ।

राजा—अलं महाराजशब्देन । अवधूतं मे क्षत्रियत्वम् । उच्यतां रणविस्तरः ।
भटः—महाराज ! न विस्तरार्हाणि विप्रियाणि । एष समासः,

एकवर्णेषु गात्रेषु गवां स्यन्दनरेणुना ।
कशापातेषु दृश्यन्ते नानावर्णविभक्तयः ॥ ४ ॥

राजा—तेन हि,

धनुरुपनय शीघ्रं कल्प्यतां स्यन्दनो मे

---

**राजा**—अलम् व्यर्थम्, महाराजशब्देन, मदर्थं महाराजशब्दस्य प्रयोग इति । अवधूतम् विनष्टम्, मे मम विराटस्य, क्षत्रियत्वम् क्षात्रधर्मम्, अपगतम् मम क्षत्रियत्वम् यन्मयि जीवित्ते मम धेनवः धार्तराष्ट्रैरपह्रियन्ते । उच्यताम् अभिधीयताम्, रणविस्तरः विस्तरेण युद्धविवरणम् ।

**भटः**—महाराज हे नृप, न नहि, विस्तरार्हाणि विशेषरूपेण निवेदयितुमुचितम्, विप्रियाणि विगतानि प्रियकथनानि, एषः एतत् समासः संक्षिप्तरूपेण श्रूयताम्—

**व्याख्या**—स्यन्दनरेणुना रथधूलिभिः, गवाम् धेनूनाम्, गात्रेषु शरीरेषु, एकवर्णेषु समानरूपेषु गतेषु, कशाघातेषु चौरकृतकशाताडनेषु क्रियमाणेषु, नानावर्णविभक्तयः अनेकरूपप्रविभागाः, दृश्यन्ते स्फुटीभवन्तीति । तद्गुणालङ्कारः ॥ ४ ॥

**राजा**—तेन कारणेन, हि—

**व्याख्या**—मे मम, धनुः चापम्, शीघ्रम् त्वरितम्, उपनय आहर, स्यन्दनः रथः, कल्प्यताम् सज्जीक्रियताम्, यस्य पुरुषविशेषस्य यदि भक्तिः प्रीतिरस्ति

---

**राजा**—मेरे लिए महाराज शब्द का प्रयोग बेकार है भट, मेरा क्षत्रियत्व खण्डित हो चुका है, युद्धक्षेत्र का समाचार विस्तार से कहो।

**भट**—महाराज, अप्रियप्रसंग का सविस्तार वर्णन उचित नहीं प्रतीत होता। अतः श्रीमान् संक्षेप में ही सुनें—

रथ के चक्के के घर्षण से उठी हुई धूलियों के पड़ने से सभी गायों का रंग एक जैसा हो गया फिर, उन पर जो कोड़े बरसाये गये उनसे उनकी देहों पर अनेक आकृतियाँ बन गई हैं ॥ ४ ॥

**राजा**—तब तो शीघ्र ही मेरा धनुष लाओ, रथ तैयार करो, जिनके

मम गतिमनुयातुच्छन्दतो यस्य भक्तिः ।
रणशिरसि गवार्थे नास्ति मोघः प्रयत्नो
निधनमपि यशः स्यान्मोक्षयित्वा तु धर्मः ॥५॥

भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

राजा—भोः ! किन्नु खलु दुर्योधनस्य मामन्तरेण वैरम्। इ
यज्ञमनुभवितुमनागत इति । कथमनुभवामि । कीचकाना ... वयमुपनीतसन्तापा नवृत्ताः । अथवा पराक्रमपि पाण्डवाना ...

स जन छन्दतः स्वच्छया, मम विराटस्य, गतिन् युद्धाय गमनम् अनु अनुकरणम् करोतु, गवार्थे गाहृते, रणशिरसि समराङ्गणे, प्रयत्न ... मोघ व्यर्थ नास्ति न भवति निधन रणे मरणम्, अपि ... मोक्षयित्वा यदि दस्युहस्तात् गा मोचयित्वा तु धर्म स्यात् मालिनी वृत्तम्।

भट—यत् यथा, आज्ञापयति आदिशति महाराज नृपविराट ... ( निष्क्रान्त बहिर्गत )

राजा—भो इति सबुद्धौ, किमिति प्रश्ने, नु शब्द खलु शब्दश्च वि... यद्वा खल्विति वाक्यालङ्कारे दुर्योधनस्य धार्तराष्ट्रस्य, मामन्तरेण मा ... वैरम् शत्रुताम्, आ इति स्मरणम्, यज्ञम् मखम् अनुभवितुम् द्रष्टुम्, ... न समागत इति । कथन् केन प्रकारेण अनुभवामि अनुभवितुम् समर्थो ... कीचकानाम् मम श्यालकानाम्, विनाशेन मरणेन वयम् विराटादय ... सन्तापा समानीतपरितापा, सवृत्ता सजाता । अथवा किम्वा, परोक्षमपि प्रच्छन्नभावनापि, पाण्डवानाम् युधिष्ठिरादीनाम्, स्निग्ध इति प्रोतात्मा

---

हृदय मे गायो के प्रति भक्ति है व अपनी इच्छा से मेरे साथ चले, गायों के लिए युद्ध क्षेत्र म किया गया प्रयास व्यर्थ नही होगा, यदि लड़ाई म मारे गये तो यश मिलेगा यदि गायो को छुड़ा लाये तो धर्म होगा ॥ ५ ॥

भट—महाराज की जैसी आज्ञा ।

( जाता है )

राजा—अरे दुर्योधन की दुश्मनी मेरे साथ क्यों होगी ? हाँ, जब समर्थ, उसके यज्ञ म हमने भाग नही लिया, लेता भी कैसे ? कीचकों के वध से तो हम स्वय दुःखी थे। अथवा पाण्डवो के प्रति मेरा स्नेह भी अपरोक्ष कारण हो

इति । सर्वथा योद्धव्यम् । हस्तिनपुरनिवासाच्छील्ज्ञो भगवान् दुर्योधनस्य । अथवा,

काम दुर्योधनस्यैव न दोषमभिधास्यति ।
अर्थित्वादपरिश्रान्त- पृच्छत्येव हि कार्यवान् ॥ ६ ॥

कोऽत्र ?

( प्रविश्य )

भट.— जयतु महाराज ।

---

अस्मीत्यभिधाय दूतताम् गतः । सर्वथा आक्रमणकारणम् यद्भवतु तद्भवतु प्रतिकारबुद्धया तेन सह अवश्यम् योद्धव्यम् । युद्ध कर्त्तव्यम्, हस्तिनापुरनिवासात् पूर्वं हस्तिनापुरे कृतनिवासत्वात्, शीलज्ञः स्वभावेन परिचितः, भगवान् युधिष्ठिरः अत्र सर्वत्र भगवान् शब्देन युधिष्ठिर एव बोध्यः । विराटसदनेऽनेनैव नाम्ना स प्रसिद्ध इति दुर्योधनस्य धार्त्तराष्ट्रस्येति । अथवा—

**व्याख्या**—एष भगवान्, कामम् निश्चयेन, दुर्योधनस्य धार्त्तराष्ट्रस्य दोषम् तस्य पराजयस्य साधनभूतम् किमपि छिद्रम्, न नहि, अभिधास्य वक्ष्यति, हि यतः, कार्यवान् प्रयोजनापेक्षी जनः, अर्थित्वात् कार्यवत्तीयत्वात्, अपरिश्रान्तः अखिन्न. सन्, पृच्छत्येव प्रश्नम् करोत्येव, यतस्त्वनिश्चयेऽपि कार्यार्थी जनः पृच्छत्येवेति भावः ॥ ६ ॥

कोऽत्र अस्मिन् स्थाने क. अस्तीति विराटस्य जिज्ञासा ।

भट —जयतु महाराज सर्वतोभावेन विजयताम् श्रीमान् विराटेश्वर इति ।

---

सकता है । जो हो, युद्ध तो करना ही होगा । हस्तिनापुर में रहने के कारण भगवान् तो दुर्योधन के स्वभाव से परिचित होंगे ही, अथवा-भले ही भगवान् दुर्योधन का दोष कहना न चाहे पर, मैं तो उनसे पूछूँगा ही क्योंकि कार्यार्थी प्रार्थना करने में तो थकेगा नहीं, पूछेगा ही ॥ ६ ॥

कौन यहाँ है ?

( भीतर आकर )

भट—महाराज की विजय हो ।

उद्योगः प्रस्तुतः कस्माच्छ्रीर्न सन्तोषमिच्छति ।
पीडयिष्यति सोत्सेकान् पीडितान् मोक्षयिष्यति ॥ ८ ॥

राजा—भगवन् ! गोग्रहणादवमानितोऽस्मि ।

भगवान् – केन ?

राजा—धार्तराष्ट्रैः ।

भगवान्—धार्तराष्ट्रैरिति । ( आत्मगतम् ) भो ! कष्टम्,

---

**व्याख्या**—कस्मात् केन हेतुना, उद्योगः युद्धाय कृतपरिश्रम, प्रस्तुत सज्जीकृत', किमितिप्रश्ने—श्री' सम्पत्तिः, सन्तोषम् तृप्तिम्, न नहि, इच्छति वाञ्छति, प्राप्तादधिकम् धनमीहमान. परानाक्रमितुमभिलषतीति भाव । रणोद्योगे द्वयीविधा क्वचित् गर्वोद्धतपुरुषस्य गर्वहरणमुद्देश्यम् क्वचिच्च पीडितानाम् पीडाहरणमुद्देश्यम्भवतीति भाव । उभययुद्धे भवान् किमुद्देश्यम् पृच्छति—सोत्सेकान् गर्वोद्धतपुरुषान्, पीडयिष्यति गर्वम् हरिष्यति अथवा पीडितान् दुःखितान् मोक्षयिष्यति आपदस्त्राण कारयिष्यति भवान् इति भाव ॥ ८ ॥

**राजा**—भगवन् इति सम्बुद्धौ, गोग्रहणात् गोधनापहरणात्, अवमानितोऽस्मि अपमानितोऽहम् ।

**भगवान्**—केन केन पुरुषविशेषेणापमानितोऽसि भवान् इत्याशय ।

**राजा**—धार्तराष्ट्रैः धृतराष्ट्रसुतैः अपमानितोऽस्मि ( आत्मगतम् स्वगतम् ) भो' इति सम्बोधने कष्टम्—खेदम् ।

---

यह युद्ध की तैयारी कैसी है ? क्या इतना बड़ा साम्राज्य पाकर भी आपको सम्पत्ति से संतोष नहीं है ? अथवा किसी गर्वीले का गर्व भङ्ग कीजियेगा या किसी पीडित को पीडा से त्राण दिलाइयेगा ॥ ८ ॥

**राजा**—*भगवन्, मेरी गायों का अपहरणकर मुझे अपमानित किया है ।*

**भगवान्**—किसने ?

**राजा**—कौरवों ने ।

**भगवान्**—धृतराष्ट्र के बेटों ने ? (अपने आप ) हाँ गजब हो गया ।

राजा—( उत्थाय कृताञ्जलिः ) कथं तत्रभवान् गाङ्गेयोऽपि प्राप्तः ।
भगवान्—( आत्मगतम् ) साधु धर्षितेनापि नातिक्रान्तः समुदाचारः । भोः !

किमर्थं खलु सम्प्राप्तः कुरूणां गुरुरुत्तमः ।
शङ्के तीर्णा प्रतिज्ञेति स्मारणं क्रियते मम ॥ १२ ॥

राजा—कोऽत्र ।

---

सर्वेषाम् महापुरुषाणाम् रथोत्कम्पचलत्पताकैः स्यन्दनसंचारेण कम्पमानध्वजदण्डैरेव वयम् विराटपरिजनाः पराजिताः न तु बाणैः शरैरिति इन्द्रवज्रावृत्तम्।

**राजा**—( उत्थाय कृताञ्जलिरिति भीष्मं प्रत्यादरप्रकाशाय श्रद्धाञ्जलिर्भूत्वा ) कथम् इत्याश्चर्ये, तत्रभवान् गङ्गापुत्रत्वेन माननीयः गाङ्गेयोऽपि पितामहभीष्मोऽपि, प्राप्तः अस्मिन् युद्धे समागतः ।

**भगवान्**—( आत्मगतम् स्वगतम् ) साधु सुष्ठु, धर्षितेनापि अपमानितेनापि, अतिक्रान्तः नोल्लङ्घितः, समुदाचारः सम्यक् आचरणम्, भोः इति सम्बुद्धौ ।

**व्याख्या**—कुरूणाम् कुरुवंशोद्भवानाम्, उत्तमः श्रेष्ठः, गुरुः पितामहभीष्मः किमर्थम् केन हेतुना, सम्प्राप्तः अस्मिन् युद्धे समागतः, शङ्के तर्कयामि, प्रतिज्ञा अज्ञातवासरूपा प्रतिज्ञा तीर्णा समुत्तीर्णा अर्थात् सुष्ठुरूपेण समापिता, इति उक्तम्, मम पाण्डवानाम्, स्मारणम् स्मरणस्य भावः स्मारणम् क्रियते बोध्यते युष्माभिः सम्यक् प्रकारेणाज्ञातवासः निगूढः इति अस्माकम् स्मारयितुमेव पितामहोऽत्र समागतोभवेदिति मदीया शङ्केति ॥ १२ ॥

**राजा**—कोऽत्र अस्मिन् स्थाने कः परिजनः वर्तते इति भावः ।

---

चालन से कम्पित ध्वजदण्डों को देखकर ही हम पराजित हो गये हैं ॥ ११ ॥

**राजा**—( उठकर और हाथ जोड़कर ) क्या कहा समादरणीय पितामह भीष्म भी आये हैं ? भगवान् ( अपने आप ) ठीक है, अपमानित होकर भी महाराज विराट ने अपने औचित्य का परित्याग नहीं किया है ।

भला कौरवों के पितामह भीष्म यहाँ क्यों आये हैं ? लगता है अज्ञातवास की मेरी अवधि समाप्त हो गई है, इसी की याद दिलाने वे आये हैं ॥ १२ ॥

**राजा**—कोई यहाँ है ?

( प्रविश्य )

भट'—जयतु महाराज ।
राजा—सूतस्तावदाहूयताम् ।
भट—यदाज्ञापयति महाराज ।

( निष्क्रान्त )

( प्रविश्य )

सूत —जयत्वायुष्मान् ।
राजा—

रथमानय शीघ्रं मे श्लाघ्य प्राप्तो रणातिथि ।
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथ ॥ १३ ॥

---

( प्रविश्य मञ्चे उपस्थितो भूत्वा )

भटः—जयतु महाराज जयत्वित्यादि आचारः स्वोपस्थितिम् सूचयति ।
राजा—सूत स्यन्दनमचालक , तावदित्यवधारणे, आहूयताम् आकार्यताम् ।
भट—यदाज्ञापयति यथादिशति महाराज विराटेश्वर इति । (निष्क्रान्तः प्रस्थातुमारब्ध )

( प्रविश्य ततः सूतस्य प्रवेशमाह )

सूतः—जयत्वायुष्मान् सर्वोत्कर्षेण विजयताम् श्रीमान् ।
व्याख्या—शीघ्रम् त्वरितम्, मे मम विराटस्य, रथम् स्यन्दनम् आनय नीयताम् श्लाघ्य परमपूज्य., रणातिथिः समराङ्गणेऽतिथि प्राप्त समायातः शरै बाणै भीष्मम् तमतिथिम् तोषयिष्ये युद्धेन प्रसादयिष्यामि, रणेभीष्मम्

---

( प्रवश करके )

भट—जय हो महाराज की ।
राजा —सारथी को बुलाओ ।
भट—महाराज की जैसी आज्ञा ( जाता है )

( प्रवेश करके )

सारथी—जय हो महाराज की ।
मेरा रथ जल्दी लाओ, भीष्म पितामह रण के मुख्य अतिथि हैं, उन्हें जीत

अनुज्ञातोऽसि किं तेन न राज्ञा सारथिर्भवान् ॥ १६ ॥

सूत:—प्रसीदत्वायुष्मान्। रथं सङ्कल्पयित्वा तु सूतसमुदाचारेणोपस्थित खल्वहम्। कुमारेण,

किन्नु तत् परिहासार्थं किन्नु तत्रास्ति कौशलम्।
मामतिक्रम्य सारथ्ये विनियुक्ता बृहन्नला ॥ १७ ॥

राजा कथं बृहन्नलेति।

भगवान्—राजन्! अलमलं सम्भ्रमेण।

---

रथम् स्यन्दनम्, किम् कुत, न नहि, वाहितवान्, भवान् त्वम्, राज्ञाम् नृपतीनाम्, सारथिः रथवाहक', असि, भवसि तेन राजकुमारेण, किम् कथम् त्वाम् न नहि अनुज्ञातः आज्ञापितः युद्धं गन्तुम् ॥ १६ ॥

सूतः—प्रसीदतु प्रसन्नो भवतु, आयुष्मन् चिरञ्जीविन्, रथम् स्यन्दनम्, सङ्कल्पयित्वा सज्जीकृत्य तु, सूतसमुदाचारेण सारथिपदेनाहम् तत्र उपस्थितो बभूव तु किन्तु, कुमारेणोत्तरेण—

**व्याख्या**—माम् सारथिम्, अतिक्रम्य परित्यज्य बृहन्नलानाम विराट्कन्याचास्तौर्यत्रिकाचार्या, सारथ्ये रथवाहकपदे, विनियुक्ता अध्यारोपिता, तन्न जाने तत् परिहासार्थम् बृहन्नलाया' उपहासाय तत्पद प्रदत्तमथवा बृहन्नलायाः सत्यमेव तत्र तस्मिन् किमपि कौशलम् चातुर्यमस्ति ॥ १७ ॥

**राजा**—कथं बृहन्नलेति वदतो विराटस्याश्चर्यं व्यक्तं भवति बृहन्नलायाः क्लीवत्वेन सूतकर्मणि अनुपयुक्तत्वात्।

**भगवान्**—राजन् हे नृप, अलमलम् निरर्थकम्, ससम्भ्रमेणावेगेनेति।

---

तो अनुभवी राजाओं के सारथी हो। फिर तुम्हे राजकुमार ने रथ-संचालन की अनुमति क्यों नहीं दी? ॥ १६ ॥

**सारथी**—क्षमा करें श्रीमान् रथ सजाकर मैं सारथी के रूप मे उनके सामने उपस्थित हुआ किन्तु पता नहीं कुमार ने मेरे परिहास के लिए अथवा बृहन्नला की किसी खास विशेषता के कारण मुझे छोड़कर उसे सारथी पद पर नियुक्त किया ॥ १७ ॥

**राजा**—क्यों बृहन्नला को सारथी बनाया गया?

**भगवान्**—महाराज, घबड़ाने की कोई बात नहीं है।

यदि स्वचक्रोद्धतरेणुदुर्दिनं रथं समास्थाय गता बृहन्नला।
परान् क्षणेनैमिरथैर्निवारयन् विनापि बाणान् रथ एव जेष्यति ॥ १८ ॥

राजा—तेन हि शीघ्रमन्यो रथः कल्प्यताम्।

सूत —यदाज्ञापयत्यायुष्मान्। ( निष्क्रान्तः )।

( प्रविश्य )

भट —भग्नः खलु कुमारस्य रथः।

---

व्याख्या—यदि चेत्, स्वचक्रोद्धतरेणुदुर्दिनम् निजरथचक्रोत्थापितधूलिवर्षाकरम्, रथम् स्यन्दनम् समास्थाय समुचितरूपेणारुह्य, बृहन्नला नपुंसकभावापन्नोऽज्ञातवासस्थोऽर्जुन, गता प्रस्थिता तदा तर्हि क्षणे क्षणमात्रेणैव, नेमिरथैः चक्रपरिधिशब्दैः परान् अरीन्, निवारयन् निषेधयन्, रथ एव स्यन्दन एव बाणान् शरपातान् विनापि जेष्यति विजयमाप्स्यति। वंशस्थ वृत्तम् ॥१८॥

राजा—तेन कारणविशेषेण, हि यत, शीघ्रम् अन्य अपर, रथ स्यन्दन कल्प्यताम् सज्जीक्रियताम्।

सूत —यदाज्ञापयत्यायुष्मान् यथा भवतादिष्टं तथा करोमीत्यर्थ (निष्क्रान्त रङ्गशालात निर्गत सूत )

( प्रविश्य रङ्गशालायामुपस्थितो भूत्वा )

भट —भग्न कुमारस्य उत्तरस्य, स्यन्दन खलु निश्चयेनेति।

---

यदि नपुंसक बृहन्नला ही सारथी बन कर गई है तो निश्चय ही उसके रथ के पहिये में उठी हुई धूलि आकाश में मेघमाला की सरचना करेगी। इतना ही नही उसका रथ, पवके की आवाज से ही दुश्मनो को जीतकर क्षण भर म ही लौट आयेगा। कुमार को बाण चलाने की भी आवश्यकता नही होगी ॥ १८ ॥

राजा—तो फिर शीघ्र ही दूसरा रथ तैयार करो न।

सूत—आयुष्मान् की जैसी आज्ञा। ( जाता है )

( प्रवेश कर )

भट—कुमार का रथ पराजित हो गया।

राजा—कथं भग्नो नाम।

भगवान्—कथमिदानीं भग्नो नाम।

भटः—श्रोतुमर्हति महाराजः।

बहुभिः समराभिज्ञैराच्छन्नाश्वपथः परैः।
भग्नो गहनलोभेन श्मशानाभिमुखो रथः॥ १९॥

भगवान्—(आत्मगतम्) आ अत्र खलु गाण्डीवम्। (प्रकाशम्) भो राजन्!

निमित्तं किञ्चिदुत्पन्नं श्मशानाभिमुखे रथे।

**राजा**—कथमित्याश्चर्यं, भग्नः पराजितः नाम।

**भगवान्**—कथम् कुमारस्य पराजयत्वमसंभाव्य भवतः जिज्ञासेति, इदानीं अधुना भग्नो नामेति प्रश्नः।

**भटः**—श्रोतुम् आकर्णितुम् अर्हति शक्नोति महाराजः नृपविराटः।

**व्याख्या**—बहुभिः अनेकैः, समराभिज्ञैः रणकुशलैः, परैः अरिभिः, आच्छन्नाश्वपथः आच्छन्नः आवृतः अश्वपथः रथगमनमार्गः, निरुद्धमार्गमवलोक्य कुमारस्य रथः स्यन्दनः, गहनलोभेन आत्मसंरक्षणहेतुना, श्मशानाभिमुखं श्मशानमभिलक्ष्य तस्यामेव दिशायाम् भग्नः प्रतिनिवृत्तो यातः॥ १९॥

**भगवान्**—(आत्मगतम् स्वगतम्) आः स्मृतम्, अत्र अस्मिन् स्थाने, खलु निश्चयेन, गाण्डीवः गाण्डीवनामकं धनु, अस्ति, (प्रकाशम् सर्वश्राव्यम्) भो राजन् हे नृप—

**व्याख्या**—रथे स्यन्दने, श्मशानाभिमुखे श्मशानमभिलक्ष्य चलिते सति किञ्चित् किमपि, निमित्तम् शुभकारणम्, उत्पन्नम् जातम्, तत्तु यत्र यस्मिन्

---

**राजा**—क्या कहा? कुमार का रथ पराजित हो गया?

**भगवान्**—वाह, इस समय कैसे पराजित हो गया?

**भट**—सुनिए श्रीमान्,

युद्ध कला में प्रवीण योद्धाओं ने सहसा रथ का मार्ग रोक लिया, फिर आत्मरक्षार्थ सारथी ने रथ लेकर श्मशान की ओर प्रस्थान किया॥ १९॥

**भगवान्**—(अपने आप) हाँ, अब बात समझ में आई। श्मशान में ही तो अर्जुन का गाण्डीव रक्खा है। (सुनाकर) महाराज, मुझे तो लगता है

धार्तराष्ट्राः स्थिता यत्र श्मशानं तद् भविष्यति ॥ २० ॥

राजा—भगवन् ! अकाले स्वस्थवाक्यं मन्युमुत्पादयति ।

भगवान्—अलं मन्युना । कदाचिदनृतं नोक्तपूर्वम् ।

राजा—आः अस्त्येतत् । गच्छ भूयो ज्ञायतां वृत्तान्तः ।

भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

राजा— को नु खल्वेष सहसा कम्पयन्निव मेदिनीम् ।

---

स्थाने स्थिताः उपस्थिताः, धार्तराष्ट्राः धृतराष्ट्रसुताः तत् स्थानम् निश्चयेन श्मशानम् अन्तिमसंस्कारभूमिः भविष्यति यास्यति ॥ २० ॥

**राजा**—भगवन् हे युधिष्ठिर, अकाले असमये, स्वस्थवाक्यम् सुवचनम्, मन्युम् क्रोधम्, उत्पादयति उत्पन्नं करोतीति ।

**भगवान्**—अलम् व्यर्थम्, मन्युना कोपेन, कदाचित् कदापि, अनृतम् असत्यम्, न नहि, उक्तम् कथितम्, पूर्वम् अतीते ।

**राजा**—आः इत्याश्चर्ये, अस्ति भवति, एतत् तव कथनम् सत्यम्, गच्छ याहि, भूयः पुनरपि, ज्ञायताम् बुध्यताम्, वृत्तान्तः रणसमाचारः ।

**भटः**—यदाज्ञापयति यथादिशति, महाराजः सम्राट् ( निष्क्रान्तः रङ्गशालातः निर्गतः )

**व्याख्या**—को नु खलु एषः शब्दः सहसा हठात्, मेदिनीम् धरित्रीम्, कम्पयन् चालयन् इव यथा आविद्धः वक्रीभूतः, नदीस्रोतः सरित्प्रवाह

---

कि जब रथ श्मशान की ओर गया है तो रणभूमि श्मशान ही बनकर रहेगी ॥ २० ॥

**राजा**—भगवन्, असमय में कहे गये शुभ सूचक स्वस्थवाक्य भी क्रोध उत्पन्न करता है ।

**भगवान्**—क्रोध की आवश्यकता नहीं है, इससे पहले तक मेरी कोई बात झूठ नहीं हुई है महाराज ।

**राजा**—हाँ यह तो है । फिर भी भट, तुम जाकर वहाँ का पता करो ।

**भट**—जैसी आज्ञा ( जाता है ) ।

**राजा**—सहसा धरती को कँपा देने वाली यह आवाज कहाँ से आ रही है ?

नदीस्रोत इवाविद्ध क्षणात् सवर्तते ध्वनि ॥ २१ ॥

ज्ञायता शब्द ।

( प्रविश्य )

भट—जयतु महाराज । श्मशानान्मुहूर्तविश्रान्ततुरगेण कुमारेण तु,

भगवान्—एष मामनृतवादिन न कुर्यात् ।

राजा—किं कृत कुमारेण ?

भट—

कृता नीला नागा शरशतनिपातेन कपिला

---

इव यथा, ध्वनि रव, क्षणात् निमिषात् सवर्तते प्रादुर्भवतीतिभाव ॥ २१ ॥

ज्ञायताम् परिचीयताम् शब्द इत ।

( प्रविश्य समरवृत्तान्त ज्ञात्वा दुर्योधनस्य दुरवस्था च विलोक्य भट प्रविश्याह )

भट.—जयतु सर्वोत्कर्षेण विजयताम् महाराज ; विराटराज । श्मशानाद् शवदाहस्थानाद् मुहूर्तम् क्षणम्, विश्रान्ततुरगेण स्वरथेभ्यो विश्रामावसर प्रदाय, कुमारेण तु ।

भगवान्—एष पुरोवर्त्ती सवाददाता, माम् युधिष्ठिरम्, अमृतवादिनम् मिथ्यावादिनम् न कुर्यात् साधयेदिति ।

राजा—किं कृतम् युद्धे, किं विधत्तम्, कुमारेणेति ?

व्याख्या—शरशतनिपातेन अगणितबाणवर्षणेन, नीला कृष्णवर्णा, नागा

---

लगता है नदी की धारा उलट गई हो ॥ २१ ॥

देखो, यह आवाज कैसी है ?

( प्रवेश करके )

भट—महाराज की जय हो । श्मशान में कुछ पल अपने घोड़ों को विश्राम देकर कुमारने,

भगवान्—शायद यह मुझे मिथ्यावादी न सिद्ध कर दे ।

राजा—कुमार ने क्या किया ?

भट—सैकड़ों बाणों के प्रहार से उनके मदमत्त काले हाथियों को लाल

हयो वा योधो वा न वहति न कश्चिच्छरक्षतम् ।
शरैः स्तम्भीभूता शरपरिकराः स्यन्दनवराः
शरैश्छन्ना मार्गाः स्रवति धनुरुग्रा शरनदीम् ॥ २२ ॥

भगवान्—( आत्मगतम् )

एतदक्षयतूणित्वं येन शक्रस्य खाण्डवे ।
यावत्यः पतिता धारास्तावन्तः प्रेषिता शराः ॥ २३ ॥

राजा—अथ परेष्विदानीं को वृत्तान्तः ।

---

राजा, कपिला रक्तवर्णा कृता निर्मिता, हयः अश्वः वा योधः शूरवीरः, वा न कश्चित् न कोऽपि, शरक्षतम् गमनस्यके बाणैः क्षतानि, न वहति न धारयत्येवेति, शरपरिकराः बाणेनावृत्ताः स्यन्दनवराः रथश्रेष्ठाः शरैः कुमारविसृष्टवाणैः, स्तम्भीभूताः स्थिरत्वम् याताः निश्चलीकृता इत्यर्थः, मार्गाः रणभूमिपथाः, शरैः छन्नाः बाणैः व्याप्ताः, धनुः कुमारस्य चापः, उग्राम् अतिभीषणाम्, शरनदीम् बाणानाम् नदीम् स्रवति प्रवाहयति । शिखरिणी वृत्तम् ॥ २२ ॥

भगवान्—( आत्मगतम् स्वगतम् )

व्याख्या—एतत् अविरलशरवर्षित्वम् धनुषः, अक्षयतूणीरत्वम् शरक्षयरहिततूणीरभावः, येन गाण्डीवेन, खाण्डवे खाण्डवनामकारण्ये, यावत्यः यत्संख्याकाः, शक्रस्य देवराजेन्द्रस्य, धाराः जलवृष्टयः पतिताः स्रविताः तावत्कालपर्यन्तम् शराः बाणाः, प्रेषिताः ॥ २३ ॥

**राजा**—अथ अनन्तरम्, परेषु अरिषु, इदानीम् सम्प्रति, कः किम्, वृत्तान्तः अर्थात् कीदृशः समाचार इति जिज्ञासा ।

---

बना डाला है । ऐसा एक भी घोड़ा या योद्धा नहीं बचा जिसे बाण से बिंध न दिया गया हो । शरों के बीच घिर कर सारे रथ गतिहीन होकर खड़े हैं । लगता है धनुष से शररूपी नदी की धारा प्रवाहित हो रही है ।

**भगवान्**—( अपने आप ) यह प्रभाव तो उन अक्षय तूणीरों का है जिन्होंने इन्द्र के प्रिय खाण्डव वन को जलाने के समय इन्द्र की जल धारा की तरह बाणों की ही वर्षा की थी ॥ २३ ॥

**राजा**—अब दुश्मनों की स्थिति क्या है ?

भटः—अप्रत्यक्ष हि तत्र मे । प्रवृत्तिपुरुषाः कथयन्ति—

धनुर्घोषं द्रोणस्तदिदमिति बुद्ध्वा प्रतिगतो
ध्वजे बाणं दृष्ट्वा कृतमिति न भीष्मः प्रहरति ।
शरैर्भग्नः कर्णः किमिदमिति चान्ये नृपतयो
भयेऽप्येको बाल्यान्न भयमभिमन्युर्गणयति ॥ २४ ॥

भगवान्—कथमभिमन्यु प्राप्तः । भो राजन् !

---

भट —अप्रत्यक्षम् प्रत्यक्षरहितम्, हीति निश्चयेन, तत्र रणाङ्गणे, मे मम, प्रवृत्तिपुरुषाः वार्त्ताहराः दूता कथयन्ति—

व्याख्या—धनुर्घोषम् चापटङ्कारम्, तद् इदम् इति तस्यामुकस्य चापस्याय टङ्कार इति बुद्ध्वा ज्ञात्वा, द्रोणः गुरुद्रोणः, प्रतिगत. युद्धात् परावृत्त', ध्वजे स्वकेतौ, बाणम् शरम्, प्रहृतम् दृष्ट्वा अवलोक्य, भीष्म. गाङ्गेयः, कृतमिति व्यर्थमेव युद्धमिति बुद्ध्वा न प्रहरति बाणप्रक्षेपं न करोतीति, कर्णः राधेयः, शरैः बाणप्रहारैः, भग्नः पराजितो जात', अन्ये च ते बहवः नृपतयः किमिदमित्याश्चर्यान्विता अजायन्त । भयेऽपि भयङ्करस्थितावपि, बाल्यात् शिशुचपलतया, एकः केवलम्, अभिमन्युः अर्जुनसुतः, भयम् भीतिम्, न गणयति निर्भीकभावेन युद्ध्यते ॥ २४ ॥

भगवान्—कथमित्याश्चर्यं, अभिमन्युः सौभद्रेय', प्राप्तः समागत, भो राजन् हे नृप,—

---

भट—महाराज, इस सम्बन्ध मे मेरी प्रत्यक्ष तो कोई जानकारी नही है, पर संवाददाताओ का कहना है कि—

द्रोण ने धनुष का आवाज को पहचान कर ही युद्ध बन्द कर दिया है। अपने रथ के ध्वजो मे लगे बाणो को देखकर ही लडना बन्दकर दिया है। कर्ण बाणो से विंध गया है, अन्य राजे लगातार प्रहारो से चकरा गये है। भय के कारण सामने देखकर भी केवल अभिमन्यु लड रहा है ॥ २४ ॥

भगवान्—क्या अभिमन्यु भी आया है ? हे राजन्,

युध्यते यदि सौभद्रस्तेजोऽग्निर्वंशयोर्द्वयोः ।
सारथिः प्रेष्यतामन्यो विक्लवात्र बृहन्नला ॥ २५ ॥

राजा—मा मा भवानेवम् ।

भीष्मं रामशरैरभिन्नकवचं द्रोणं च मन्त्रायुधं
कृत्वा कर्णजयद्रथौ च विमुखौ शेषांश्च तांस्तान् नृपान् ।
सौभद्रं स्वशरैर्न धर्षयति किं भीतः पितुः प्रत्ययात्
सम्पृष्टोऽपि वयस्यभावसदृशं तुल्यं वयो रक्षति ॥ २६ ॥

व्याख्या—यदि चेत्, द्वयोः वंशयोः मातृपितृकुलयोः, तेजोऽग्निः प्रतापवह्निः, सौभद्रः सुभद्रासुनः अभिमन्युः, युद्ध्यते युद्धम् करोति तदान्यः अपरः, सारथिः सूतः, प्रेष्यताम्, अत्र अस्मिन् महायुद्धे, बृहन्नला विक्लवा भयविह्वला स्यात्॥२५॥

राजा—मा मा नहि नहि, भवान् त्वम् एवम् इत्थम् वदतु—

व्याख्या—रामशरैः परशुरामबाणैः, अभिन्नकवचम् अक्षतवर्माणम्, भीष्मम् गाङ्गेयम्, च पुनः, मन्त्रायुधम् मन्त्र प्रहरणम्, द्रोणम् द्रोणाचार्यम्, कर्णजयद्रथौ अङ्गराजसिन्धुराजौ च विमुखौ कृत्वा युद्धपराङ्मुखौ, तांस्तान् शेषान् नृपान् राज्ञः, विमुखान् कृत्वा कुमारः उत्तरः किं स्वशरैः बाणैः, सौभद्रम् सुभद्रा-पुत्रम्, न धर्षयति पराजेतुं न शक्यते किम्? पितुः प्रत्ययात् अर्जुनस्य ख्यातेः, भीतः शङ्कितः सन्, सम्पृष्टोऽपि कृतमैत्रिकोऽपि, तुल्यम् समानम्, वयः अवस्थाम् वयसोः भावः समानवयसोर्हितयोर्मैत्रीभावः रक्षतीति । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

यादव और पाण्डवों का सम्मिलित तेज अभिमन्यु यदि लड़ रहा है तो आप कुमार के रथ पर किसी अन्य सारथी को भेजें क्योंकि वहाँ आपकी बृहन्नला विवश है ॥ २५ ॥

राजा— नहीं-नहीं आप ऐसा मत कहें।

जिनके कवच परशुराम के बाणों से भी नहीं छिदे ऐसे भीष्म को, मन्त्रायुध द्रोण को, कर्ण तथा जयद्रथ को एवं अन्यान्य वीरों को युद्ध में पराजित करने वाला कुमार उत्तर क्या अभिमन्यु को अपने बाणों से पराजित नहीं कर सकेगा? सम्भव है अर्जुन की ख्याति के ख्याल से अभिमन्यु से दोस्ती करले, यह भी आयु एवं वय के विचार से उचित ही होगा ॥ २६ ॥

भटः—एष खलु कुमारस्य रथः,

> आलम्बितो भ्रमति धावति तेन मुक्तो
> न प्राप्य धर्षयति नेच्छति विप्रकर्तुम्।
> आसन्नभूमिचपलः परिवर्तमानो
> योग्योपदेशमिव तस्य रथः करोति॥ २७॥

राजा—गच्छ। भूयो ज्ञायतां वृत्तान्तः।

भटः—यदाज्ञापयति महाराजः ( निष्क्रम्य प्रविश्य ) जयतु महाराजः। जयतु विराटेश्वरः। प्रियं निवेदये महाराजाय। अवजितं गोग्रहणम्, अपय

---

भटः—एषः एतत् खलु निश्चयेन, कुमारस्य, रथः स्यन्दनः।

**व्याख्या**—तेन सारथिना, आलम्बितः अवरोधितः सन्, भ्रमति घूर्णते, मुक्तः त्यक्तप्रग्रहः सन्, धावति पलायति, प्राप्य अवसरम् लब्ध्वापि, न धर्षयति आक्रमणं न करोति, विप्रकर्तुम् पराजेतुम्, नेच्छति नाभिलषति, आसन्नभूमिचपलः प्रतिरथसमीपभूमौ अस्थिरः, परिवर्तमानः समन्ततः चरन्, रथः कुमारस्य स्यन्दनः, तस्य कुमारस्य, योग्योपदेशम् रथसञ्चालनस्योचिताभ्यासं करोति॥२७॥

**राजा**—गच्छ याहि, भूयः अतिशयम्, वृत्तान्तः संवादः, ज्ञायताम् विदि।

**भटः**—यदाज्ञापयति महाराजः यथा भवतादिष्टं तथा करोति, ( निष्क्रम्य बहिर्गत्वा, प्रविश्य पुनरागत्य ) जयतु महाराजः सर्वोत्कर्षेण विजयताम् नृपति महाराजाय राज्ञे, प्रियं सुखकरम् निवेदये निवेदनं करिष्ये, अवजितम् परा

---

**भट**—ओर, यह कुमार का रथ ...

सारथी जब उसे रोक लेता है तो वह चारों ओर घूमने लगता है। और जब घोड़े की लगाम छोड़ देता है तो वे तेजी से आगे की ओर दौड़ने लगता है, दुश्मनों के रथ के पास पहुँच कर भी उस पर आक्रमण करने की अपेक्षा उसके चारों ओर चक्कर काटने लगता है, देखने पर ऐसा प्रतीत होता है जैसे अपने प्रतिद्वन्द्वी को रणाङ्गण में रथ-सञ्चालन का अभ्यास करा रहा हो॥२७॥

**राजा**—जाओ, और अधिक सवाद लाओ।

**भट**—श्रीमान् की जैसी आज्ञा, ( बाहर निकलकर पुनः प्रवेश करके ) महाराज की जय हो, जय हो विराटेश्वर की। श्रीमान् को खुशखबरी सुनाता हूँ,

धार्तराष्ट्राः ।

भगवान्—दिष्ट्या भवान् वर्धते ।

राजा—न न । भगवतो वृद्धिरेषा । अथ कुमार इदानीं क ?

भटः—दृष्टपरिस्पन्दानां योधपुरुषाणां कर्माणि पुस्तकमारोपयति कुमारः ।

राजा—अहो श्लाघनीयव्यापारः खल्वयं कुमारः ।

ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा ।
अकालान्तरिता पूजा नाशयत्येव वेदनाम् ॥ २८ ॥

---

जित गोग्रहणम् गवामपहरणम्, अपयाता पलायिता, धार्तराष्ट्राः कौरवा ।

भगवान्—दिष्ट्या प्रसन्नतासूचकमव्ययम्, भवान् त्वम्, वर्धते अभ्युदयं याति ।

राजा—न न नहि नहि, भगवत. श्रीमत, वृद्धि समुन्नति, एषा । अथ अनन्तरम्, इदानीम् सम्प्रति, कुमार. उत्तर, क कुत्रास्ति ?

भट—दृष्टपरिस्पन्दानाम् कृतपरिश्रमाणाम्, योधपुरुषाणाम् वीरेषु अग्रसराणाम्, कर्माणि युद्धस्थलस्य कृत्यानि, पुस्तकम् आरोपयति पुस्तके लिखति, कुमार कुमार उत्तर. ।

राजा—अहो इत्याश्चर्ये, श्लाघनीयव्यापार. प्रशंसनीयकार्यकर. खलु निश्चयेन, अयम् एष., कुमार. उत्तर. ।

व्याख्या—श्लाघनीयेन प्रशंसनीयेन, कर्मणा कृत्येन, ताडितस्य आहतस्य, योधस्य सैनिकस्य, अकालान्तरिता सद्य. कृता, पूजा सम्मानविशेष., वेदनाम् पीडाम्, नाशयत्येव ताडनव्यथाम् विनश्यत्येवेति भाव. ॥ २८ ॥

---

गोहरण मे कुमार की जीत हुई, दुश्मन जान लेकर भाग गये ।

भगवान्—महाराज, सौभाग्य से आप की विजय हुई ।

राजा—नहीं नहीं, यह तो आप का ही श्रेय है । अच्छा, अभी कुमार कहाँ है ?

भट—कुमार रणाङ्गण मे अपना कौशल दिखलाने वाले वीरो का नाम पुस्तक में अंकित कर रहे हैं ।

राजा—अरे कुमार का यह काम तो प्रशंसनीय है ।

युद्ध मे आहत वीरो के प्रशंसनीय कार्यों के लिए यदि तत्काल उनका सम्मान किया जाय तो निश्चय ही वे लड़ाई के सारे कष्टों को भूल जाते हैं ॥२८॥

जित्वापि गां विजयमप्युपलभ्य राज्ञो
नैवास्ति मे जयगतो मनसि प्रहर्षः ।
दुःशासनं समरमूर्धनि सन्निगृह्य
बद्ध्वा यदद्य न विराटपुरं प्रविष्टः ॥ ३१ ॥

उत्तराप्रीतिदत्तालङ्कारेणालङ्कृतो व्रीडित इवास्मि राजानं द्रष्टुम् । तस्माद् विराटेश्वरं पश्यामि । ( परिक्रम्यावलोक्य ) अये अयमार्यो युधिष्ठिरः,

सयौवनः श्रेष्ठतपोवने रतो नरेश्वरो ब्राह्मणवृत्तिमाश्रितः ।

व्याख्या—गाम् गोधनम्, जित्वा अरिहस्तात् विजित्य, अपि, राज्ञः विराटनृपतेः, विजयम् जयम्, उपलभ्य प्राप्य, अपि, मे मम, मनसि चित्ते, जयगतः उत्कर्षसम्भवः, प्रहर्षः प्रसन्नता, नैवास्ति न सम्भूत एव, तत्कारणमाह—दुःशासनम् दुर्योधनानुजं, यत् यस्मात्, समरमूर्धनि समराङ्गणे, सन्निगृह्य गृहीत्वा, बद्ध्वा निगडयित्वा, अद्य अस्मिन्नेव दिने, विराटपुरम् विराटनृपते नगरम् न प्रविष्टः प्रत्यागतः ॥ ३१ ॥

उत्तरा प्रीतिदत्तालङ्कारेण विराटकन्यया प्रीत्या प्रदत्ताभूषणेन, अलङ्कृतः सुशोभितः व्रीडित लज्जित इव अस्मि भवामि, राजानम् नृपम्, द्रष्टुम् अवलोकयितुम्, तस्मात् तेन कारणेन विराटेश्वरम् विराटनृपतिम् पश्यामि अवलोकयामि, ( परिक्रम्य भ्रमित्वा, अवलोक्य दृष्ट्वा ) अये आश्चर्यम्, अयम् एषः, आर्यः मान्यः युधिष्ठिरः पाण्डवाग्रजः—

व्याख्या—सयौवनः युवावस्थायामेव, अपि, श्रेष्ठतपोवने उत्तम आश्रमे, रतः निरतः, नरेश्वरः नृपो भूत्वापि, ब्राह्मणवृत्तिमाश्रितः ब्राह्मणस्य विप्रस्य वृत्तिं

मैंने ही गायों को दुश्मनों के हाथों से छुड़ालिया, युद्ध में विजय श्री प्राप्त की किन्तु मेरे मन में जीत की कोई खुशी नहीं हुई क्योंकि मेरे मन में अभी कसक है कि मैंने दुःशासन को युद्ध भूमि से बाँधकर विराट नगर में नहीं प्रवेश किया ॥ ३१ ॥

हाय, उत्तराने प्रेमोपहार के रूप में जो आभूषण दिया है, उसे धारण कर राजा के सम्मुख जाने में सकोच होता है । अच्छा तो महाराज विराट के पास जाऊँ ( देखकर ) अरे, यही तो आर्य युधिष्ठिर हैं—

इन्होंने भरी जवानी में कठोर तप किया है, राजा होकर भी ब्राह्मणवृत्ति

विमुक्तराज्योऽप्यभिवर्धितः श्रिया त्रिदण्डधारी न च दण्डधारकः ॥३२॥

– भगवन् ! वन्दे ।

( उपगम्य ) ( भअव ! वन्दामि । )

भगवान्—स्वस्ति ।

बृहन्नला—जयतु भर्ता ।

( जेदु भट्टा । )

राजा—

अकारणं रूपमकारणं कुलं महत्सु नीचेषु च कर्म शोभते ।

---

आजीविकाम् आश्रितः अवलम्बितः, विमुक्तराज्यः परित्यक्तं निजसाम्राज्यम्, अपि, श्रिया कान्त्या, अभिवर्धितः सम्पन्नः, त्रिदण्डधारी त्रिदण्डधारणे कृते सत्यपि न दण्डधारकः न दण्डाधिकारसम्पन्नः । विरोधाभासालङ्कारः, वंशस्थं वृत्तम् ॥ ३२ ॥

( उपगम्य समीपम् गत्वा ) भगवन्, श्रीमन् वन्दे अभिवादये ।

**भगवान्**—स्वस्ति कल्याणम् भवतु ।

**बृहन्नला**—जयतु भर्ता सर्वोत्कर्षेण विजयताम् स्वामी ।

**व्याख्या**—रूपम् स्वरूपम् शारीरिकं सौन्दर्यम्, अकारणम् आदरातिशयस्य कारणम् नास्ति, कुलम् वंशमपि अकारणम् सम्मानहेतुर्भवति, महत्सु स्वरूपवंशाधिकेषु नीचेषु निम्नकोटिजनेषु कर्म आचरणम्, शोभते सम्मानजनक

---

अपनाया है, राज्य छोड देने पर भी श्रीसम्पन्न हैं, त्रिदण्डधारी होकर भी दण्डाधिकारी नहीं रह गये हैं ॥ ३२ ॥

( समीप आकर ) भगवन्, मैं आपको प्रणाम करती हूँ ।

**भगवान्**—तुम्हारा कल्याण हो ।

**बृहन्नला**—महाराज की जय हो ।

**राजा**—व्यक्ति चाहे ऊँच हो या नीच उसके सम्मान का कारण न तो उसका रूप होता है और न वंश गौरव ही, अपने कर्म से, ही कोई व्यक्ति

इद हि रूप परिभूतपूर्वकं तदेव भूयो बहुमानमागतम् ॥ ३३ ॥

बृहन्नले ! परिश्रान्तामपि भवतीं भूयः परिश्रमयिष्ये । कथ्यतां रणविस्तरः ।

बृहन्नला—शृणोतु भर्ता ।

( सुणादु भट्टा । )

राजा—ऊर्जितं कर्म । संस्कृतमभिधीयताम् ।

बृहन्नला—श्रोतुमर्हति महाराजः ।

( प्रविश्य )

भवति, इदम् एतत्, हि यत , रूपम् स्त्रैणम्, परिभूतपूर्वकम् अनादरस्य पात्रभूतम्, तदेव तदेव रूपम् कर्मप्रकर्षात् भूयः अतिशय, बहुमानमागतम् आदरभाजनम् अजनि ॥ अर्थान्तरन्यासोऽलङ्कारः, वंशस्थवृत्तम् ॥ ३३ ॥

बृहन्नले, परिश्रान्तामपि कृतश्रमामपि, भवतीम् त्वाम्, भूयः पुनः परिश्रमयिष्ये श्रमं कारयिष्यामि । उच्यताम् कथ्यताम्, रणविस्तरः विस्तरेण रणवार्ता ।

**बृहन्नला**—शृणोतु आकर्ण्यताम्, भर्ता स्वामी ।

**राजा**—ऊर्जितम् आजस्वि, कर्म कृत्यम्, संस्कृतमभिधीयताम् देववाण्यामेव कथ्यताम् ।

**बृहन्नला**—श्रोतुम् आकर्णयितुम्, अर्हति शक्नोति महाराजः नृपतिः ।

( प्रविश्य प्रवेशम् कृत्वा )

---

प्रशंसनीय होता है। इन बृहन्नला का यह वही रूप है जिसे कल तक लोग अपमानित करते थे—आज वही आदर सम्मान का पात्र बना है ॥ ३३ ॥

बृहन्नले, मैं समझता हूँ तुम पूरी थकी हो फिर भी मैं तुम्हें कुछ कष्ट देना चाहूँगा। लड़ाई के मैदान का विस्तृत समाचार सुनाओ।

**बृहन्नला**—सुनिये महाराज।

**राजा**—संस्कृत भाषा में ही वहाँ की घटनाओं का वर्णन करो। क्योंकि, ये सारी घटनायें तेजस्वी हैं।

**बृहन्नला**—सुनिए महाराज

( प्रवेश करके )

भटः—जयतु महाराज ।

राजा—

अपूर्व इव ते हर्षो ब्रूहि केनासि विस्मित ।

भटः—

अश्रद्धेयं प्रिय प्राप्त सौभद्रो ग्रहण गत ॥ ३४ ॥

बृहन्नला—कथं गृहीत । ( आत्मगतम् )

तुलितबलमिदं मयाद्य सैन्य परिगणितं च रणेऽद्य मे स दृष्ट ।
सदृश इह तु तेन नास्ति कश्चित् क इह भवेन्निहतेषु कीचकेषु ॥ ३५ ॥

---

भट.—जयतु महाराजः सर्वोत्कर्षण विजयताम् महाराज ।

राजा—ते तव, हर्ष प्रसन्नता, अपूर्व इव विलक्षण इव, केन कारणेन, विस्मित. आश्चर्यचकित असि ब्रूहि कथय ।

भटः—सौभद्रो अर्जुनसुत ग्रहण गत, बन्दीभूत इति, अश्रद्धेयमपि अविश्वसनीयमपि प्रियं सुखकरम् प्राप्तम् जातमिति ॥ ३४ ॥

बृहन्नला—कथम् इत्याश्चर्ये, गृहीत. बन्दीकृत ( आत्मगतम् स्वगतम् )

व्याख्या—अद्य अस्मिन्नेव दिन, मया अर्जुनेन, इदम् एतत् सैन्यम् विराटस्य सैनिकम्, तुलितबलम् पूर्णरूपेण परीक्षितशक्तिकम्, परिगणितम् गणनाविषयीकृतञ्च, स: असौ अभिमन्यु. मया दृष्ट रणे साक्षात्कृत, इह अस्मिन् युद्धे, कीचकेषु शतसंख्यकविराटश्यालेषु, निहतेषु मृतेषु क जन , तेन अभिमन्युना सदृश. तुल्यः कश्चित् कोपि नास्तीति ॥ ३५ ॥

---

भट—महाराज की जय हो।

राजा—तुम्हारी खुशी की तो आज सीमा ही नही दीखती । इसका क्या कारण है ?

भट—महाराज, अविश्वसनीय प्रिय प्राप्त हुआ है । अभिमन्यु युद्ध मे बन्दी बना लिया गया है ॥ ३४ ॥

बृहन्नला—क्या कहा पकड लिया गया ? ( अपने आप )

विराट की सेना की ताकत तो आज मैंने तोल ही ली थी । उसकी गणना भी की थी । रणकुशल अभिमन्यु को पराजित करने वाला तो उसमे एक भी नही था । कीचकों की मृत्यु के बाद भला उससे लड ही कौन सकता है ॥ ३५ ॥

भगवान्—बृहन्नले ! किमेतत् ।

बृहन्नला—भगवन् !

> न जाने तस्य जेतारं बलवाञ्छिक्षितस्तु स ।
> पितृणा भाग्यदोषेण प्राप्नुयादपि धर्षणम् ॥ ३६ ॥

राजा—कथमिदानीं गृहीत ।

भट. —

> रथमासाद्य निःशङ्कं बाहुभ्यामवतारित ।

राजा—केन ?

---

भगवान्—बृहन्नले, एतत् किम् ?

बृहन्नला—भगवन्—

व्याख्या—तस्य अभिमन्योः जेतारम् विजेतारम् न जाने अहम् नाव गच्छामि, सः असौ, बलवान् शक्तिशाली, शिक्षितः रणकुशलः अस्ति, पितृणाम् पाण्डवानाम्, भाग्यदोषेण विपरीतभाग्येन कदाचित् धर्षणम् पराजयम् प्राप्नुयात् लभेत ॥ ३६ ॥

राजा—इदानीम् अधुना, कथम् केन प्रकारेण, गृहीत अभिमन्युर्बन्दीकृत ।

भटः—रथम् स्यन्दनम्, आसाद्य प्राप्य, निःशङ्कम् असंदिग्धभावेन, बाहुभ्याम् कराभ्यामेव, अवतारित स्यन्दनादधोनीत ।

राजा—केन पुरुषविशेषेणावतारित इति जिज्ञासा नृपस्य ।

---

भगवान्—बृहन्नले, क्या बात है ?

बृहन्नला—भगवन्, मुझे पता नहीं कि अभिमन्यु को किसने पराजित किया है ? अभिमन्यु बलवान और रणकुशल है । संम्भवतः वह अपने पिता के भाग्य दोष से ही पराजित हुआ है ॥ ३६ ॥

राजा—अब वह कैसे पकड लिया गया है ?

भट—बिल्कुल आसानी से रथपर चढकर हाथों से उतार लिया गया ।

राजा—किसने उतार लिया ?

भट —

य किलैष नरेन्द्रेण विनियुक्तो महानसे ॥ ३७ ॥

बृहन्नला—( अपवार्य ) एवम् आर्यभीमेन परिष्वक्त , न गृहीत ।

दूरस्था दर्शनादेव वय सन्तोषमागता ।
पुत्रस्नेहस्तु निर्दिष्टस्तेन मृव्यक्तकारिणा ॥ ३८ ॥

राजा—तेन हि सत्कृत्य प्रवेश्यतामभिमन्यु. ।

---

भट —य: पुरुष: किल एष: नरेन्द्रेण विराटेन महानसे पाकशालायाम् विनियुक्त पाककर्मणि विनियोजित तेनैव ॥ ३७ ॥

बृहन्नला - ( अपवार्य परावर्तनेन सर्वमश्रावयित्वा ) तदुक्तम् सामन्त-महापात्रेण—

" .. तद्भेदपवारितम् । रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते । इति । एवम् इत्थम्, आर्यभीमेनमध्यमभ्राताभीमेनाभिमन्यु परिष्वक्त आलिङ्गित न तु गृहीत- बन्दीकृत ।

व्याख्या— वयम् सर्वे पाण्डवा, दूरस्था दूरे स्थिता एव, दर्शनात् अवलोकनात् सन्तोषम् तृप्तिम्, आगता प्राप्ता तु किन्तु तेन भीमेन, सुव्यक्तकारिणा सर्वजनसम्मुखे एव पुत्रमभिमन्युम् स्यन्दनादवतार्य, पुत्रस्नेह पुत्रजन्यप्रीति, निर्दिष्ट स्थित अर्थात् अपत्यालिङ्गनजन्यसुखं लब्धमिति ॥ ३८ ॥

राजा—तेन कारणेन, हि यत , सत्कृत्य ससम्मान्य, अभिमन्युम् अर्जुनसुतम्, प्रवेश्यताम् मदीयसमुखे समानीयताम् ।

---

भट-वही जिसे महाराज द्वारा रसोई घर की सेवा मे नियुक्त किया गया है ॥ ३७ ॥

बृहन्नला—( एक ओर को ) अब बात समझ मे आई, इस प्रकार आर्य भीम ने उसका आलिङ्गन किया है, पकडा नही ।

हमलोगो ने दूर से ही बेटा अभिमन्यु को देखकर सतोष प्राप्त कर लिया किन्तु, आर्य भीम ने सबो के सामने ही अपने पुत्र प्रेम को सार्थक कर दिखलाया ॥ ३८ ॥

राजा—ठीक है, ससम्मान अभिमन्यु को यहाँ बुला लाओ ।

भगवान्—भो राजन्! वृष्णिपाण्डवनाथस्याभिमन्योः पूजा भयादिति [illegible] शास्यति। तदवधीरणमस्य न्याय्यम्।

राजा—नावधीरणमर्हति यादवीपुत्रः।

कुतः—

पुत्रो ह्येष युधिष्ठिरस्य तु वयस्तुल्यं हि नः सूनुना
सम्बन्धो द्रुपदेन नः कुलगतो नप्ता हि तस्माद् भवेत्।
जामातृत्वमदूरतोऽपि च भवेत् कन्यापितृत्वं हि नः

**भगवान्**—भो राजन्, हे नृप, वृष्णिपाण्डवनाथस्य वृष्णय [illegible] पाण्डवाश्च नाथा यस्य तादृशस्य अभिमन्योः अर्जुनसुतस्य, भयाद् [illegible] नृपविराटेन सम्मानः प्रदर्शित इति लोकः जनः, शास्यति। तद् तस्माद्, अभिमन्योः, अवधीरणम् अनादरमेव, न्याय्यम् उचितम्।

**राजा**—यादवीपुत्र सुभद्रासुतः, अवधीरणम्, अनादरम्, न [illegible] अर्हसि युज्यते।

कुतः कस्मात्—

**व्याख्या**—एष अभिमन्युः, युधिष्ठिरस्य पुत्र धर्मराजसुतः, तु [illegible] वयसः अवस्याक्रमेण, नः अस्माकम् सूनुना पुत्रेण, तुल्यम् समम्, नः अस्माकम् द्रुपदेन नृपेण, कुलगत परम्परयावशानुगतः, सम्बन्धः सख्यभावः [illegible] कारणात् हि यतः नप्ता दौहित्रः अपि चेद् भवेत् स्यात्। कन्यापितृत्वम् [illegible] जनकत्वम् हि यतः नः अस्माकं अदूरतोऽपि शीघ्रमेव जामातृत्व पुनः[illegible] चापि भवेद् जायेत्, अतिथिः आगन्तुकश्च, पूजार्हः श्लाघ्यो भवेद्, [illegible]

---

**भगवान्**—राजन्, यदि आप यादव एवं पाण्डवों से सुरक्षित अभिमन्यु का इस तरह सम्मान करेंगे तो लोग कहेंगे कि विराट ने डरकर उसका सम्मान किया है। इसलिए उसकी अवहेलना ही उचित है।

**राजा**—नहीं, सुभद्रा का बेटा अनादरणीय नहीं है। क्योंकि,

क्या वह युधिष्ठिर का बेटा नहीं है? मेरे कुमार का समवयस्क नहीं है? द्रुपद के साथ दूर का वाशिक सम्बन्ध होने के कारण वह मेरा नाती [illegible] है। मैं बेटी का बाप हूँ, हो सकता है निकट भविष्य में वह हमारा जामाता है

पूजार्होऽप्यतिथिर्भवेत् स्वविभवैरिष्टा हि नः पाण्डवाः ॥ ३९ ॥

भगवान्—एवमेतत् । वक्तव्यं परिहर्तव्यं च ।

राजा—अथ केनायं प्रवेशयितव्यः ?

भगवान्—बृहन्नलया प्रवेशयितव्यः ।

---

राजन्या युधिष्ठिरादयः, स्वविभवैः आत्मसम्पद्भिः, इष्टा अभिमताः । अस्मदीया विद्रोहिणो भावाः प्रचण्डभ्रमोत्पादनकारिणो भवन्ति, भासेनास्मिन् नाटके-ऽनुपमतामतसुधाधाराभिर्विद्रोहिभावभीषणानलज्वालां निर्वापयितुम् कृतोऽस्ति प्रयासः । परं न स तदभावे सततं प्रभुरभिमन्यते । तस्य वैपुल्यभावधारिणो लीला आगामि सन्दर्भं स निरोधातुम् तम्, स्वयं पटवेषमपि निदधाति । अभिमन्योः सम्मानप्रदानेऽपि कारणानि सन्ति तत्र प्रथममसौ यादवपाण्डवयोः प्रतापाग्निरूपोऽभिमन्युरस्ति, ततो मम सुतेन यवया । तुल्यः सखाऽस्ति, ममानुवासितमुत्तरबन्धेन दौहित्र, भावी जामाता, मान्योऽतिथिश्च पाण्डवानां पुत्रश्चेति सकलैरेभिः कारणैः स्वस्तेऽप्यभिमन्युरादरमर्हति अस्मात्कारणात् ससम्मानम् तम् प्रवेशयताम् । शार्दूलविक्रीडितम् वृत्तम् ॥ ३९ ॥

भगवान्—एवमेव उचितमेव तव कथनम् । वक्तव्यम् मम कथनम्, परिहर्तव्यम् ममान्यमभिमन्तुमर्हति ।

राजा—अथ अनन्तरम्, केन पुरुषेण, अयम् एष अभिमन्युः, प्रवेशयितव्यः आनेतव्यो भवेत् ।

भगवान्—बृहन्नला नपुंसकभावापन्नोऽज्ञातवासस्थोऽर्जुनः, प्रवेशयितव्यः आनेतव्य इति ।

---

अतिथि का सत्कार तो होना ही चाहिए उस पर भी अपनी समृद्धि के कारण पाण्डव तो हमारे मित्र भी है ॥ ३९ ॥

भगवान्—आप का कथन ठीक है, इस सम्बन्ध में हमारा कहना नहीं भी माना जा सकता है ।

राजा—अच्छा तो अभिमन्यु को बुलायेगा कौन ?

भगवान्—बृहन्नला को ही भेजा जाय ।

राजा—बृहन्नले ! प्रवेश्यतामभिमन्यु ।

बृहन्नला—यदाज्ञापयति महाराजः । ( आत्मगतम् ) चिरस्य खल्वाकाङ्क्षि नियोगो लब्धः । ( निष्क्रान्ता ) ।

भगवान्—( आत्मगतम् )

अद्येदानीं यातु सन्दर्शनं वा शून्ये दृष्ट्वा गाढमालिङ्गनं वा।
स्वैरं तावद् यातु मुद्बाष्पतां वा मत्प्रत्यक्षं लज्जते ह्येष पुत्रम्॥

राजा—पश्यतु भवान् कुमारस्य कर्म ।

**राजा**—बृहन्नले, प्रवेश्यताम् आनीयताम्, अभिमन्युः सुभद्रासुत इति।

**बृहन्नला**—यत यथा, आज्ञापयति आदिशति, महाराजः विराटः ( आत्मगतम् स्वगतम् ) चिरस्य बहुकालस्य खलु निश्चयेन, आकाङ्क्षित अभिलषित, अयम् एष., नियोगः आदेशः, लब्धः प्राप्तः ( निष्क्रान्ता बहिर्गता )

**भगवान्**—( आत्मगतम् स्वगतम् )

**व्याख्या**—अद्य अस्मिन्नेवदिने, इदानीम् अधुना, सन्दर्शनम् पुत्रावलोकनम् यातु भवतु, शून्ये जनशून्ये दृष्ट्वा अभिमन्युमवलोक्य, गाढमालिङ्गनम् गम्भीराश्लेषम् वा यातु। वा अथवा—तावत् तावत्कालपर्यन्तम्, स्वैरम् यथेच्छम्, मुद्बाष्पताम् प्रमदवाजन्यनयनवारि वा यातु, एष हि अर्जुनः मत्प्रत्यक्षम् मम युधिष्ठिरस्य सम्मुखे पुत्रम् सुतमभिमन्युम् आलिङ्गयितुम् लज्जते सकुच ॥४०॥

**राजा**—पश्यतु अवलोकयतु, भवान् श्रीमान् कुमारस्य उत्तरस्य, कर्म रणकौशलम् ।

---

**राजा**—बृहन्नले, अभिमन्यु को बुलाओ।

**बृहन्नला**—श्रीमान् की जैसी आज्ञा ( अपने आप ) बहुत दिनों के बाद इच्छित आदेश मिला है ( जाती है )

**भगवान्**—( अपने आप ) अब अर्जुन को अकेले में बेटे से मिलने का मौका मिला है, अथवा एकान्त में उसे गले लगाने का अवसर मिला है, सम्भव है अकेले में बेटे को पाकर हर्षातिरेक में वह पर्याप्त आँसू बहाये क्योंकि मेरे सामने वह पुत्र को गले लगाने में संकोच का अनुभव करता है ॥ ४० ॥

**राजा**—आप जब कुमार का काम देख—

नृपा भीष्मादयो भग्नाः सौभद्रो ग्रहणं गतः ।
स्ता उत्तरेणाद्य संक्षेपादर्थतः पृथिवी जिता ॥ ४१ ॥

( ततः प्रविशति भीमसेनः )

भीमसेनः —

जतुगृहादीपिते स्वभुजावसक्ता मद्भ्रातरश्च जननी च मयोपनीता ।
सौभद्रमेकमवतार्य रथात् वालं त च श्रम प्रयमनद्य मम हि मन्ये ॥४२॥

इत इत कुमार ।

---

व्याख्या—भीष्मादय भीष्मद्रोणादय, नृपा राजान, भग्ना पराजिता, सौभद्र अभिमन्यु ग्रहणम् गत बन्दीकृत, अद्य अस्मिन्नेव दिने उत्तरेण कुमारेण, संक्षेपात् समासात् अर्थत वस्तुत, पृथिवीम् धरित्रीम्, जिता अधिकृतेति ॥ ४१ ॥

( तत तत्पश्चात्, प्रविशति प्रवेशम् करोति भीमसेन )

व्याख्या—जतुगृहे लाक्षागृहे आदीपिते प्रज्वलिते सति स्वभुजावसक्ता स्वस्य आत्मन, भुजयो बाह्वो अवसक्ता स्थापिता, मत् मम भीमस्य, भ्रातर जननी माता च, मया भीमेन उपनीता स्थानान्तरं प्रापिता, अद्य तु एकम् केवलम्, सौभद्रम् अभिमन्युम्, रथात् स्यन्दनात्, अवतार्य अवरोप्य, तम् च अद्यतनम् प्राक्तनम् च श्रमम् परिश्रमम् हि इति निश्चये अद्य समम् तुल्यम् मन्ये अवैमि । वसन्ततिलकावृत्तम् ॥ ४२ ॥

इत इत अस्यामेव दिशि समागम्यताम् कुमार ।

---

आज उत्तर धरती व सर्वाधिक शक्तिशाली भीष्मादि राजाओं को पराजित कर अभिमन्यु को बन्दी बना कर लिया मानो सारी पृथ्वी का ही जीत लिया है ॥ ४१ ॥

( भीमसेन का प्रवेश )

भीमसेन—लाक्षागृह में जब आग लगी थी तब हमने अपने हाथों से सभी भाइयों और माँ को उठाकर अलग किया था और आज अकेले अभिमन्यु को रथ से उठाता हूँ । पर मेरी दृष्टि में दोनों ही श्रम समान हैं ॥ ४२ ॥

( ततः प्रविशत्यभिमन्युर्बृहन्नला च )

अभिमन्युः—भोः ! को नु खल्वेषः,

विशालवक्षास्तनिमार्जितोदरः स्थिरोन्नतांसोरुमहान् कटीकृशः ।
इहाहृतो येन भुजैकयन्त्रितो बलाधिकेनापि न चास्मि पीडितः ॥ ४३ ॥

बृहन्नला—इत इतः कुमारः ।

अभिमन्युः—अये अयमपरः कः,

अयुज्यमानैः प्रमदाविभूषणैः करेणुशोभाभिरिवार्पितो गजः ।

---

( ततः तत्पश्चात् प्रविशति प्रवेशम् करोति अभिमन्युः बृहन्नला च )

**अभिमन्युः**— भो को नु खलु पुरुष विशेषः एष असौ,

**व्याख्या**—विशालवक्षाः विपुलोरस्कः, तनिमार्जितोदरः कृशत्वेनातिसुन्दरोदरः स्थिरोन्नतांसः सुदृढोन्नतस्कन्धः, च पुनः उरुमहान् विशालबाहुः कटी कटीप्रदेशः कृश दुर्बलः अर्थात् मध्ये क्षीणः, येन पुरुषविशेषेण, भुजैकयन्त्रितः एकनैव हस्तेन धृत्वा, इह अत्र आहृतः समानीतोऽस्मि बलाधिकेनापि । अत्यधिकशक्तिशालिनाऽपि, पीडितः अतिक्रान्तः नास्मि ॥ ४३ ॥

**बृहन्नला**—इत इतः कुमारः अस्मिन्नेव मार्गेण समागम्यताम् ।

**अभिमन्युः**—अये आश्चर्यम्, अयम् पुरोवर्त्तिनः, अपरः अन्यः, कः पुरुषविशेषः ।

**व्याख्या**—अयुज्यमानैः अयुक्तिकरैः, प्रमदाविभूषणैः वनितालङ्कारैः करेणुशोभाभिः हस्तिनीप्रभाभिः, अर्पितैः सुसज्जितैः, गजः करी, इव यथा अयम्

---

( अभिमन्यु और बृहन्नला का प्रवेश )

**अभिमन्यु**—अरे यह कौन है ?

चौडी छाती, कृश उदर, उन्नत स्कन्ध, तथा लम्बी बाहे हैं, हाथ से ही जिसने मुझे यहाँ तक उठा लाया है, अधिक बलशाली होने पर भी इसने मुझे अतिक्रान्त नही किया ॥ ४३ ॥

**बृहन्नला**—इधर से इधर से कुमार चलें ।

**अभिमन्यु**—अरे, यह दूसरा कौन है ?

यह औरत के वेष मे ऐसा लगता है जैसे हथिनी की शोभा से युक्त कोई

लघुश्च वेषेण महानिवौजसा विभात्युमावेषमिवाश्रितो हरः ॥ ४४ ॥

बृहन्नला—( अपवार्य ) इममिहानयता किमिदानीमार्येण कृतम् ।

अवजित इति तावद् दूषितः पूर्वयुद्धे
दयितसुतवियुक्ता शोचनीया सुभद्रा ।
जित इति पुनरेनं रुष्यते वासुभद्रो
भवतु बहु किमुक्त्वा दूषितो हस्तसारः ॥ ४५ ॥

---

पुरुष वेषेण वस्त्राभूषणेन, रघु सामान्य च ओजसा तेजसा, महान् अतिश्रेष्ठ, इव यथा, उमावेषम् गौरीरूपम्, आश्रित धृत हर. शिव इव विभाति शोभा धारयति ॥ ४४ ॥

बृहन्नला—( अपवार्य अभिमन्युमयावयित्वा ) इमम् अभिमन्युकुमारम्, इह विराटसदने, आर्येण पूज्येन इदानीम् अधुना, आनय वा कुमारमानयनम्, किं कृतम् उचित न कृतमासीत् ।

व्याख्या—पूर्वयुद्धे प्रथमे सङ्गरे, अवजित. पराभूत', इति इत्थम्, तावद् इति वाक्यालङ्कारे, दूषितः कलङ्कितोजात, सुभद्रा अभिमन्युजननी, दयितसुत-वियुक्ता दयितेन पत्या सुतेन पुत्रेण च वियुक्ता वञ्चिता, शोचनीया चिन्तनीया, मता, पुनः, एनम् अभिमन्युम्, जित. प्रथमे समरे पराजित इति हेतो. वा सुभद्र-श्रीकृष्ण, रुष्यते कुप्यति, बहुकिमुक्त्वा अत्यधिककथनेन किम् ? भवताऽभि-मन्यु गृहीत्वा, बाहुसारम् निजभुजबलम्, दूषितः कलुषित । भवतु दूरे तिष्ठतु इत्येकार्थम् ॥ ४५ ॥

---

मत्तगजराज हो, वेष से यह जितना सामान्य है पराक्रम से उतना ही महान् प्रतीत होता है। लगता है शङ्कर ने उमा का वेष धारण किया है ॥ ४४ ॥

बृहन्नला—(एक ओर को) अभिमन्यु को यहाँ लाकर आपने क्या किया? पहले ही युद्ध मे इसे पराजित होने का कलक लगाया, पति और पुत्र से विहीन सुभद्रा को शोचनीय दशा मे पहुँचाया। इसकी हार की खबर से कृष्ण अलग क्रुद्ध होंगे। अधिक क्या? आपने अपने बाहुबल को कलंकित किया है ॥ ४५ ॥

भीमसेन.—अर्जुन !

बृहन्नला—अथ किम्, अथ किम्, अर्जुनपुत्रोऽयम् ।

भीमसेन—( अपवार्य )

जानाम्येतान् निग्रहादस्य दोषान् को वा पुत्र मर्षयेच्छत्रुहस्ते ।
इष्टापत्त्या किन्तु दु.खे हि मग्ना पश्यत्वेनं द्रौपदीत्याहृतोऽयम् ॥४६॥

बृहन्नला—(अपवार्य) आर्य अभिभाषणकौतूहल मे महत् । वाचालयत्वेनमार्य. ।

भीमसेन.—( अपवार्य ) बाढम् ! अभिमन्यो !

---

भीमसेनः—अर्जुन भो पार्थ ।

बृहन्नला—अथ किम्, अथ किम्—किमन्यत् यदुक्त तत्तदेवेत्यर्थ, अङ्गीकारेऽपि चाथ किम् इति अथ किमेत्येकमव्ययम् । अर्जुनपुत्रोऽयम् अर्जुनस्यैवाय सुत. इत्यनेनाभिमन्योः पराभवं प्रति रोषो व्यञ्जितः ।

भीमसेन —( अपवार्य ) अर्जुनमथाव्य—

व्याख्या—अस्याभिमन्यो , निग्रहात् अवग्रहात् अवरोधात्, एतान् पूर्वोक्तान्, दोषान् पूर्वोक्तदोषत्रयान्, जानामि अवगतोऽस्मि, कः पुरुषविशेष , वा पुत्रम् स्वसुतम्, शत्रुहस्ते अरिकरे, मर्षयेत् क्षिपेत्, इष्टापत्त्या मन्ये सर्वं ज्ञातवेदम् कृतम् तत्कारणमाह—दु.खे कष्टे, मग्ना निमग्ना, द्रौपदी द्रुपदसुता, इमन् अभिमन्युम्, पश्यतु अवलोकयतु, इति हेतो , मया अयम् अभिमन्यु आहृत आनीत..इत्याशय. ॥ ४६ ॥

भीमसेनः—( अपवार्य अथाव्य ) बाढम्-स्वीकृतम्, अभिमन्यो !

---

भीमसेन—अर्जुन ।

बृहन्नला—हाँ हाँ, यह अर्जुन का बेटा है।

भीमसेन—( एक ओर )–अभिमन्यु की हार से उत्पन्न इन दोषों से अवगत हूँ। भला ऐसा कौन होगा जो अपने बेटे को शत्रु के हाथ में जाना पसंद करे। फिर भी ऐसा इसलिए किया कि दुःखी द्रौपदी को इसे देखकर सान्त्वना मिले ॥ ४६ ॥

बृहन्नला—( एक ओर ) आर्य, इससे बात करने की मेरी बडी उत्कण्ठा है, आप इसे बोलने को कहे ।

भीमसेन—( एक ओर ) ठीक है, अभिमन्यु ।

अभिमन्यु —अभिमन्युर्नाम ।

भीमसेन – रुष्यत्येष मया । त्वमेवैनमभिभाषय ।

बृहन्नला—अभिमन्यो ।

अभिमन्यु—कथं कथम् । अभिमन्युर्नामाहम् । भोः—

नीचैरप्यभिभाष्यन्ते नामभिः क्षत्रियान्वयाः ।
इहाय समुदाचारो ग्रहणं परिभूयते ॥ ४७ ॥

बृहन्नला—अभिमन्यो । सुखमास्ते ते जननी ।

---

**अभिमन्यु**—अभिमन्युर्नाम—स्वनाम श्रुत्वा साश्चर्यं वदत्यभिमन्युर्नामेति ।

**भीमसेन**—मया भीमेन, एष अभिमन्युः, रुष्यति कुप्यति । त्वमेव बृहन्नलेव, एतम् अभिमन्युम् अभिभाषय भाषणं कुरु ।

**बृहन्नला**—तम् सम्बोधयति—अभिमन्यो ।

**अभिमन्यु**—कथमित्याश्चर्ये, अभिमन्यु इति नाम्ना आह्वयति । भो इति आह्वाने—

**व्याख्या**—नीचैः निम्नकार्येषु गतन्तैः सेवकैः, क्षत्रियान्वयाः क्षत्रियवंशोद्भवाः, नामभिः नामैव, अभिभाष्यन्ते सम्बोध्यन्ते, इह अस्मिन् नगरे, अयम् एतादृशः, समुदाचारः व्यवहारः ? अथवा ग्रहणम् अहम् शत्रुवशगतः तेन परिभूयते अवमन्यते ॥ ४७ ॥

**बृहन्नला**—हे अभिमन्यो, ते तव, जननी माता, सुखमास्ते कुशलिनी विद्यते ।

---

**अभिमन्यु**—अभिमन्यु ।

**भीमसेन**—मुझसे तो यह चिढता है, तुम्हीं इससे बात करो ।

**बृहन्नला**—अभिमन्यु ।

**अभिमन्यु**—क्यों मेरा नाम लेकर पुकारते हो । क्या क्षत्रिय कुमार को यहां के सेवक नाम लेकर ही पुकारते हैं । यहाँ का यही व्यवहार है ? अथवा बन्दी होने के कारण मुझे अपमानित किया जा रहा है ॥ ४७ ॥

**बृहन्नला**—अभिमन्यु, तुम्हारी माँ तो अच्छी है ?

अभिमन्युः—कथं कथम् ! जननी नाम ।

किं भवान् धर्मराजो मे भीमसेनो धनञ्जयः ।
यन्मां पितृवदाक्रम्य स्त्रीगतां पृच्छसे कथाम् ॥ ४८ ॥

बृहन्नला—अभिमन्यो ! अपि कुशली देवकीपुत्रः केशवः ?

अभिमन्युः—कथं तत्रभवन्तमपि नाम्ना । अथ किम्, अथ किम् । कुशली भवतः संसृष्टः ।

( उभौ परस्परमवलोकयतः )

---

अभिमन्युः—कथम् कथम् जननीनाम् मम मातुः कुशलं पृच्छति क्रोधाभिव्यक्तिः ।

व्याख्या—यत् यस्माद्धेतो', मामभिमन्युम्, पितृवत् जनकमदृशः, आक्रम्य अधिकृत्य, स्त्रीगताम् स्त्रीविषयाम्, कथाम् वार्त्ताम्, पृच्छसे जिज्ञाससि, तद् किम् भवान् त्वम्, मे ममाभिमन्यो', धर्मराज युधिष्ठिरः, भीमसेन वृकोदरः अथवा धनञ्जयः अर्जुन, त एव एतान् प्रश्नान् कर्त्तुम् अधिकुर्वते न च त्वादृशाः नीचसेवका इति ॥ ४८ ॥

बृहन्नला—अभिमन्यो, देवकीपुत्र देवकीसुत, केशव श्रीकृष्णः, अपि कुशली सकुशलमस्तीति भावः ।

अभिमन्युः—कथम् केन कारणेन, तत्र भवन्तम् श्रीमन्तम् श्रीकृष्णमपि, नाम्ना नामग्रहणेनैव व्याहरति । अथ किम् इदमेकमव्ययमङ्गीकार्यम्, त्वम् मदारव तत्तथैवेत्यर्थः । कुशली सकुशलम्, भवतः त्वदीयः संसृष्टः सम्बन्धे ।

( उभौ द्वौ, परस्परम् अन्योन्यम्, अवलोकयतः )

---

अभिमन्यु—क्या ? क्या ? मेरी माँ के बारे मे पूछता है—

क्यो आप धर्मराज युधिष्ठिर, भीम अथवा अर्जुन हैं जो मुझे अधिकृतकर मुझसे मेरी माँ के बारे मे पूछ रहे हैं ? ॥ ४८ ॥

बृहन्नला—क्यो अभिमन्यु, देवकी पुत्र कृष्ण तो सकुशल हैं ?

अभिमन्यु—क्यो भगवान को भी नाम लेकर ही । और क्या आपके ... सकुशल हैं ।

( दोनो एक दूसरे को देखते हुए )

अभिमन्युः—कथमिदानीं सावज्ञमिव मां हस्यते ।

बृहन्नला—न खलु किञ्चित् ।

पार्थं पितरमुद्दिश्य मातुलं च जनार्दनम् ।
तरुणस्य कृतास्त्रस्य युक्तो युद्धपराजयः ॥ ४६ ॥

अभिमन्युः—अलं स्वच्छन्दप्रलापेन ।

अलमात्मस्तवं कर्तुं नास्माकमुचितं कुले ।
हतेषु हि शरान् पश्य नाम नान्यद् भविष्यति ॥ ५० ॥

---

अभिमन्यु—कथम् केन कारणेन, इदानीम् अधुना, सावज्ञम् अवहेलनापूर्वकम्, माम् अभिमन्युम् हस्यते उपहसति,

बृहन्नला—न खलु किञ्चित् नास्ति किमपि ।

व्याख्या—पितरम् जनकम्, पार्थम् अर्जुनम्, उद्दिश्य अभिलक्ष्य च पुनः मातुलम् मातुः भ्रातरम्, जनार्दनम् श्रीकृष्णम् अभिलक्ष्य ज्ञात्वा वा, तरुणस्य नवयुवकस्य, कृतास्त्रस्याधीतधनुर्विद्यस्य, युद्धपराजयः समरे पराभवः युक्तम् किमुचितमिति नास्त्येवेति भावः ॥ ४९ ॥

अभिमन्यु—अलम् व्यर्थम्, स्वच्छन्दप्रलापेन यथेच्छया वार्तालापेन,

व्याख्या—आत्मस्तवम् निजप्रशंसाम्, कर्तुम् कृत्वा, अलम् व्यर्थम् अस्माकम् न, कुले वंशे, उचितम् युक्तम्, न नहि, हतेषु मृतेषु, शरान् बाणान्, पश्य अवलोकय, अन्यस्य परस्य, नाम संज्ञा, न नहि भविष्यतीति मयैव युद्धे हैलिरा मारिता ॥ ५० ॥

---

अभिमन्यु—क्यों अब तो ये मेरी ओर अवहेलना पूर्वक देखकर हँस

बृहन्नला—कुछ नहीं,—अपने पिता पार्थ, तथा मामा कृष्ण को यादकर इस नयी जवानी में युद्ध विशारद होकर भी क्या आपको युद्ध में इस तरह चाहिए था ॥ ४९ ॥

अभिमन्यु—बस-बस, यथेच्छ अट सट बकना बन्द करो ।

अपने वंश की मर्यादा के अनुसार मैं अपनी प्रशंसा अपने मुख से नहीं करना चाहता, इस सन्दर्भ में इतना ही कहूँगा—मृतयोद्धाओं की देह को जाकर देखो बाणों पर किसी दूसरे का नाम नहीं मिलेगा ॥ ५० ॥

अभिमन्यु.—ब्राह्मणेनेति । ( उपगम्य ) भगवन् । अभिवादये ।

भगवान्—एह्येहि वत्स !

शौण्डीर्यं धृतिविनय दया स्वपक्षे माधुर्यं धनुषि जय पराक्रम च ।
एकस्मिन् पितरि गुणानवाप्नुहि त्वं शेषाणा यदपि च रोचते चतुर्णाम् ॥५४॥

अभिमन्यु —अनुगृहीतोऽस्मि ।

राजा—एह्येहि पुत्र । कथं न मामभिवादयसि । अहो उत्सिक्त खल्वय क्षत्रियकुमारः । अहमस्य दर्पप्रशमनं करोमि । अथ केनाय गृहीतः ।

---

**अभिमन्यु**—ब्राह्मणेन विप्रेण इति ( उपगम्य समीपम् गत्वा ) भगवन् हे देव, अभिवादये प्रणमामि ।

**भगवान्**—एह्येहि समागम्यताम् , वत्स पुत्र ।

**व्याख्या**—शौण्डीर्यम् शूरत्वम् , धृतिविनयम् धैर्यविनम्रतयो समाहार स्वपक्षे स्वजने, दयाम् कृपाम् , माधुर्यम् मधुरवचनम् , च, धनुषि चापे, जयम् विजयम् , पराक्रमम् साहसञ्च, इति एकस्मिन् जनकानाम् च गुणेषु यत्ते रोचते तदप्यधिगच्छ । पितृतुल्यगुणी भव । प्रहर्षिणीवृत्तम् ॥ ५४ ॥

**अभिमन्युः**—अनुगृहीतोऽस्मि—कृपान्वितोऽस्मि ।

**राजा**—एह्येहि समागम्यताम्, पुत्र हे वत्स । कथन्न हि माम् विराटम् अभिवादयसि प्रणमसि, अहो इत्याश्चर्ये, उत्सिक्त गर्वोद्धत., खलु शब्दश्च वितर्के, अयम् एष., क्षत्रियकुमार. अभिमन्यु । अहम् विराट, अस्य अभिमन्यो,

---

**अभिमन्यु**—ब्राह्मण के साथ ( पास जाकर ) भगवन् मैं आपको प्रणाम करता हूँ ।

**भगवान्**—आओ बेटे, तुम्हारे एकपिता धनञ्जय मे जो वीरता, धीरता, विनम्रता, दयालुता, मिष्टभाषिता प्रभृति गुण हैं, उन्हे तथा अन्य पिताओ के वर्त्तमान गुणो मे से जो तुम्हे जँचे उसे ग्रहण करो ॥ ५४ ॥

**अभिमन्यु**—अनुगृहीत हुआ ।

**राजा**—आओ बेटा आओ, तुम मुझे प्रणाम क्यों नही करते ? अहो, यह

भीमसेन—महाराज ! मया ।

अभिमन्युः—अशस्त्रेणेत्यभिधीयताम् ।

भीमसेन —शान्तं शान्तं पापम् ।

सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ ।
ताावाश्रित्य प्रयुध्येय दुर्बलैर्गृह्यते धनुः ॥ ५५ ॥

अभिमन्यु —मा तावद् भो ,

बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः ।

---

दर्पप्रशमनम् मिष्टभाषितैः सान्त्वनम्, करोमि विदधामि, अथ इदमेकमव्ययम्, केन पुरुषेण, अयम् एष, गृहीत बन्दीकृत ।

**भीमसेनः**—महाराज हे नृप, मया भीमेन,

**अभिमन्यु**.—अशस्त्रेण शस्त्रविहीनेन इति इत्थम्, अभिधीयताम् कथ्यताम् ।

**भीमसेनः**—शान्तम् शान्तम् पापम् पापप्रशमन भवतु इत्यनेन विरोधम् दर्शयति–अहो, इत्थम् भवितुम् नार्हतीति भाव. ।

**व्याख्या**—पीनांसकोमलौ स्थूलस्कन्धकोमलौ, भुजौ करौ एव मे भीमस्य, सहजौ स्वाभाविकौ प्रहरणम् शस्त्रम्, तौ भुजावेवाश्रित्यावलम्बनम् कृत्वा, प्रयुध्येयम् युद्धम् कुर्याम्, धनु चापस्तु दुर्बलै बलहीनै गृह्यते ग्रहणं कृत्वा युद्ध्यते ॥ ५५ ॥

**अभिमन्यु**– मा तावत् भो एवं मा वद—

**व्याख्या**—यस्य भीमस्य, बाहू एव भुजा एव, अक्षौहिणी अपरिमितसेना,

---

क्षत्रिय कुमार तो बडा घमण्डी है, पहले इसके घमण्ड को दूर करता हूँ । अच्छा तो इसे किसने पकड़ा ?

**भीमसेन**—महाराज मैंने ।

**अभिमन्यु**—'निहत्थे होकर पकडा' ऐसा कहिए ।

**भीमसेन**—नहीं ऐसा नहीं हो सकता—ये मोटी मांसल बाँहें ही मेरे हथियार हैं । धनुष तो दुर्बलों के अस्त्र हैं ॥ ५५ ॥

**अभिमन्यु**—नहीं, जिनकी भुजा ही अक्षौहिणी सेना के बराबर हैं, जिनका

किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः ॥ ५६ ॥

भगवान्—पुत्र ! कोऽयं मध्यमो नाम ।

अभिमन्युः—श्रूयताम् । अथवा, नन्वनुत्तरा वयं ब्राह्मणेषु, सान्यो ब्रूयात् ।

राजा—भवतु भवतु । मद्वचनात् पुत्र ! कोऽयं मध्यमो नाम ?

अभिमन्युः—श्रूयताम् । येन,

योक्त्रयित्वा जरासन्धं कण्ठश्लिष्टेन बाहुना ।—

---

विक्रमः पराक्रमस्तु, निर्व्याजः कपटशून्यः, एतादृशः किं भवान् मध्यमस्तातः भीमसेनः ? एतद्वचः पूर्वोक्तम् वचनम् तस्यैव सदृशम् युक्तम् न तु भवतः ॥५६॥

भगवान्—पुत्र हे सुत, कोऽयम् कः असौ मध्यमो नाम ?

अभिमन्युः—श्रूयताम् आकर्ण्यताम् अथवा, नन्विति वितर्के, अनुत्तरा अप्रतिवचनाः, वयम् ब्राह्मणेषु विप्रेषु साधु सुष्ठु भवति, यदि अन्यः अपर ब्रूयात् कथयेत् ।

राजा—भवतु भवतु यद्भवतु तद्भवतु पुत्र मद्वचनात् मदीयप्रश्नात् ब्रूहि कोऽयं मध्यमो नाम ?

अभिमन्युः—श्रूयताम् आकर्ण्यताम्, येन पुरुषविशेषेण—

व्याख्या—कण्ठाश्लिष्टेन तत्कण्ठासक्तेन, बाहुना स्वभुजेन जरासन्धम् मगधाधिपतिं बृहद्रथपुत्रम् योक्त्रयित्वा बद्धम् विधाय, असह्यम् असाध्यम् तत् पूर्वोक्तम्, कर्म कृत्यम्, कृत्वा विधाय कृष्णः वासुदेवः अतदर्हताम् तादृ-

---

पराक्रम निष्कपट है, ऐसे हमारे मध्यम तात को ही ऐसे कथन शोभते हैं ॥५६॥

भगवान—बेटा, तुम्हारे ये मध्यम तात कौन हैं ?

अभिमन्यु—सुनिए, अथवा—हमलोग ब्राह्मणों के साथ सवाल-जवाब नहीं करते हैं। अच्छा होता कोई दूसरा ही पूछता।

राजा—अच्छी बात है, बेटा, मेरे ही प्रश्न का उत्तर दो। तुम्हारे मध्यम तात कौन हैं ?

अभिमन्यु—सुनिये-जिसने अपने हाथों से जरासन्ध के कण्ठ को बाँधकर

असह्यं कर्म तत् कृत्वा नीतः कृष्णोऽतदर्हताम् ॥ ५७ ॥

राजा—

न ते क्षेपेण रुष्यामि रुष्यता भवता रमे ।
किमुक्त्वा नापराद्धोऽहं कथं तिष्ठति यात्विति ॥ ५८ ॥

अभिमन्युः—यद्यहमनुग्राह्य,

पादयोः समुदाचारः क्रियतां निग्रहोचितः ।
बाहुभ्यामाहृतं भीमो बाहुभ्यामेव नेष्यति ॥ ५९ ॥

---

न्तर्हितामनताम् नीतः प्रापितः । यः कृष्णोऽपि न इत्यन्तमप्यसहीदित्यर्थः ॥ ५७ ॥

व्याख्या—ते तव, क्षेपेण निन्दावचनेन, न नहि, रुष्यामि क्रुद्धो भवामि, रुष्यता कुप्यता त्वया भवता, रमे प्रसन्नो भवामि, किमुक्त्वा किं कथयित्वा, त्वम्वा तिष्ठति यातु गच्छतु वा, अहम् विराटः न नहि, अपराद्धः अपराधी नाम ? भवन् तिष्ठति अथवा यथेष्टं गच्छ इत्युक्त्वाऽहमपराधी भवेयमिति भावः ॥ ५८ ॥

अभिमन्यु—यदि चेत्, अहम् अभिमन्युः, अनुग्राह्यः मयि कृपा करणीया तर्हि—

व्याख्या—पादयो मम चरणयोः, निग्रहोचितः बन्दीजनोपयुक्तः समुदाचारः रक्षिताचरणं, क्रियताम् विधीयताम्, इत्यम्भूतो व्यवहारः, बाहुभ्याम् भुजाभ्याम् आहृतम् आनीतम्, बाहुभ्यामेव भुजाभ्यामेव भीमः मम मध्यमतातः, नेष्यति नीत्वा गमिष्यति ॥ ५९ ॥

---

इस असह्य कर्म को पूरा किया जिसे भगवान कृष्ण भी पूरा नहीं कर सके ॥५७॥

राजा—तुम्हारी निन्दा करने से मुझे कष्ट नहीं होता है पर, तुम्हें चिढ़ाने में आनन्द आता है। तुम क्यों खड़े हो अथवा यहाँ से तुम चले जाओ, ऐसा अगर कहूँ तो तुम्हारे प्रति मेरा यह अपराध नहीं होगा क्या ॥ ५८ ॥

अभिमन्यु—यदि मुझ पर कृपा करना चाहते हो तो—

मेरे पैरों में बन्दी जनोचित बेड़ी डाल दीजिए। मुझे कोई हाथों से पकड़ कर लाया, मेरे मध्यम पिता भीम मुझे हाथों से छुड़ाकर ले जायेंगे ॥ ५९ ॥

( ततः प्रविशत्युत्तरः )

उत्तर.—

मिथ्याप्रशंसा खलु नाम कष्टा येषां तु मिथ्यावचनेषु भक्तिः।
अहं हि युद्धाश्रममुच्यमानो वाचानुवर्ती हृदयेन लज्जे॥ ६०॥

( उपसृत्य ) भगवन् ! अभिवादये ।

भगवान्—स्वस्ति ।

उत्तरः—तात ! अभिवादये ।

राजा—एह्येहि पुत्र ! आयुष्मान् भव । पुत्र ! पूजिता ...

( ततः तदनन्तरम् प्रविशति प्रवेशङ्करोति कुमार उत्तरः )

**व्याख्या**—येषाम् वन्दीचारणादिजनानाम्, मिथ्यावचनेषु असत्यकथनषु भक्तिः प्रीतिः तेषाम्, मिथ्याप्रशंसा असत्यस्तुतिः, खलु निश्चयेन, कष्टा कष्टप्रदा नाम, अहम् उत्तरः हि यतः, युद्धाश्रयम्, युद्धविजयम्, उच्यमानः अभिधीयमानः सन्, वाचानुवर्ती मुखशब्देन तान्नभिनन्दन्नपि, हृदयेन चित्तेन, लज्जे जिह्रेमि॥६०॥

( उपसृत्य समीप गत्वा ) भगवन्, अभिवादये प्रणमामि ।

**भगवान्**—स्वस्ति कल्याण भवतु ।

**उत्तरः**—तात हे पितः, अभिवादये प्रणमामि ।

**राजा**—एह्येहि आगच्छ, पुत्र हे सुत ! आयुष्मान् भव चिरञ्जीव, पुत्र

( उत्तर का प्रवेश )

**उत्तर**—झूठी प्रशंसा दुःखदायिनी होती है। चारण और भाटों को तो मिथ्या स्तुति का अभ्यास ही बना रहता है। ये इस युद्ध के सम्बन्ध में मेरी प्रशंसा करते हैं और मैं भी वचन से उनकी प्रशंसा करता हूँ। पर हृदय से लज्जित हो रहा हूँ ॥ ६० ॥

( पास आकर ) भगवन् ! मैं प्रणाम करता हूँ।

**भगवान्**—तुम्हारा कल्याण हो।

**उत्तर**—पिताजी, प्रणाम करता हूँ।

**राजा**—आओ बेटे आओ। चिरजीवी बनो, बेटा, युद्ध में काम आने वाले

योधपुरुषा ?

उत्तर—पूजिता । पूज्यतमस्य क्रियतां पूजाम् ।

राजा—पुत्र ! कस्मै ?

उत्तर—इहात्रभवते धनञ्जयाय ।

राजा—कथं धनञ्जयायेति ।

उत्तर—अथ किम् । अत्रभवता,

श्मशानाद्धनुरादाय तूणीं चाक्षयसायके ।
नृपा भीष्मादयो भग्ना वयं च परिरक्षिता ॥ ६१ ॥

---

पूजिता अर्चिता, कृतकर्माण समरे प्रदर्शितपुरुषकारा, योधपुरुषा युद्धवीरा ।

**उत्तर**—पूजिता अर्चिता, पूज्यतमस्य श्लाघनीयस्य, पूजाम् अर्चाम्, क्रियताम् विधीयताम् ।

**राजा**—पुत्र हे सुत ! कस्मै कस्य पूजाम् करिष्यामि ?

**उत्तर**—इह अस्मिन् स्थाने अत्र भवते श्रीमते धनञ्जयाय अर्जुनाय ।

**राजा**—कथम् केन प्रकारेण धनञ्जयाय अर्जुनाय इति ।

**उत्तर**—अथ किम् इदमवमव्ययमङ्गीकारार्थमिदम् त्वं यदात्थ तत्तथैवत्यर्थं । अत्र भवता पूज्यन धनञ्जयेन ।

**व्याख्या**—श्मशानात् श्मशानप्रदेशात्, धनु गाण्डीवम्, आदाय नीत्वा, अक्षयसायके अक्षीणबाणे तूणीम् तूणीरम् च नीत्वा, भीष्मादय भीष्मादिप्रमुखा, नृपा राजान भग्ना पराजिता च पुन वयम्, रक्षिता याता । अत पूजामर्हति धनञ्जय इति भाव ॥ ६१ ॥

---

बहादुरों का सत्कार सम्पन्न हो गया क्या ?

**उत्तर**—सम्पन्न हो गया । अब सर्वाधिक पूज्य की पूजा कीजिए ।

**राजा**—किसकी पूजा करने को कह रहे हो बेटा ।

**उत्तर**—बस, इस पूजनीय धनञ्जय की ।

**राजा**—क्या धनञ्जय की ?

**उत्तर**—और क्या ? इस धनञ्जय ने श्मशान से अपना गाण्डीव एवं अक्षय तूणीर लाकर भीष्मादि प्रमुख राजाओं को युद्ध में परास्त किया और हमारी रक्षा की है ॥ ६१ ॥

राजा—एवमेतत् ।

बृहन्नला—प्रसीदतु प्रसीदतु महाराजः ।

अयं बाल्यात्तु सम्भ्रान्तो न वेत्ति प्रहरन्नपि ।
कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति ॥ ६२ ॥

उत्तर—व्यपनयतु भवाञ्छङ्काम् । इदमाख्यास्यते,

प्रकोष्ठान्तरसगूढं गाण्डीवज्याहतं किणम् ।

राजा—एवम् इत्थम्, गतदिति धनञ्जयेन यदि वयम् परिरक्षिता अवश्यमेवायम् पूजामर्हतीति भाव ।

बृहन्नला—प्रसीदतु प्रसन्ना भव, प्रसीदतु कृपा कुरु, महाराज हे नृप।

व्याख्या—अयम् उत्तर, बाल्यात् शिशुभावात्, सम्भ्रान्त, भ्रमित सन् प्रहरन्नपि अरिषु प्रहार कुर्वन् अपि, न नहि, वेत्ति जानाति । कृत्स्न सम्पूर्णम् कर्म समरविजयम् कृत्वा विधाय, परस्य अन्यस्य, इत्यवगच्छति जानाति। स्वय समरे शत्रून् विजित्यान्यकृतकर्म इत्यवस्यति तदय कुमारस्य बाल्यभावः सम्भ्रम एव केवल इति ॥ ६२ ॥

व्याख्या—प्रकोष्ठान्तरसगूढम् मणिबन्धमध्ये समुत्पन्नम्, गाण्डीवज्याहतम् गाण्डीवस्य एतन्नामकचापकस्य ज्या मौर्व्याहतम् आघातेन समुत्पन्नम्, किणम् यत् दृश्यते, तद् द्वादशवर्षान्ते द्वयाधिकदशवत्सरापगमेऽपि सवर्णताम् समरूपताम् नैव याति न भवति । अर्जुनस्य प्रकोष्ठान्तर पश्य बहुकालावधि

---

राजा—क्या ऐसी बात है ?

बृहन्नला—क्षमा करें महाराज क्षमा करें ।

अल्प वयस्क होने के कारण कुमार बुरी तरह घबडा गये हैं, शत्रुओं पर स्वयं इन्होंने प्रहार किया, सारी लड़ाईयाँ इन्होंने स्वयं लड़ी पर, इन्हें लगता है, कोई दूसरा लड़ता रहा है ॥ ६२ ॥

उत्तर—आप अपना सन्देह दूर करले । यह आपको बतला रहा है—

कलाई का घाव जो गाण्डीव की प्रत्यञ्चा की रगड से उत्पन्न हुआ है वे ये धनञ्जय है घाव के इस चिह्न ने बारह साल बीत जाने पर भी अपना रङ्ग नहीं

यत्तद् द्वादशवर्षान्ते नैव याति सवर्णताम् ॥ ६३ ॥

बृहन्नला—

एतन्मे परिहार्याणां व्यावर्तनकृतं किणम् ।
सन्निरोधविवर्णत्वाद् गोधास्थानमिहागतम् ॥ ६४ ॥

राजा—पश्यामस्तावत् ।

बृहन्नला—

रुद्रबाणावलीढाङ्गो यद्यहं भारतोऽर्जुनः ।
सुव्यक्तं भीमसेनोऽयमयं राजा युधिष्ठिरः ॥ ६५ ॥

---

तस्य गाण्डीवज्याहतम् चिह्नम् सुरक्षितमस्ति स अयमर्जुन एवासि ॥ ६३ ॥

**व्याख्या**—एतत् एव, मे मम, परिहार्याणाम् वलयानाम्, सन्निरोध-विवर्णत्वात् सुदृढप्रतिबन्धनकृतवर्णभेदात्, गोधास्थानम् गौर्व्याघातनिवारण स्थलम् प्रकोष्ठदेशमागतम्, व्यावर्तनम् अनेकपरिवर्त्तनजन्यचिह्नम्, कृतम् निर्मितम् । नाय गाण्डीवज्याकृतचिह्नम् प्रत्युत वलयविवर्त्तनजन्यचिह्नमस्ति । अतोनाहं धनञ्जयः भ्रमेणाऽऽशङ्काऽस्ति ॥ ६४ ॥

**राजा**—तावदिदमवधारणे, पश्यामः निरूपयामः, अर्थात् सूक्ष्मतया निरीक्ष्य निर्णयङ्करोमि ।

**व्याख्या**—यदिचेत्, अहम् बृहन्नला, रुद्रबाणावलीढाङ्गः शङ्करशरक्षत-गात्रः, भारत भरतवंशीयः, अर्जुनः पार्थः अस्मि तर्हि अयम् एव तव पावकः, भीमसेनः वृकोदरः अस्ति तथा चायम् भगवान् राजा नृपः, युधिष्ठिरः धर्मराजः, सुव्यक्तम् सुस्पष्टमस्ति ॥ ६५ ॥

---

बदला है ॥ ६३ ॥

**बृहन्नला**—यह तो मेरे कंगने की रगड़ से चिह्न बन गये हैं, ये छल्ले बार-बार हिलते हैं जिससे मणिबंध छिल गया है ॥ ६४ ॥

**राजा**—हम देखें तो,

**बृहन्नला**—शंकर के शरों से क्षताङ्ग यदि मैं भरतवंशीय अर्जुन हूँ तो निश्चय आर्य भीम हैं ये महाराज युधिष्ठिर हैं ॥ ६५ ॥

तस्य पुत्रापराधस्य प्रसादं कर्तुमर्हसि ॥ ६८ ॥
(इति प्रणमति)

भीमसेन—एह्येहि पुत्र ! पितृसदृशपराक्रमो भव ।
अभिमन्यु:—अनुगृहीतोऽस्मि ।
भीमसेन—पुत्र ! अभिवादयस्व पितरम् ।
अभिमन्यु:—भोस्तात ! अभिवादये ।
अर्जुन—एह्येहि वत्स ! (आलिङ्ग्य)

अयं स हृदयाह्लादी पुत्रगात्रसमागमः ।

---

राधस्यात्मनहतागसः, प्रसाद अनुग्रहम्, कर्त्तुम् विधातुम् अर्हसि योग्योसि॥६८॥
(इति प्रणमति अभिवादयति)

**भीमसेनः**—एह्येहि पुत्र आगच्छ सुत, पितृसदृशपराक्रम. निजजनकतुल्य शक्तिशाली भव ।

**अभिमन्यु.**—अनुगृहीतोऽस्मि कृपान्वितो जातः ।

**भीमसेनः**—पुत्र हे सुत, पितरम् जनकम्, अभिवादयस्व प्रणम्यताम् ।

**अभिमन्यु.**—भो तात हे पित', अभिवादये प्रणमामि ।

**अर्जुनः**—एह्येहि समागच्छ वत्स पुत्र (आलिङ्ग्य गाढालिङ्गन कृत्वा)

**व्याख्या**—अयम् एष', सः पूर्वमनुभूत,, हृदयाह्लादी चित्तानन्दकर. पुत्र गात्रसमागम. आत्मजस्पर्श. यः पुत्र, प्रोषितः दूर गतः, त्रयोदशवर्षान्ते त्रयोधिक

---

बेटे के इस अपराध को आप क्षमा करें ॥ ६८ ॥
(प्रणाम करता है)

**भीमसेन**—आओ बेटे आओ । अपने पिता की तरह ही पराक्रमी बनो ।
**अभिमन्यु**—अनुगृहीत हुआ ।
**भीमसेन**—बेटा ! अपने बाप को तो प्रणाम करो ।
**अभिमन्यु**—पिता जी,-प्रणाम करता हूँ ।
**अर्जुन**—आओ बेटे आओ । (गले लगाकर)
हृदय को आनन्दित करने वाले पुत्र के शरीर का यह वही स्पर्श है जो

यस्त्रयोदशवर्षान्ते प्रोषितः पुनरागतः ॥ ६८ ॥

पुत्र ! अभिवाद्यतां विराटेश्वरः ।

अभिमन्युः—अभिवादये ।

राजा—एह्येहि वत्स !

यौधिष्ठिरं धैर्यमवाप्नुहि त्वं भैमं बलं नैपुणमर्जुनस्य ।
माद्रीसुतयोः कान्तिमथाभिरूप्यं कीर्तिं च कृष्णस्य जगत्प्रियस्य ॥७०॥

( आत्मगतम् ) उत्तराभिकर्षस्तु मां बाधते । किमिदानीं करिष्ये । भवतु,

---

दशाब्दानन्तरं पुनरागतः पुनः प्राप्तवानिति भावः ॥ ६९ ॥

पुत्र हे सुत, अभिवाद्यताम् विराटेश्वरः विराटनृपतिः ।

अभिमन्यु—अभिवादये प्रणमामि ।

राजा—एह्येहि समागम्यताम् वत्स हे पुत्र,

व्याख्या—त्वम् भवान्, यौधिष्ठिरम् धर्मराजस्य, धैर्यम् धीरता भैमम् भीमस्य, बलम्, शक्तिम्, अर्जुनस्य धनञ्जयस्य नैपुणम् निपुणताम्, माद्रीजयोः नकुलसहदेवयोः कान्तिम् सौन्दर्यम्, आभिरूप्यम् बुद्धिमत्वञ्च, जगत्प्रियस्य संसाराह्लादजनकस्य कृष्णस्य देवकीनन्दनस्य कीर्तिम् यशश्च, अवाप्नुहि प्राप्नुहि । धर्मराज इव धीरो भीम इव शक्तिशाली, पार्थ इव युद्धकुशलः, नकुल इव प्रियदर्शनः सहदेव इव विद्वान्, कृष्ण इव यशस्वी च जायस्वेति भावः ॥ ७० ॥

( आत्मगतम् स्वगतम् ) उत्तराभिकर्षस्तु उत्तरया सह अर्जुनस्य सम्बन्धः, माम् विराटम् बाधते, इदानीम् अधुना, किं करिष्ये किं कर्तुं न शक्नोमि भवतु

---

तेरह वर्षों तक अलग रहने के बाद आज फिर मिला है ॥ ६९ ॥

बेटा, विराटेश्वर को प्रणाम करो ।

अभिमन्यु—प्रणाम करता हूँ ।

राजा—आओ बेटे । तुम युधिष्ठिर का धैर्य, भीम का बल, अर्जुन की रणकुशलता नकुल की सुन्दरता, सहदेव की बुद्धिमत्ता तथा जगत प्रिय भगवान् कृष्ण की कीर्ति प्राप्त करो ॥ ७० ॥

(अपने आप) उत्तरा के साथ अर्जुन का संबंध मुझे खलता है । ऐसी स्थिति

अन्तःपुरनिवासस्य सदृशी कृतवान् क्रियाम् ॥ ७२ ॥

अद्यैव खलु गुणवन्नक्षत्रम् । अद्यैव विवाहोऽस्य प्रवर्तताम् ।

युधिष्ठिरः—भवतु भवतु । पितामहसकाशमुत्तरं प्रेषयामः ।

राजा—यदभिरुचितं भवद्भ्यः । धर्मराज-वृकोदर-धनञ्जयाः । इत इतो भवन्तः ।

अनेनैव प्रहर्षेणाभ्यन्तरं प्रविशामः ।

---

आचरणेषु व्यवस्थितः स्थिरः, अन्तःपुरनिवासस्यावरोधस्थितेः, सदृशीम् अनुरूपाम्, क्रियाम् व्यवहारम् कृतवान् सम्पादितमिति ॥ ७२ ॥

अद्यैव अस्मिन्नेव दिने, खलु निश्चयेन, गुणवन्नक्षत्रम् प्रशस्तगुणयुक्तम् नक्षत्रम् अतः अद्यैव अस्य अभिमन्योः विवाहः पाणिग्रहणसंस्कारः प्रवर्तताम् विधीयताम् ।

युधिष्ठिरः—भवतु भवतु स्वीकृतम् मया । पितामहसकाशम् भीष्मस्य समीपम्, उत्तरम् कुमारम् प्रेषयामः कुलश्रेष्ठं गाङ्गेयम् निमन्त्रयितुम् विराट-पुरं प्रेषयाम इत्यर्थः ।

राजा—यत् यथा, अभिरुचितम् अभिलषितम्, भवद्भ्यः श्रीमद्भ्यः । धर्मराज हे युधिष्ठिर वृकोदर हे भीम, धनञ्जय हे अर्जुन, इत इतो भवन्तः अस्यामेव दिशि समागम्यन्ताम् भवन्तः अनेनैव प्रहर्षेण आनन्देन प्रविशामः अन्तःपुरं गच्छामः ।

---

अन्तःपुर निवास के योग्य काम किया है ॥ ७२ ॥

आज सर्वगुण सम्पन्न नक्षत्र है, आज ही इनका विवाह सम्पन्न करें ।

युधिष्ठिर—अच्छी बात है, भीष्मपितामह के पास कुमार उत्तर को निमन्त्रण लेकर भेजते हैं ।

राजा—जैसी आप की इच्छा । हे धर्मराज, वृकोदर और धनञ्जय आपलोग

## अथ तृतीयोऽङ्कः

( ततः प्रविशति सूतः )

सूतः—भो भोः ! निवेद्यतां निवेद्यतां सर्वक्षत्राचार्यपुरोगाणां क्षत्रियाणाम् ।
एष हि,

अपास्य नारायणचक्रजं भयं चिरप्रनष्टान् परिभूय पाण्डवान् ।
धनुस्सहायैः कुरुभिर्न रक्षितो हृतोऽभिमन्युः क्रियतां व्यपत्रपा ॥१॥

इति ।

( ततः प्रविशतो भीष्मद्रोणौ )

---

(ततः—अथ पूर्वोत्तरवस्तुवृत्तसंघटनामविष्कम्भकरचनाकुलेन यथानारब्धे तत इति ) पूर्ववृत्तान्तमित्यर्थः ।

सूतः—भोः भोः इत्यनिर्दिष्टजनस्य सम्बोधने, निवेद्यताम् कथ्यताम्, सर्वक्षत्राचार्यपुरोगाणाम् - सर्वेषाम् सकलानाम् क्षत्राणाम् क्षत्रियाणाम्, आचार्यः गुरुः पुरोगः अग्रगण्यः येषां तेषाम् द्रोणप्रमुखानामिति, एषः अतो अभिमन्युः ।

व्याख्या—नारायणचक्रजम् नारायणस्य श्रीकृष्णस्य चक्रात् चक्रनामकास्त्रात्, समुत्पन्नम्, भयम् त्रासम्, अपास्य विहाय, चिरप्रनष्टान् चिरकालात् अज्ञातवृत्तात्, पाण्डवान् पाण्डुपुत्रान्, परिभूय अनादरम् कृत्वा, अभिमन्युः सुभद्रासुतः, हृतः अपहृतः, धनुःसहायैः धनुर्धारिभिः, कुरुभिः कौरवैः, न नहि, रक्षितः संरक्षितुं न समर्थाः, व्यपत्रपा लज्जा क्रियताम् ॥ १ ॥

( ततः तत्पश्चात् प्रविशतः भीष्मद्रोणौ पितामहाचार्यौ )

---

( सूत का प्रवेश )

सूत—अरे खबर कर दो, सकलक्षत्राचार्यप्रधानक्षत्रियों को, यह नारायण के चक्र का भय छोड़कर, बहुत दिनों से खोये पाण्डवों का तिरस्कार कर, शत्रुओं ने अभिमन्यु का अपहरण कर लिया है, कौरव उसे बचा नहीं सके, लज्जा करनी चाहिए ॥ २ ॥

( भीष्म और द्रोण का प्रवेश )

द्रोण—सूत ! कथय कथय ।

> रणपटुरपनीत: केन मे शिष्यपुत्रः
> क इह मम शरैस्तैर्दैवतैर्योद्धुकामः ।
> कथय पुरुषसारं यावदस्त्रं बलं वा
> बलवत इषुदूतांस्तत्र सम्प्रेषयामि ॥ २ ॥

भीष्म—सूत ! कथय कथय ।

भग्नास्वयानेष्वनभिज्ञदोषस्तारुण्यभावेन विलम्बमान ।

---

द्रोणः—सूत सारथे, कथय वद, कथय किं वृत्तान्तम् ?

व्याख्या—रणपटु युद्धकुशल , मे मम, शिष्यपुत्र. अभिमन्यु , केन शत्रुणा, अपनीत अपहृत , तैः अनै , मम द्रोणस्य, दैवतैः दिव्यै., शरै. बाणै , इह अस्मिन् संसारे, क पुरुषविशेष योद्धुकाम युद्धाभिलाषी वर्त्तते, यावद् यावत्कालपर्यन्तम् अस्त्रम् प्रहरणम्, बलम् शारीरिकं सामर्थ्यम्, वा अथवा, पुरुषसारम् पौरुषम् सारम् यस्यासौ पुरुषसारस्त कथय आख्याहि, तस्मिन् अभिमन्युहर्त्तरि रिपौ बलवत अतिशयबलशालिन , इषुदूतान् बाणरूपीदूतान् प्रेषयामि प्रेरयामि ॥ २ ॥

भीष्मः—सूत सारथे, कथय कथय वद मे—

व्याख्या—भग्नानाम् पराजितानाम्, अपयानेषु पलायनप्रवृत्तेषु, अनभिज्ञदोष पलायनानभिज्ञत्वरूपदूषणवान्, तारुण्यभावेन यौवनदर्पेण, विलम्बमान ,

---

द्रोण—सारथी, कहो, कहो,

मेरे शिष्य अर्जुन का पुत्र रणप्रवीण अभिमन्यु का किसने अपहरण किया है ? मेरे दिव्यवाणों से कौन लड़ना चाह रहा है, ललकार दो उसके पौरुष को, कह दो उसके हथियारों का, मैं अभी अपने बलवान वाण रूपी दूतों को उनके पास भेजता हूँ ॥ २ ॥

भीष्म—सूत कहो, कहो,

हारकर भी युद्ध से जो भागना नहीं जानता, यही जिसमें दोष है, इससे पर भी जवानी के जोश में जो रणाङ्गण में अड़ा रहा, उन अभिमन्युरूपगज

केनैष हस्तिग्रहणोद्यतेन यूथेऽपयाते कलभो गृहीतः ॥ ३ ॥

( ततः प्रविशति दुर्योधनः कर्णः शकुनिश्च )

दुर्योधनः—सूत ! कथय कथय । केनापनीतोऽभिमन्युः । अहमेवैनं मोक्षयामि ! कुतः,

मम हि पितृभिरस्य प्रस्तुतो ज्ञातिभेद-
स्तदिह मयि तु दोषो वक्तृभिः पातनीय ।
अथ च मम स पुत्रः पाण्डवानां तु पश्चात्

---

रणाङ्गणे स्थिरीभूतः, एषः असौ, कलभः गजशावकोऽभिमन्युः, हस्तिग्रहणोद्यतेन गजग्रहणप्रयत्नशीलेन, यूथे गजसमूहे, अपयाते निर्गते सति, कलभः गजशिशुः गृहीतः । इन्द्रवंशा वृत्तम् ॥ ३ ॥

( अथ पूर्वोत्तरवार्ता संघटयितुम् पूर्ववर्णितयोः कर्ण-दुर्योधनयोः शकुनिना सह प्रवेशमाह—तत इति )

**दुर्योधन**—सूत हे सारथे, कथय वद, केन पुरुषेण, अपनीतः अपहृतः, अभिमन्युः सुभद्राकुमारः अहमेव दुर्योधन एव, एनम् अभिमन्युम्, मोक्षयामि ग्रहणान्मोचयामीति—

**व्याख्या**—अस्य अभिमन्योः, पितृभिः धर्मराजादिपाण्डवैः सह, मम दुर्योधनस्य, ज्ञातिभेदः दायादभावकृतं वैरम्, प्रस्तुतः उपस्थितः अस्ति, तत् तस्मात्कारणात्, इह अस्मिन् प्रसंगे वक्तृभिः लोकैः, मयि दुर्योधने, दोषः कलङ्कः, पातनीयः अर्पणीयः, अथ च अन्यच्च, सः अभिमन्युः, मम दुर्योधनस्य पुत्रः स्नेहशीलतया सजन्यसुत इव, तु पाण्डवानाम्, पाण्डुपुत्राणाम् पश्चात् अर्थात् अभिमन्युः पाण्डवापेक्षया मयि अधिकस्नेहशील इत्यर्थः, च पुनः, कुलविरोधे

---

बालक को यूथपतियों के भाग जाने पर किसने पकड़ लिया है ॥ ३ ॥

( कर्ण, दुर्योधन एवं शकुनि का प्रवेश )

**दुर्योधन**—सारथे, कहो, कहो, किसने अभिमन्यु का अपहरण किया है, मैं ही उसे छुड़ाऊँगा, क्योंकि—

मेरा उसके पिताओं से विरोध चल रहा है, इस आनुवंशिक विरोध के कारण उसे पकड़े जाने पर लोग मुझे ही दोषी ठहरायेंगे। इसके अतिरिक्त

मति च कुलविरोधे नापराध्यन्ति बाला. ॥ ४ ॥

कर्णः—अतिस्निग्धमनुरूपं चाभिहितं भवता । गान्धारीमातः !

मा तावत् स्वजनभयान् तु बालभावात्
व्यापन्नः समरमुखे तव प्रियार्थम् ।
अस्माभिर्न च परिरक्षितोऽभिमन्यु-
र्गृह्यन्तां धनुरपनीय वल्कलानि ॥ ५ ॥

शकुनिः—बहुनाथः खलु सौभद्रः । मुक्त एवेति सम्प्रधार्यताम् । कुतः,

---

सति मय्यपि दायादभावकृतविरोधे, बालाः शिशवः न तर्हि, अपराध्यन्ति स्नेहाच्च्यवन्ते । मालिनी वृत्तम् ॥ ४ ॥

कर्णः—अतिस्निग्धम् परमप्रीतिकरम्, अनुरूपम् स्वगदृशम्, अभिहितम् कथितम्, भवता त्वया दुर्योधनेन, गान्धारीमातः हे दुर्योधन,

व्याख्या—बालभावात् अनारुण्यभावात्, वा स्वजनभयात् आत्मीयजनकृतनिन्दावचनभीतेः तावन्न नाभिमन्युर्मोच्यताम् तु अपितु तव प्रियार्थम् तव दुर्योधनस्य प्रियार्थम् हितसाधनाय व्यापन्नः गृहणमागतः, च पुनः, अभिमन्युः सुभद्रासुतः, अस्माभिः कर्णशकुनिदुर्योधनादिभिः, न नहि परिरक्षितः सरक्षितः, समरमुखे समराङ्गणे, तेन च धनुः चापः, अपनीय, परित्यज्य, वल्कलानि वृक्षत्वचः गृह्यन्ताम् धार्यन्ताम् । प्रहर्षिणीवृत्तम् ॥ ५ ॥

शकुनिः—बहुनाथः अनेकरक्षकैः सरक्षितः, खलु निश्चयेन, सौभद्रः अभिमन्युः, मुक्तः बन्धनरहितः एव सम्प्रधार्यताम् निश्चीयताम् । कुतः इति—

---

पहले वह मेरा लड़का है बाद में पाण्डवों का, वाशिक विरोध रहने पर भी भला उस बच्चे का कसूर क्या है ? ॥ ४ ॥

कर्ण—हे दुर्योधन, तुमने अति प्रेम पूर्ण एवं अपने अनुरूप बातें कही है—

डर अथवा लोकनिन्दा के भय से नहीं, अपने प्यार के कारण भी नहीं, उसे छुडाना तो इसलिए है कि वह रणाङ्गण में आपका हितसाधन करते हुए ही पकडा गया है। और हम धनुर्धारियों से उसकी रक्षा नहीं हो सकी। ऐसी स्थिति में हमें धनुष छोड़कर वल्कल धारण कर लेना चाहिए ॥ ५ ॥

शकुनि—अभिमन्यु को छुडाने वाले बहुत लोग है, उसे छूटा ही समझें। क्योंकि—

मुञ्चेदर्जुनपुत्र इत्यवगतो राजा विराटः स्वयं
स्मृत्वा चाद्य रणाजिरादवजितं मुञ्चेत् स दामोदरम्।
क्रोधोद्धूतहलात् प्रलम्बमथनाद् भीतेन मुच्येत वा
भीमस्त्वेनमिहानयेद् बलमहान् हत्वा रिपूर्नाजितान्॥ ६॥

द्रोण.—सूत! कथय कथय। कथमिदानीं गृहीत।
पर्यस्तोऽस्य रथो हया नु चपलाश्चक्राक्षमा मेदिनी

---

व्याख्या—अर्जुनपुत्र. अयमभिमन्यु. पार्थस्य सुत. इति इत्थम्, अवगत. प्रतीतः सन्, राजा नृप, विराट. स्वयम् आत्मन एव, अभिमन्युम् मुञ्चेत् बन्धनात् मुक्त. कुर्यात्, अद्य अस्मिन्नेवादिने रणाजिरात् समराङ्गणात्, अवजितम् पराजित्य गृहीतमभिमन्युम् सः विराटेश्वरः, दामोदरम् श्रीकृष्णम्, स्मृत्वा स्मरणं कृत्वा, मुञ्चेत् बन्धनात् मुक्तः कुर्यात् वा अथवा, क्रोधोद्धूतहलात् क्रोधेन कोपेन उद्धूत. कम्पित. हलात् हलरूपप्रहरणात्, प्रलम्बमथनात् श्रीकृष्णाग्रजात् बलदेवात्, भीतेन भयेन, मुच्येत् त्यजेत्, वा अथवा, बलमहान् अतिशक्तिशाली, भीम. द्वितीय. पाण्डव., ऊर्जितान् दर्पितान्, रिपून् शत्रून्, हत्वा मारित्वा, एनम् अभिमन्युम्, इह अस्मिन् स्थान आनयेत् नीत्वा आगच्छेत्। शार्दूलविक्रीडितम्॥ ६॥

द्रोणः—सूत हे सारथे कथय कथय, कथम् केन प्रकारेण, इदानीम् अधुना, गृहीत. बन्धनगतोऽभिमन्यु. ?

व्याख्या—अस्य अभिमन्योः, रथ स्यन्दन, पर्यस्त पतित, हया अश्वा, चञ्चला. जाता., नु वितर्के, मेदिनी धरित्री, चक्राक्षमा निम्नोन्नता तेन हि रथ-

---

विराट को जब यह पता चलेगा कि यह अर्जुन का बेटा है तो वह स्वयं उसे छोड़ देगा, श्रीकृष्ण का यह भानजा है यह याद आते ही युद्ध में हराकर लाने पर भी वह उसे उसीक्षण मुक्त कर देगा अथवा क्रोध से हलहिलाने वाले बलराम के डर से ही, विराट उसे छोड देगा या महाबली भीम दुश्मनों का गर्व दर्पित कर उसे स्वयं छुडाकर यहाँ ले आयेगा॥ ६॥

द्रोण—सूत कहो कहो, वह कैसे पकडा गया ?
क्या रथ उलट गया ? घोड़े भडक गये ? रणभूमि रथसचार के योग्य

तूणी क्षीणशरे त्वमस्य विगुणो ज्याच्छेदवन्ध्य धनु. ।
एता दैवकृता भवन्ति रथिनां युद्धाश्रया व्यापदो
वाणैरप्यवकृष्यते खलु परै. स्वाधीनशिक्षस्तु स ॥ ७ ॥

सूत —आयुष्मन् ! पुरुषमयो धनुर्वेद. । किमायुष्मता न ज्ञायते ।
न चापि दोषा भवताभिभाषिता. स चापि बाणौघमयो महारथ ।
अलातचक्रप्रतिमस्तु मे रथो गृहीत एवापतता पदातिना ॥ ८ ॥

---

चक्रभ्रमणानर्हा नु किम् ? तूणी तूणीरे, क्षीणशरे बाणक्षये, नु जाते किम् ? अस्य अभिमन्यो, त्वम् सूत, विगुण गुणरहित' अयोग्यो जात' किम् ? धनु चाप., ज्याच्छेदवन्ध्यम् मौर्वीत्रुटनात् विफलो जातः ? एताः पूर्वोक्ता, युद्धाश्रयाः रणाङ्गणे उपस्थिता रथिनाम् योधानाम्, दैवकृता भाग्यदोषेण प्राप्ता. व्यापद. विपत्तय, भवन्ति जायन्ते, स्वाधीनशिक्ष यथेच्छाचरणक्षमयुद्धाभ्यासशाली सः असौ, खलु निश्चयेन, परै. अरिभि', बाणं शरं, अपि, अपकृष्यते गृह्यते ॥ ७ ॥

सूत'—आयुष्मन् चिरञ्जीविन्, पुरुषमयो धनुर्वेद' पुरुषरूपेण साक्षात् धनुर्वेदस्वरूपो, आयुष्मता अभिमन्युना किं न ज्ञायते किं न जानासि ।

व्याख्या—भवता आचार्यद्रोणेन अभिभाषिता. कथिता., दोषा दुर्गुणाः न नहि, स. अभिमन्यु. अपि महारथ युद्धवीरः, बाणौघमय शरसमूहवर्षी आसीदिति, मे मम, रथः स्यन्दनः, अलातचक्रप्रतिम. भ्रमदुल्मुकतुल्यः सर्वतोभावेन सर्वत्र नृत्यन् एव, आपतता तस्मिन्नेव काले सम्मुखे समागता केनाप्यपरिचितेन

---

नहीं थी ? तरकस के बाण चूक गये, या तुमने प्रतिकूलता दिखलाई ? अथवा धनुष की प्रत्यन्चा टूट गई, लड़ाई के मैदान मे वीरो की हार के यह दैवी *कारण हैं, हाँ कभी कभी शत्रु बाणो से भी प्रतिद्वन्द्वी को खींच लेते हैं किन्तु,* अभिमन्यु तो रण कुशल था ॥ ७ ॥

सूत—आयुष्मान, आपका पता नही है कि कुमार अभिमन्यु धनुर्वेद के पुरुषावतार ही है ।

ऊपर आपने जिन खामियो की चर्चा की है, उनमे एक भी नही थी, रथ पर सवार होकर कुमार अभिमन्यु शत्रुदल पर बाण बरसा रहे थे, मेरा रथ भी अलातचक्र की तरह नाच ही रहा था कि इसी बीच किसी अपरिचित

सर्वे—कथं पदातिनेति ?

द्रोणः—अथ कीदृशः पदातिः ?

सूतः—किमभिधास्यामि रूपं वा पराक्रमं वा ?

भीष्मः—रूपेण स्त्रियः कथ्यन्ते । पराक्रमेण तु पुरुषाः । तत् पराक्रमोऽस्याभिधीयताम् ।

सूतः—आयुष्मन् !

दुर्योधन— किमर्थं स्तूयसे कोऽपि भवता गर्विताक्षरैः ।

---

पदातिना पदचारिणा गृहीत एवः अभिमन्यु ग्रहणमागत एवेति । वशस्थं वृत्तम् ॥ ८॥

**सर्वे**—कथं पदातिना पदचारिणा एव केन प्रकारेण गृहीतोऽभिमन्युरिति आश्चर्यम् प्रकाशते ।

**द्रोण**—अथेति प्रश्ने कीदृशः पदातिः पदचारीति प्रश्नः ?

**सूतः**—किमभिधास्यामि किं कथयामि तस्य पदातेः रूपम् आकृतिः वा पराक्रमः शौर्यम् इति प्रष्टुराशयः ?

**भीष्मः**—रूपेण आकृत्या, स्त्रियः नार्यः, कथ्यन्ते, पराक्रमेण शौर्येणतु पुरुषाः नराः कथ्यन्ते । तत् तस्मात् पराक्रमः साहसम् तस्य पुरुषविशेषस्य, अभिधीयताम् कथ्यताम् ।

सूतः आयुष्मन्-चिरञ्जीविन्,

**व्याख्या**—भवता सूतेन, गर्विताक्षरैः साभिमानशब्दैः, किमर्थम् केन हेतुना, कोऽपि पुरुषविशेषः, स्तूयते प्रशस्यते, मे मम, त्रासः भयम्, नास्ति न

---

वीरने पैदल ही आगे बढकर रथ को थाम लिया ॥ ८ ॥

**सभी**—क्या कहा किसी पदाति ने ?

**द्रोण**—अच्छा तो वह पदाति कैसा था ?

**सूत**—मैं उसका रूप बताऊँ या पराक्रम ?

**भीष्म**—औरतों का रूपवर्णन किया जाता है मर्दों का तो पराक्रम ही कहा जाता है, पराक्रम ही बतलाओ सूत,

**सूत**—आयुष्मन्,

**दुर्योधन**—क्योंकि किसी स्तुति साभिमान शब्दों में आप कर रहे हैं,

कथ्यतां नास्ति मे त्रासो यद्यपि पवनो जवे ॥ ९ ॥

सूत—श्रोतुमर्हति महाराजः । तेन खलु,

लङ्घयित्वा जवेनाश्वान् न्यस्तश्चापस्करे करः ।
प्रसारितहयग्रीवो निष्कम्पश्च रथः स्थितः ॥ १० ॥

भीष्म —तेन हि न्यस्यन्तामायुधानि ।
सर्वे—किमर्थम् ?

---

विद्यते, अत्र निःसंकोचभावेन कथ्यताम् उच्यताम्, यदि चेत्, एष भवता वर्ण्यमानः पुरुषः, जवे पवनः वायुरपि स्यात् भवेत् तथापि मम भयं न भवतीति भावः ॥ ९ ॥

**सूत.**—श्रोतुम् आकर्णयितुम्, अर्हति योग्योऽस्ति भवान् इति । तेन हेतुना, लङ्घ—

**व्याख्या**—जवेन वेगेन, अश्वान् हयान्, रथ्यान्, लङ्घयित्वा अतिक्रमणं कृत्वा, अपस्करे रथस्याग्रिमभागे, करः हस्तः, न्यस्तः स्थापितः, प्रसारितहयग्रीवः रश्मिग्रहीतभारेण हयानां ग्रीवाभागान् प्रसारयन् च रथः स्यन्दनः, निष्कम्पः अचलभावेन स्थितः स्थिरीभूतः ॥ १० ॥

**भीष्मः**—तेन कारणेन, हि इति निश्चयार्थे, न्यस्यन्ताम् मुच्यन्ताम्, आयुधानि अस्त्राणि ।

**सर्वे**—किमर्थम् केन हेतुना त्यक्तव्यानि अस्त्राणि ।

---

आप साफ शब्दों में बतलायें वह पवन की तरह वेगवान् क्यों न हो—मैं किसी से नहीं डरता हूँ ॥ ९ ॥

**सूत**—सुनिए महाराज । उस पदाति ने—

रथाश्वों के वेग को अतिक्रमितकर एक ही हाथ से रथ के अगले भाग को थाम लिया, घोड़ोंने पूराजोर लगाया उनकी गर्दनें लम्बी हो गईं, फिर भी रथ टस से मस नहीं हुआ ॥ १० ॥

**भीष्म**—तो फिर हथियार डाल दिए जाँय ।

**सभी**—क्यों ?

भीष्मः—

हृतप्रवेगो यदि बाहुना रथो वृकोदरस्याङ्कगतः स चिन्त्यताम् ।
पुरा हि तेन द्रुपदात्मजा हरन् पदातिनैवावजितो जयद्रथः ॥ ११ ॥

द्रोण.—सम्यगाह गाङ्गेयः । बाल्योपदेशात् प्रभृत्यहं तस्य जवमवगच्छामि ।

इष्वस्त्रशालायां हि,

कर्णायते तेन शरे विमुक्ते विकम्पितं तस्य शिरो मयोक्तम् ।
गत्वा तदा तेन च बाणतुल्यमप्राप्तलक्षः स शरो गृहीतः ॥ १२ ॥

---

**व्याख्या**—यदिचेत्, बाहुना एकेनैव, हस्तेन, रथः स्यन्दन, हृतप्रवेगः निरुद्धवेगः कृतः तर्हि सः अभिमन्यु., वृकोदरस्य भीमस्य, अङ्के क्रोडे, गतः स्थितः इति चिन्त्यताम् विभाव्यताम्, पुरा पूर्वस्मिन काले, द्रुपदात्मजाम् द्रौपदीम्, हरन् स्वस्यन्दनेऽवस्थाप्य गच्छन्, तेन भीमेन, पदातिनैव पदचारणेनैव जयद्रथः एतदाख्यनृप, अवजितः पराजित. । अर्थात् रथादवतार्य द्रौपदीमानीत इति भाव. ॥ ११ ॥

**द्रोणः**—सम्यगाह गागेयः भीष्मः सुष्ठु भणति । बाल्योपदेशात् प्रभृति शैशवादारभ्य क्रियमाणशिक्षणात्, अहम् द्रोणः तस्य भीमस्य, जवम् वेगम्, अवगच्छामि जानामि । इष्वस्त्रशालायां हि अस्त्रशिक्षणविद्यालये हि—

**व्याख्या**—तेन भीमेन, कर्णायते कर्णपर्यन्ताकृष्टे, शरे बाणे विमुक्ते त्यक्ते सति, मया द्रोणेन तस्य भीमस्य, शिरः उत्तमाङ्गं विकम्पित विधूतम् उक्तम्, कथितम्, तदा तर्हि, तेन भीमेन, बाणतुल्यम् शरसदृशम्, गत्वा धावन् यात्वा,

---

**भीष्म**—यदि एक ही हाथ की पकड से रथ की गति रोक दी गई तो निश्चय ही अभिमन्यु भीम की गोद मे गया है, क्योकि पहले द्रौपदी हरण के समय भीम ने पैदल ही चलकर जयद्रथ को पराजित कर उसके रथ से सैरन्ध्री को इसी तरह उतार लिया था ॥ ११ ॥

**द्रोण**—गागेय का कहना बिल्कुल ठीक है । उसकी इस तीव्रगति से उसके बचपन से ही मैं परिचित हूँ । अस्त्रप्रशिक्षण विद्यालय मे—

एक बार भीमने कान तक खीचकर बाण छोड़ा, मैंने कहा बाण छोडने मे तुम्हारा शिर हिल गया, यह एक दोष है । फिर क्या था जिधर बाण फेंका

शकुनि—अहो हास्यमभिधानम् । भो ! पृच्छामि तावद् भवन्तम् ।

नास्त्यन्यो बलवाँल्लोके सर्वमिष्टेषु कथ्यते ।
जगद्व्याप्तान् भवन्तः किं सर्वे पश्यन्ति पाण्डवान् ॥ १३ ॥

भीष्म—गान्धारराज ! सर्वमनुमानात् कथ्यते ।

वय व्यपाश्रित्य रण प्रयाम शस्त्राणि चापानि रथाधिरूढा ।
द्वावेव दोर्भ्यां समरे प्रयातो हलायुधश्चैव वृकोदरश्च ॥ १४ ॥

---

अप्राप्तलक्ष्यदेशम् अप्राप्त एव, स असौ, शर बाण गृहीत धृत ॥

शकुनि—अहो इत्याश्चर्ये, हास्यम् हसितु योग्यमर्थात् उपहासास्पदम् अभिधानम् कथनम्, भो इति सम्बोधने, पृच्छामि तावद् भवन्तम् त्वम् ।

व्याख्या—लोके ससारे, अन्य अपर कोऽपि पाण्डवेभ्य बलवान् शक्तिशाली नास्ति न विद्यते । इष्टेषु आत्मीयजनेषु, सर्वम् सकलम्, कथ्यते प्रयुज्यते प्रशसावचनम्, किम् कथम् सर्वे भवन्त भीष्मद्रोणप्रभृतय पाण्डवान् पाण्डुपुत्रान्, जगद्व्याप्तान् सर्वत्रोपस्थितान्, पश्यन्ति सभावयन्ति इति ॥ १३ ॥

भीष्म—गान्धारराज, देशकुले, सर्वम् सकलम् अनुमानात् अनुमानप्रमाणात् कथ्यते प्रोच्यते ।

व्याख्या—वयम् भवन्तश्च सर्वे, रथाधिरूढा स्यन्दने आरोहणम् कृत्वा, चापानि धनूषि, शस्त्राणि आयुधानि च व्यपाश्रित्य अवलम्ब्य, रणम् समरभूमिम्, प्रयाम प्रस्थान कुर्म, हलायुध बलभद्र, वृकोदरश्च भीमश्च, द्वावेव उभावेव, दोर्भ्याम् बाहुभ्याम् समरे युद्धे, प्रयात गच्छत । अस्मिन् ससारे-

---

गया था उधर ही दौड़कर बाण को लक्ष्य तक पहुँचने के पहले ही उसे पकड़ लिया ॥ १२ ॥

शकुनि—मूर्ख, कितनी उपहासास्पद बात है ? मैं आप से ही पूछता हूँ—

क्या इस ससार म कोई दूसरा वीर नही है ? अपने आत्मीय जनो के लिए सब कुछ कहा जाता है। क्या आप लोग पाण्डवों को जगद्व्यापी मानते हैं ॥ १३ ॥

भीष्म—हे गान्धारनरेश, सब कुछ अनुमान से ही कहा जाता है ।

हमलोग हथियार के साथ रथ पर सवार होकर ही युद्ध यात्रा करते हैं ।

शकुनिः—

एकेनैव वयं भग्ना: सहसा साहसप्रिया: ।
उत्तरं च तमप्येके कथयिष्यन्ति फल्गुनम् ॥ १५ ॥

द्रोण:—भो गान्धारराज ! अत्रापि तावद् भवत: सन्देह: ।

किमुत्तरेणापि रणे विकृष्यते निमृष्टशुष्काशनिगर्जितं धनु: ।
किमुत्तरस्यापि शरैर्हृतातप: कृतो मुहूर्तास्तमितो दिवाकर: ॥१६॥

---

केवल द्वावेव पुरुषौ स्त: यौ बाहुप्रहरणौ समराङ्गणे गच्छतस्तेन सम्यतेऽनुमानमिदम् यद्भीमेनैवाभिमन्युर्गृहीत इति ॥ १४ ॥

**व्याख्या**—एकेनाद्वितीयेन, एव, साहसप्रिया: बलवन्त: वयम् भीष्मद्रोणादय:, सहसा हठात्, भग्ना पराजिता:, तदुत्तरम् विराटपुत्रम् अपि एके त्वादृशा: केचन, फल्गुनमर्जुनम् कथयिष्यन्ति ॥ १५ ॥

**द्रोण**—भो गान्धारराज हे दुर्योधनमातुल, अत्रापि अस्माकं पराजेतुमर्जुनत्वेऽपि, तावत् भवत: तव, सन्देह: आशङ्का ?

**व्याख्या**—उत्तरेण विराटपुत्रेण, अपि, रणे समरे, निमृष्टशुष्काशनिगर्जितम् कृतशुष्कवज्रध्वनि:, धनु: चापम्, विकृष्यते आकृष्यते किमिति प्रश्ने ? उत्तरस्यापि विराटपुत्रस्यापि, शरै: बाणै:, हृतातप:-वारितातप, मुहूर्तास्तमित: क्षणकालपर्यन्तमस्तंगत इव यथा, दिवाकर रवि:, कृत: इति विश्वास्य किम् ॥१६॥

---

किन्तु ससार मे बलराम और भीम दो ही ऐसे व्यक्ति है जो केवल बाहुबल के सहारे रणाङ्गण मे उतरते है ॥ ॥ १४ ॥

**शकुनि**—हम लोगो जैसे दुर्धर्ष साहसी वीरो को, हठात् अकेले ही जिस उत्तर कुमार ने युद्ध मे पराजित कर दिया, उसे भी कुछ लोग अर्जुन ही तो कहेंगे ॥ १५ ॥

**द्रोण**—बेशक, इसमे भी आपको सदेह है क्या ?

क्या कुमार उत्तर भी सूखे वज्र की तरह गरजने वाला धनुप खीचना जानता है ? क्या उत्तर के भी बाणो से भी सूरज ढँक जाता है या दिन मे ही अस्तगत सूर्य दीखने लगता है हैं ॥ १६ ॥

भीष्म'—गान्धारीमातः ! विस्पष्टं खलु कथ्यते। ननु जानीते भवान् ।
वाणपुङ्खाक्षरैर्ज्याभिर्जिह्वापरिवर्तिभिः ।
विकृष्टं खलु पार्थेन न च श्रोत्रं प्रयच्छसि ॥ १७ ॥
( प्रविश्य )

सूत —जयत्वायुष्मान् । शान्तिकर्मानुष्ठीयताम् ।

भीष्मः—किमर्थम् ?

सूत'—

उचितं ते पुरा यत्तु ध्वजे वाणप्रधर्षिते ।

---

**भीष्मः**--गान्धारीमातः हे दुर्योधन, विस्पष्टम् सुस्पष्टम्, खलु निश्चयेन, कथ्यते । नन्विति वितर्के, जानीते भवान् त्वमिति—

**व्याख्या**--वाणपुङ्खाक्षरैः शरमूलेऽङ्कितनामाक्षरैः, ज्याभिः मौर्वीभिः, जिह्वा परिवर्तिभिः रसनापरिवर्तिभिः, वानर्थं धनुर्ध्वनिभिः, खलु निश्चयेन, विकृष्टम्, आकृष्टम्, पार्थेन अर्जुनेन, न च श्रोत्रं प्रयच्छसि किं तत्र भवान् कर्णं न दत्तवान्, अर्जुनेनैवेदम् धनुराकृष्यत इति स्पष्टमाख्यातम् ॥ १७ ॥

( प्रविश्य प्रवेशं कृत्वा )

**सूतः**--जयतु सर्वोत्कर्षेण विजयं लभस्व आयुष्मन् चिरञ्जीविन्, शान्तिकर्म शमनकार्यम्, अनुष्ठीयताम् क्रियताम् ।

**भीष्मः**--किमर्थम् कस्मै निमित्ताय ?

**व्याख्या**--ध्वजे स्यन्दनकेतौ, वाणप्रधर्षिते अन्यवाणविद्धे सति, पुरा-

---

॥ **भीष्म**--हे दुर्योधन, मैं स्पष्ट कहूँगा, आप जानते हैं,

वाणपुंख पर लिखे शब्द को ज्याप्रत्यञ्चा से दुहराने वाले धनुष के शब्द ने स्पष्ट कह दिया कि पार्थ ही धनुष खींचते हैं। क्या आपने उधर कान नही दिया ?

( प्रवेश करके )

**सूत**-- जय हो महाराज की, शान्ति कर्म कीजिए ।

**भीष्म**—क्यों ?

**सूत**—आपकी ध्वजा दूसरे के वाण से जिस समय विद्ध हुई, उसके लिए

अयं हि बाणः कस्यापि पुङ्खे नामाभिधीयते ॥ १८ ॥

भीष्मः—आनय ।

( सूत उपनयति )

भीष्मः—( गृहीत्वा निरीक्ष्य ) वत्स ! गान्धारराज ! । जराशिथिलं मे चक्षुः । वाच्यतामयं शरः ।

शकुनिः—( गृहीत्वानुवाच्य च ) अर्जुनस्य । ( इति क्षिपति । द्रोणस्य पादयो पतति । )

द्रोण —( शरं गृहीत्वा ) एह्येहि वत्स ।

---

पूर्वमेव ते तव भीष्मस्य, कर्तुमुचितम् शान्तिकर्म विधातुमुचितम्, अयं हि असौ बाणः शरः, येन बाणेन ध्वजः केतुः, प्रर्धर्षितः विद्धः, अस्य शरस्य पुङ्खे मूले, कस्यापि पुरुषविशेषस्य नाम सज्ञा, अभिधीयते उच्यते ॥ १८ ॥

**भीष्म**—आनय समानीयताम् ।

( सूतः सारथिः उपनयति आनयति )

**भीष्म**—( गृहीत्वा नीत्वा, निरीक्ष्य दृष्ट्वा ) वत्स हे पुत्र, गान्धारराज, जराशिथिलम् वृद्धत्वेन शिथिलम् मे मम, चक्षु नेत्रम्, वाच्यताम् पश्यताम् अयम् एषः, शरः बाणः ।

**शकुनिः**—( गृहीत्वा नीत्वा अनुवाच्य पठित्वा च ) अर्जुनस्य धनञ्जयस्य ( इति क्षिपति प्रक्षिप्तवान् द्रोणस्याचार्यस्य पदयोः चरणयोः पतति )

**द्रोण**—(शरम् बाणम्, गृहीत्वा नीत्वा) एह्येहि समागम्यताम् वत्स हे सुत ।

---

शान्ति कर्म और भी पहले करना चाहिए था । जिस बाण ने आपकी ध्वजा को बेधा है उस बाण पर नाम किसका लिखा है ? ॥ १८ ॥

**भीष्म**– लाओ बाण । ( सारथी लाता है । )

**भीष्म**— लेकर और देखकर ) बेटा गान्धारराज, वृद्धावस्था के कारण मेरी आँख काम नही कर रही है । जरा पढो तो इस पर किसका नाम लिखा है ?

**शकुनि**– ( लेकर और पढकर ) अर्जुन का यह बाण है । ( फेकता है, बाण द्रोण के पैरो पर गिरता है ) ।

**द्रोण**– ( बाण लेकर ) बेटा, अर्जुन ने इस बाण को भीष्म को प्रणाम

एष शिष्येण मे क्षिप्तो गाङ्गेय वन्दितुं शरः ।
पादयोः पतितो भूमौ मा क्रमेणाभिवन्दितुम् ॥ १९ ॥

शकुनि—मा तावद् भो ! शरप्रत्यय इदानी श्रद्धातव्यम् ।

योध स्यादर्जुनो नाम तेनाय चोज्झितः शरः ।
लिखित चोत्तरेणापि प्रकाशमुपनीयताम् ॥ २० ॥

दुर्योधनः—

तेषा राज्यप्रदानार्थमनृतं कथ्यते यदि ।
राज्यस्यार्धं प्रदास्यामि यावद् दृष्टे युधिष्ठिरे ॥ २१ ॥

---

**व्याख्या**-एष असौ, मे मम, शिष्येण पार्थेन, गाङ्गेयम् भीष्मम् वन्दितुम् प्रणमितुम्, क्षिप्त प्रेषित, शर. बाण, क्रमेण क्रमश, माम् गुरुद्रोणम्, अभिवन्दितुम् प्रणामम् कर्त्तुम् पादयो चरणयो पतित भूमौ पृथिव्यामिति भाव ॥

**शकुनि**—मा तावद् भो एवम् मा वद, शरप्रत्यये बाणानुमानविश्वासे, इदानीम् अधुना, श्रद्धातव्यम् विश्वास कार्यं ।

**व्याख्या**—योध कश्चिदन्य पुरुषविशेषवीर अर्जुन धनञ्जय. स्यात् भवेत् तेन कारणेन अयम् पुरो दृश्यमान. शर बाण उज्झित विसृष्ट स्यात् भवेत् उत्तरेण विराटपुत्रेण, लिखितम् अङ्कितम्, प्रकाशमुपनीयताम् स्पष्टतः प्रकाश्यताम् ॥ २० ॥

**व्याख्या**—तेषाम् पाण्डवानाम्, राज्यप्रदानार्थं राज्य प्रदापयितुम् यदि चेत्, अनृतम् मिथ्या, कथ्यते रच्यते तदा, राज्यस्यार्धम् साम्राज्यस्यार्द्ध भागम्

---

करने के लिए ही भेजा था। और, अब यह बाण क्रमश मुझे प्रणाम करने के लिए मेरे पैरो पर गिरा है ॥ १९ ॥

**शकुनि**—नही जी नही। बाणो पर लिखे नाम पर भरोसा नही करना चाहिए।

अर्जुन नाम का कोई दूसरा योद्धा भी तो हो सकता है। वह भी तो बाण चला सकता है। यह अर्जुन पाण्डव है, इसके लिए कुमार उत्तर द्वारा लिखित प्रमाण प्रस्तुत करना होगा ॥ २० ॥

**दुर्योधन**—और यदि उत्तर ने भी पाण्डवों को आधा राज्य दिलाने के लिए झूठ का सहारा लिया तो अपनी आंख से युधिष्ठिर को देखकर ही आधा

द्रोण:—किमाह धर्मराजः ?

उत्तर.—श्रूयताम्,

> उत्तरा मे स्नुषा लब्धा प्रतीक्षे राजमण्डलम्।
> तत्रैव किमिहेवास्तु विवाहः क्व प्रवर्तताम्॥ २३॥

शकुनि —तत्रैव तत्रैव।

द्रोण.—

> इत्यर्थं वयमानीताः पञ्चरात्रोऽपि वर्तते।

---

**द्रोणः**—किमाह किं कथितं, धर्मराज' युधिष्ठिरः ?

**उत्तरः**—श्रूयताम् अवधार्यताम्।

**व्याख्या**—मे मम युधिष्ठिरस्य, स्नुषा पुत्रवधूः, उत्तरा एतन्नामिका विराट सुता लब्धा प्राप्ता, राजमण्डलम् राजन्यवर्गम्, प्रतीक्षे तद्विवाहोत्सवार्थम् प्रतीक्षा करोमि, तत्रैव हस्तिनापुरे एव अथवा इहैव विराटनगरे एव, विवाहः पाणिग्रहणोत्सवः क्व कुत्र, प्रवर्तताम् जायताम् इति निश्चीयताम्।

**शकुनि**—तत्रैव तत्रैव विराटनगरे एव भवतु।

**व्याख्या**—इति इत्थम्, वयम् भीष्मद्रोणादयः, सर्वेऽपि, अर्थम् पाण्डवोपलब्धिरूपम्, आनीता सम्यक् प्रकारेण समानीता, पञ्चरात्रोऽपि पञ्चरात्र्यात्मकः

---

**द्रोण**—क्या कहा है धर्मराज ने ?

**उत्तर**—सुनिये—

विराट पुत्री कुमारी उत्तरा मुझे पुत्रवधू के रूप में मिली है। मैं आप सबों के आदेश की प्रतीक्षा कर रहा हूँ। विवाहोत्सव हस्तिनापुर में हो या विराट नगर में, इसका निर्णय आपलोग करें॥ २३॥

**शकुनि**—वहाँ ही हो, वहीं।

**द्रोण**—हमने पाँच दिनों के भीतर पाण्डवों का पता कर लिया है। अभी पाँच रात नहीं बीती है। इसलिए धर्मपूर्वक आधा राज्य देने को स्वीकार की

धर्मेणार्वाजिता भिक्षा धर्मेणैव प्रदीयताम् ॥ २४ ॥

दुर्योधन —

बाढं दत्तं मया राज्यं पाण्डवेभ्यो यथापुरम् ।
मृतेऽपि हि नराः सर्वे सत्ये तिष्ठन्ति तिष्ठति ॥ २५ ॥

द्रोण —

हन्त सर्वे प्रसन्नाः स्मः प्रवृद्धकुलसंग्रहा ।

---

अवधित्वेन नियतः कालोऽपि वर्तते, धर्मेण स्वकृतप्रतिज्ञा पालनपूर्वकेण, आर्वाजिता स्वीकृता, भिक्षा मया याचिता गुरुदक्षिणा, धर्मेणैव प्रतिज्ञापूर्वकेनैव, प्रदीयताम् ॥ २४ ॥

व्याख्या—बाढम् स्वीकृतम्, मया दुर्योधनेन, यथापुरम् पूर्वमिव, राज्यम्, पाण्डवेभ्यः युधिष्ठिरादिभ्यः, दत्तम् प्रदत्तम्, नराः जनाः, मृतेऽपि मरणान्तरेऽपि, सत्ये ऋते, तिष्ठति, अमते सति तिष्ठन्ति यशःकायेन तिष्ठन्तीति भावः ॥ २५ ॥

द्रोणः—हन्त इति हर्षे, प्रवृद्धकुलसंग्रहा विशालवंशद्वयस्य सगमाः अर्थात् पारस्परिकविरोधप्रशमनेन राज्यार्द्धविभागेन च कौरव-पाण्डवयोः कुलयोः

---

गई गुरुदक्षिणा धर्मपूर्वक ही मिल जानी चाहिए ॥ २४ ॥

दुर्योधन—मुझे स्वीकार है । मैंने पाण्डवों को अपना आधा राज्य पहले की ही तरह दिया । यदि सत्य निर्पाय रहता है तो लोग मरने के बाद भी यश रूपी शरीर मे जिन्दा रहते हैं ॥ २५ ॥

द्रोण—आज ये दोनों ही विशाल वंश पारस्परिक द्वेष के प्रशमन हो जाने से उन्नत हो रहे हैं, इससे हम सभी प्रसन्न है, सम्पूर्ण धरती का प्रशासन सूत्र

इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २६ ॥

( निष्क्रान्ताः सर्वे )

इति तृतीयोऽङ्कः

---

सङ्ग्रमे सति, वयम् सर्वे जनाः प्रसन्नाः स्म मोदामहे, इमाम् पुरोवर्तिनीम्, कृत्स्नाम् अखण्डाम्, महीम् पृथिवीम् च नः अस्माकम् राजसिंहो नामा नृपतिः प्रशास्तु प्रशासनम् करोतु ॥ २६ ॥

( सर्वे सकलजनाः, निष्क्रान्ताः रङ्गभूमितः प्रस्थिताः )

**इति 'विमला' संस्कृतव्याख्यायां तृतीयोऽङ्कः ।**

---

हमारे राजसिंह सम्भालें ॥ २६ ॥

( सबों का प्रस्थान )

**तृतीय अङ्क समाप्त**

इति 'बेगूसराय' मण्डलान्तर्गतगङ्गादक्षिणतटोपवर्त्ति 'अकबरपुर' ग्रामाभिजनेन यशोवशेषश्रीमद्देवज्ञरत्न 'कीर्तिनाथशर्म' तनुजुषा 'डाक्टरेट' उपाधिधारिणा एम. एम. इय व्याकरणशास्त्रि साहित्याचार्येण श्रीजगदीशचन्द्रमिश्रेण विरचित विमलाख्य संस्कृत-हिन्दीव्याख्याद्वययुतं पञ्चरात्रं समाप्तम् ।

**सम्पूर्णं पञ्चरात्रम्**

# परिशिष्ट

## नोट्स ( टिप्पणी )

### प्रथम अङ्क

**नाटक के नाम की अन्वर्थकता**—दार्शनिक दृष्टि मे किसी नाम की अन्वर्थकता का अभाव चाहे जो कुछ हो साहित्यिक दृष्टि नाम की सार्थकता तो मानती ही है। नामकरण के औचित्य के सबध मे क्षेमेन्द्र का दृष्टिकोण स्पष्ट है—'नाम्ना कर्मानुरूपेण जायते गुणदोषयोः'।

ऐसी दशा मे किसी भी नाटक के प्रकृत अर्थ के अनुकूल नाम चुनने मे कवि की कला परिलक्षित होती है। इसी अन्वर्थकता एव सुप्रयुक्तता के कारण भास ने 'पञ्चरात्र' शब्द को अर्थगौरव की दृष्टि से शीर्षक के रूप मे ग्रहण किया है। इस नाटक की सारी घटनायें पाँच रात के भीतर ही घटित हुई हैं। 'पञ्चरात्र' पद यहाँ रूपक परक है।

'पञ्चरात्रमस्ति विषयत्वेन अस्येति पञ्चरात्रम्, अर्श आदित्वादच्।'

सामासिक व्युत्पत्ति की दृष्टि से इसका एक दूसरा भी विग्रह है—

'पञ्चाना रात्रीणा समाहार पञ्चरात्रम्।' यहाँ सख्यावाचक शब्द पूर्व मे रहने के कारण द्विगु समास हुआ है।

**श्लो० १—द्रोण'**—इस नाटक के मङ्गलश्लोक मे द्रोण आदि नाटक के प्रमुख पात्रो का नामोल्लेख एक साथ मुद्रालकार के रूप मे किया गया है। नामोल्लेख की यह विधि भास के 'स्वप्नवासवदत्तम्' 'प्रतिज्ञायौगन्धरायण' एव 'प्रतिमानाटक' मे भी देखी जा सकती है। पात्रों के नामों का उल्लेख श्लिष्ट रूप मे है। 'द्रोण' काले काक और मेघ को भी कहते हैं। द्रोण द्रोणाचार्य का भी नाम था। यहाँ कुछ टीकाकारो ने द्रोण का अर्थ विशेषण के रूप मे कृष्ण के लिए काला कौआ का रङ्ग लिया है। लेकिन मेरी दृष्टि मे कृष्ण का रङ्ग सघन बादल की तरह श्यामवर्ण था, न कि कौए की तरह। अत हमने द्रोण

का अर्थ 'मेघ' ही लिया है, 'काक' नही। 'कृष्णवर्णसादृश्यात्' द्रोण का अर्थ काला कौआ भी होता है। अत कुछ लोगो ने लक्षणा के द्वारा इसका अर्थ 'द्रोणसदृश अर्थात् 'कृष्णकाकसदृश' लगाया है। मैं समझता हूँ, द्रोण का अर्थ बादल लगाना ही उचित है, जिसकी उपमा परब्रह्म श्रीकृष्ण को दी जाती है। cf 'अनावृष्टिहते सस्ये द्रोणमेघ इवोदित'। मृच्छ०१०–२६।

**पायाद् विराट्**—यह भी एक विचारणीय शब्द है। 'विराट प्राचीन पुरुष का प्रतीक है जो हमारे सरक्षक हैं। विराट इस नाटक का एक पात्र भी है जो 'शब्दैकदेशलक्षणाविराज्' के रूप मे भगवान के साथ पहचाना जाता है जो इस सृष्टि का पुरातन तत्व है और बाद मे चलकर विष्णु के रूप मे सर्वमान्य है। अत इसका प्रयोग इस श्लोक मे दो अर्थों मे निहित है–एक तो कृष्ण का निरूपण करता है, दूसरा 'विराट'। नृपति का।

**पृथिव्यर्जुनभीमदूतः**—इसके भी दो अर्थ हैं–चमक और आश्चर्य का दूत पृथ्वी पर–पृथिव्या अर्जुनस्य भीमाना च (कर्मणा) दूत। यह अर्जुन और भीम के दूत का भी अर्थ बोध कराता है जो कौरव के न्यायालय मे धरती पर अपने हिस्से की माँग मे उपस्थित हुआ है। एक और बात, 'भ्रातुर्ज्यायस' के के अनुसार पहले भीम का नामोल्लेख होना चाहिए तब अर्जुन का। किन्तु अर्थच्छवि की दृष्टि से ऐसा प्रयोग किया गया है।

**शकुनीश्वरस्य कर्णधार**—शकुनीश्वरस्य, गरूडस्यनियन्ता। शकुनि इस नाटक का एक पात्र है। दुर्योधन का मामा तथा गान्धार देश का राजा।

**दुर्योधन**—दुष्कर शत्रुभि योधने यस्य। एक कठोर प्रहारक या अद्वितीय योद्धा। 'दुष्कर' शब्द का 'कर' 'प्रादिभ्यो धातुजस्य' वार्तिक से लोप कर दिया गया है। दुर्योधन की तरह युधिष्ठिर भी यौगिकार्थ सम्पन्न शब्द है युधि स्थिर'।

**उत्तरग**—उत्तर भी युधिष्ठिर की तरह इस नाटक का एक पात्र है तथा शब्दगत इसका अर्थ आश्चर्य जनक कार्य करता हुआ है। उत्तर प्रशस्त कार्य गच्छति आचरति। उपर्युदीच्यश्रेष्ठेष्वप्युत्तर इति अमर।

**स्थापना**—'प्रस्तावना' और 'आमुख' के सदृश ही 'स्थापना' है। अच्छे अच्छे नाटको मे 'प्रस्तावना' एव 'आमुख' का ही प्रयोग मिलता है, 'स्थापना' का नही। 'दशरूपक' म भी 'आमुख' और स्थापना की चर्चा तो है पर

'स्थापना' की कोई चर्चा नहीं है। भास ने अपने सभी नाटकों में 'स्थापना' का ही प्रयोग किया है। जब कि सूत्रधार पूर्वरंग-विधान के बाद मञ्च से उतर जाता है तो सूत्रधार एक समकक्ष नट, जिसे स्थापक कहा जाता है, रंगमञ्च पर आकर नाटक प्रयोग की 'स्थापना' करता है। 'स्थापक' के द्वारा नाटक प्रयोग की यह उपक्रमणिका ही 'स्थापना' कहलाती है।

श्लो० ३–भक्तं — इस शब्द का अर्थ सामान्यतः पका हुआ भोजन होता है। लेकिन यहाँ इसका प्रयोग विशेष रूप में हुआ है। कुछ लोगों ने इस शब्द का प्रयोग श्वेत पुष्प की तुलना में किया है और कुछ खीर के अर्थ में

**प्रकुसुमितकाशा इव दिशः** —यहाँ दिशाओं की तुलना काश के फूल से की गई है जो अत्यधिक श्वेत होता है। Cf. शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि, काशपुष्पलवेनेदम् साश्रुपातं कृतं मम। N. F. मृगैस्तुल्या इत्यादि। यह संस्कृत कवियों के वर्णन की विशेषता है कि वे तपोवन का चित्र ऐसा खींचते हैं जहाँ चैतन्य मानव की बात तो दूर रही, पालतू जानवर भी अपना विकास भयरहित शान्तिपूर्ण वातावरण में कर पाते हैं।

**वधनिभृतसिंहा** —वधे निभृता सिंहा येषु—जहाँ सिंह मारे जाने के भय से आक्रान्त रहते हैं और इनका अर्थ गणपति शास्त्री के शब्द में 'वधे ताडनेऽपि परकृते निभृता निर्विकारा अकोपना सिंहा येषु' है। सिंह भी शान्ति एवं तेजस्वी जीवन यहाँ उत्साह के साथ बिताते हैं, यहाँ तक कि कोई उन तंग भी कर देता हो तो उसे वे क्षमा कर देते हैं। सम्पूर्ण विश्व जैसे यज्ञ की दीक्षा लेने की कसम-सा खा लिया हो। काम—क्रोध आदि का त्याग तपोवन के अणु-अणु में व्याप्त हो उठा है। इस वर्णन को अत्यधिक उत्प्रेक्षा का उदाहरण कहा जा सकता है।

श्लो० ४–तप्तोऽग्निर्हविषाऽमरोत्तममुखम्—अग्नि और अमरोत्तम मुख एक दूसरे का विराधाभास है। अग्नि देवताओं के मुख को माना गया है—'अग्निमुखा वै देवा' इति श्रुति। गर्जन्नृपे सद्गुणे —इसका स्थान 'नृपे विद्यमाने' के लिए दीर्घवृत्तीय है। व्याख्या—नृपे (विद्यमाने इति शेष) सद्गुणे रक्षति सजत् इदं जगत् सम्प्रति हृष्टम्। सारा संसार राजा की प्रशंसा प्रसन्न हृदय से करता है। उदारोह-अतिशिरे—ऊपर उठ गया।

**दृप्ताः पक्षिगणाश्च**—यहाँ संयोजक 'च' का प्रयोग प्रत्येक शब्द के बाद या संयुक्त शब्द के अन्त मे ही होना चाहिए। अत इसकी व्याख्या 'ते ते नरा" के साथ होनी चाहिए न कि 'पक्षिगणा.' के साथ। ऐसा करने से एक साहित्यिक मुहावरे की भी सपुष्टि होती है।

**सर्वश**—'बह्वल्पार्थात् शस् कारकात् अन्यतरस्याम्'। पा. ५।४।४२ के अनुसार 'सर्व+शस्' से हुआ है।

**अत्र भवन्त**—पूज्याः। इतराभ्योऽपि दृश्यन्ते। (पा. ५।३।१४) इति प्रथमान्ताद् भवच्छब्द योगे त्रल्। यहाँ 'त्र (ल्) का सयोग सर्वनाम 'इदम्' के लिए कर्त्ताकारक के रूप मे प्रयुक्त है। जब यह 'भवत्' के साथ संयुक्त होता है।

**श्लो० ५—श्लाघ्यप्रभूतश्रवाः**—श्लाघ्य प्रभूत श्रव (ख्याति या श्रवण या) येषा ते। जिसकी ख्याति एवं ज्ञान प्रशंसनीय एवं विस्तृत है।

स्वाध्यायशूरै. मुखै—उपलक्षिता.। उपलक्षणार्थे तृतीया। जिसके होठ बहादुर हो। जिसकी व्याख्या सीमा रहित हो। स्वाध्याय' 'वेदाध्ययनम्' है। शिष्यस्कन्ध० इत्यादि 'अर्च्चित' का अर्धपूजित हो—उनका प्रशसनीय हाथ।

**भो भो माणवकाः**—'बाल ;स्यान्माणवक' इत्यमरः। 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिक. स्मृत। नकारस्य च मूर्धन्यस्तेन सिध्यति माणव।' स्वार्थेक्न माणवक.।

**अनवसिते** उत्सृष्टव्यः—जैसा कि व्याख्याकार की दृष्टि पड़ी है। यज्ञ समाप्ति के बाद यज्ञमण्डप मे, रूढिगत अग्नि की स्थापना की गई है।

**श्लो० ६—एवा** "कनकयूपभुजेव—यहाँ यज्ञवेदी के स्तूप को स्वर्ण-निर्मितबाहु की सज्ञा दी गई है। (कनकयूपविलम्बबाहु. और रुचिरकनकयूप-व्यायतालम्बबाहु।) चैत्याग्निलौकिकाग्नि- इत्यादि। चैत्य यज्ञस्थान तद्गतोऽग्नि. चैत्याग्नि.। यज्ञवेदी पर की आग तीन तरह की होती है—गार्हपत्य, आहवनीय और दक्षिण। जिस आग को लडको ने जलाई उसे लौकिकाग्नि कहा जाता है। यह आग यज्ञवेदी की अग्नि से भिन्न तरह की आग स ली गई है। महाकवि भास ने इन दोनो (यज्ञाग्नि और लौकिकाग्नि) की तुलना ब्राह्मण और शूद्र के रूप मे की है।

**प्राग्वंशम्**—यज्ञशालाविशेष । 'प्राग्वंशं प्राग् हविर्गेहात्' । यह यज्ञशाला का वह भाग है जिसमें हवन की सारी सामग्रियाँ सुरक्षित रक्खी जाती हैं। अथवा—यह वह स्थान है जहाँ याज्ञिक लोग यज्ञकाल में निवास करते हैं। क्षीरस्वामी के शब्दों मे—'पत्नीशालाख्यं अग्निशालायाः प्राक् यो भाग' ।

**श्लो० ७—अग्निरग्निभयादेव**—यहाँ प्रथम अग्नि शब्द का प्रयोग पवित्र गार्हपत्याग्नि के रूप में हुआ है तथा द्वितीय अग्नि का प्रयोग सामान्य आग के रूप म । यज्ञवेदी की गार्हपत्याग्नि को यज्ञान्त में ऋत्विजों ने हटाकर प्राग्वंश में रक्खा था । आग लगने पर लौकिकाग्नि से कहीं यह दूषित न हो जाय इस भय म लोग इसे अलग हटा रहे हैं ।

**श्लो० ८—शकटी**—शकट शब्द का यह ङीप्रत्ययान्त रूप है । मृच्छकटिक में सुवर्णशकटिका, मृत्तिकाशकटिका आदि शब्दों का प्रयोग हुआ है । 'शकटी च घृता पूर्णा'—का आशय यह है—'यथा घृतापूर्णाशकटी वारिणा सिच्यमानापि वाह्निनादह्यत ... दह्यत तथैरवसारत्या नारीवाष्पवारिणा सिच्यमानापि वाह्निनाद अपत्यप्रेम्णा दह्यते इति कल्पदेशो महाशया ।

**बालस्नेहेन**—यह शब्द परम्परित श्लेष के रूप में व्यवहृत है । इसका एक अर्थ है 'बालक के प्रति स्नेह की भावना' और दूसरा अर्थ है अल्पस्नेह जिसकी उपमा अवशिष्ट अल्प घी के साथ है।

**श्लो० ९—चक्रधरस्य**—सर्वश्रेष्ठ परमात्मा का—सुयोधन, मुष्यति दर्भे धर्मदारदी दग्धुं प्रवृत्त । यज्ञीय सामग्री होने म प्रवृत्त साढ़े जहाँ पात्रों में आवृत होने के कारण आग धीरे-धीरे बढ़ रही थी, वहाँ अब तेज आग हो गई और उस आगे या ... जब तत्पर हुई तो क्रमशः फैलती हुई आग को बुझाने के लिए वह आँ की ओर बढ़ गया।

**नीलशाद्वलतया वह्निः शनैर्यामन**—घासों से हरित होने के कारण यह कम जलता है। पावक शब्द का प्रयोग वह्नि के रूप में पंक्ति दो में हुआ है।

**सूर्यायते**—सूर्य इव आचरति । मण्डलाकारतया सूर्य इव भाति । सूर्य शब्दात् आचारे क्यङ् । कर्तुं क्यङ् सलोपश्च । पा. ३।१।११ ।

**श्लो० १०—वहनेन भीताः**—अनियमित है और इसका रूप 'वहनाद् भीता' होना है—भीत्रार्थानां भयहेतु । पा० १।४।२५ ।

**श्लो० ११—कोटरान्तरदेहस्था**—कोटर एव अन्तरदेह देहाभ्यन्तर तत्र तिष्ठन्ति । आत्मा जो शरीर के अन्दर की वस्तु है, उसकी उपमा किसी पेड की गुफा मे प्रविष्ट किसी पक्षी से की गई है।

**श्लो० १२—शत्केशुंकेन**—इसके लिए Cf एकेनापि कुवृक्षेण कोटरस्थेन वह्निना । दह्यते तद्वन सर्वं कुपुत्रेण कुल यथा ॥ चाणक्यशतकम् मे उद्धृत है। (इसके बाद दो श्लोक गणपति शास्त्री के द्वारा सग्रहीत पुस्तक म दिया गया है। पर, त्रिवे-न्द्रम साहित्य के मूल पुस्तक मे इन दोनो श्लोको का अस्तित्व नही है।

**श्लो० १४—निविष्टो दुष्कुले साधु'**—व्याख्या—दुष्कुले स्त्रीदोषण निविष्ट साधु इव दह्यते । 'निविष्ट' का अर्थ यहाँ 'ससृष्ट' है । कोई सत्पुरुष यदि किसी गलत परिवार की दुष्ट महिला के सम्पर्क म आता है, तो उसका नाश भी निश्चित होता है।—दुष्टस्त्रीससर्गं सत्पुरुषस्य दोषाय भवति ।

**श्लो० १५—सवृक्षक्षुपगुल्मम्**—वृक्षै क्षुपै गुल्मैश्च सह वत्तमानम् 'वनम्' सपुष्ट करता है । क्षुप एक छोटी झाडी है । इसका प्रयोग 'अविमारक मे भी हुआ है । V–६–मनोमार्गरूढक्षुपा नीलाम्बुदा ।

**श्लो० १६—मधुपटल चक्रेण महता**–तृतीया उपलक्षणार्थ म है। लम्बा ताड का पेड अपने मधुकोष के साथ बडा भयावह दीखता है। इसकी तुलना रुद्र की कुल्हाडी से की गई है जो बडा ही सटीक है।

**श्लो० १८—स्रुग्भाण्डमरणी**—स्रुग का अर्थ बलटुल और भाण्डम् का अर्थ काठ का कटोरा होता है। 'स्रुक् हवनी सत्र जुहपमृदादिभेदभिन्न दारुमय होमसाधन–तद्रूप भाण्ड पात्रम्। उपभुङ्क्ते–अग्नि के साथ जलन का बोध कराता है। जहाँ उपमान के साथ इसका अर्थ 'खा जाना' होता है। विक्रीय जीवति–बेचकर खाता है।

**श्लो० १९—चलितैकपर्णहस्तः**—चलित एक पर्ण एव हस्ता यस्य स तथाभूत यहाँ पेड की टहनियाँ नदी के ऊपर झूल रही ह और जैसे-जैसे हवा उन्हे झुलाती हैं, वह पानी पर अब डूब रही ह। मानो वह आग म जलकर मरे हुए अपने वृक्षबधुओ को जलाजलि दे रही है। कवि की यही कल्पना है।

**श्लो० २०—आगतकथा मधुर**—आगतस्य प्रसक्तस्य यज्ञस्य कथया प्रस्तावेन मधुर यथा भवति तथा ।

**पाण्डवपरिग्रहं कुर्वन्ति**—मनुतामूलक क्रोधका परित्याग कर अपने स्वजनों पर दया करने का अनुरोध किया है। शब्दान्तर में पाण्डवों के ऊपर सहृदयता दिखाने का स्पष्ट आग्रह है।

**विष्कम्भकः**—विष्कम्भक तथा प्रवेशक में भी विष्कम्भक प्रधान है। प्रवेशक विष्कम्भक का ही दूसरा रूप कहा जा सकता है। जहाँ नीच पात्र होते हैं तथा उसका प्रयोग प्रथम अंक में प्रारम्भ में नहीं होता। विष्कम्भक के द्वारा भूत काल की या भविष्यत् काल में होने वाली घटना का संकेत किया जाता है। यज्ञ तो कार्य समाप्त हो चुका था। इस विष्कम्भक के माध्यम से नाटक की कथा वस्तु को समझा नहीं जा सकता। कवि ने अग्नि का विस्तृत वर्णन किया है। इस क्रम में उन्होंने यज्ञ मण्डप जलने का तथा यज्ञीय सामग्रियों को भी जला डालने का रोचक वर्णन किया है।

**श्लो० २२—रूप्यग्रहणात्**—यहाँ यह पाण्डवों की सम्पत्ति का जूए में जीतने के तात्पर्य को सपुष्ट करता है। 'रूप्य' का अर्थ मुहरयुक्त स्वर्णमुद्रा या कांसा जैसे धातुओं के सिक्के से है। रूपादाहतप्रशंसयोर्यप्। पा. ५।२।१२०। रूप्य आहतस्वर्णरजते।

**अयशो निपीतवान्**—अयश को भी जिसने पी लिया है—नितरां अनुभूतवान्।

**श्लो० २३—मे निवसति गुणो**—मुझमें दयादि गुणों का निवास हो रहा है। यहाँ निवसति का अर्थ नितरां वसति है। मयि स्थिरवासं करोति 'मे' शब्द का प्रयोग इस श्लोक में उपयुक्त नहीं है—जगद् विश्रस्त में। फिर भी, यहाँ 'मयि' का प्रयोग संस्कृत भाषा के अनुसार होना चाहिए। फिर भी, इसे हम गुण के साथ ग्रहण कर सकते हैं। मे मम गुण निवसति।

यदिह कथयति—यहाँ 'लोक' या 'आगम' विषम प्रयोग उपयुक्त होगा।

व्याख्या—मृतं प्राप्य स्वर्गं (इति) यदिह (लोक) कथयति एतद् अनृतम्। VL यदिह कथयन्त्येतदनृतम् अच्छा होगा।

**गान्धारीमातः**—इस तरह का प्रयोग भास ने बहुत किया है—सुमित्रा-मात, कौसल्यामात, कैकेयीमात, (प्रतिमा)। शौरसेनीमात, यादवीमात (बालचरित में)। काशेलीमात (चारुदत्त में)।

इस तरह के प्रयोग मे पाणिनि के नियम की उपेक्षा की गई है, पाणिनि के अनुसार नद्यृतश्च, से कप् होना चाहिए।

समासान्तविधि की अनित्यता मानकर इसको शुद्ध कर लिया जाता है।

**धौतकल्मषाङ्गः अङ्गराजः**—अनुप्रास का यह एक सायास प्रयोग है। धौत कल्मषं यस्मात् तद् धौतकल्मषम्। धौतकल्मषं अङ्गं यस्य स.। अर्थात् कायविशुद्ध.।

**श्लो. २५—इक्ष्वाकुशर्याति**—ये सारे सूर्यवंशी राजा अपनी महानता और दयालुता के लिए प्रसिद्ध थे। नष्टाः शरीरैः क्रतुभिर्धरन्ते। Cf हतेषु देहेषु गुणा धरन्ते—कर्णभार १७—धरन्ते किन्तु यहाँ आत्मने पद का प्रयोग असामान्य है। सामान्यतः भ्रियन्ते ( अर्थात् जीवन्ति ) रूप आता है।

**प्रथमक्रमः**—मास को क्रम के प्रति एक आस्था है। इस तरह का प्रश्न उन्होने प्रतिमा मे भी उठाया है। Cf राजा रामो लक्ष्मणो वैदेही व्ययमक्रम सुमन्त्र.—अथ कः क्रमः। प्रतिज्ञा ii १४२०।

**श्लो० २६—दैवतं मानुषीभूतम्**—महाभारत I–१०६ मे भीष्म को 'देवता' का अवतार माना गया है। ये आठ 'वसुओ मे से एक है। शापवश इन्हे मनुष्य योनि मे आना पडा है। अतः इन्हे मनुष्य के रूप मे देवता कहा गया है। दूसरी पक्ति की छद रचना जटिल है। व्याख्या—भीष्मपुरक्रम्य वन्दितु आचरणं अहं न मन्ये। वन्दितुम्—'तुमुन्' क्रियार्थ है। क्रियोपपद—वन्दितुम् आचरणं वन्दितुं चेष्टितं अहं न मन्ये नानुजानामि। भीष्म की उपेक्षा कर तुमने जो प्रथम मुझे प्रणाम किया है, उससे मैं संतुष्ट नही हूँ। या हम वन्दितुं की व्याख्या अन्य तरह से भी कर सकते है—जहाँ 'तुमुन्' मात्र धात्वर्थ के लिए ही प्रयुक्त है अर्थात् वन्दनं, आचरणं, अर्थात् शिष्टाचारं न मन्ये। भीष्म की उपेक्षाकर इस प्रणाम को मैं शिष्टाचार नही मानता।

**नमस्यताम्**—'नमस्यति' का कर्मवाच्य आज्ञा सूचक अन्य पुरुष एक वचन है। नाम धातु—नमस्+क्यच्। 'नमोवरिवश्चित्रङ' के अनुसार पा० ३।१।१९।

**श्लो० २७—भवान् स्वयम्**—भीष्म का यह कथन है। उन्होने द्रोण की श्रेष्ठता सिद्ध करने के लिए यह कहा है कि मुझे माता ने जन्म दिया है और

आप स्वयम् अयोनिज हैं। महाभारत आदि पर्व के खण्ड-१३० म द्रोण के जन्म की कथा वर्णित है। उनका जन्म भरद्वाज मुनि के कलश म हुआ था। अत वे स्वयमू हैं।

**अपह्नव**—शब्द यहाँ एक विशेष अर्थ मे प्रयुक्त है। वस्तुत अपह्नव का अर्थ छिपाना होता है। किन्तु, म० म गणपति शास्त्री ने इस शब्द की व्याख्या करते हुए 'स्नेह' अर्थ लिखा है—अपह्नव स्नेह मद्भावितविषस्य रागद्वेषौ न स्त सा। भूतमैश्वर्यं । अपनी इस व्याख्या की सपुष्टि म उन्होंने वैजयन्ती का उद्धरण दिया है 'अपह्नवो द्युतिस्नेहौ'।

**शिष्यमहत्तरा**—प्रमुख शिष्य। 'महीयस्' की तरह 'महत्' की तुलना 'महत्तर' के साथ है।

**नोत्सहन्ते महात्मान**—यह वाक्य अन्तर्निहित प्रश्नवाचक है। क्या महात्मा लोग अपनी प्रशसा करने म तत्पर होते हैं?

**बुद्धिप्रशमनम्**—बुद्धे महस प्रशमन रागद्वेषादि कलुषतानिवृत्ति। तुम्हारी बुद्धि प्रशात हुआ करे।

**श्लो० २८—समानीय**—अनुष्ठाय। **आप्तदक्षिणान**—आप्ता पर्याप्ता दक्षिणा येषु तान्। यहाँ क्रतु शब्द यज्ञार्थपरक है। यहाँ ब्राह्मणों को उदारता पूर्वक दान दिया जाता है। Cf क्रतुभिश्चाप्तदक्षिणै। द्रोणपर्व १८-२५।

**उद्योग जनयति**—यहाँ 'उद्योग जनयति' का अर्थ हुआ 'युद्ध के लिए प्रेरित करता है। यह अभिव्यक्ति प्रतिमा I-१९ म आता है। अस्मद्राज्य-प्रशा भवत उद्योग जनयति। **प्राप्तक्रम**—'प्राप्तपर्याय यथा भवति तथा'।

**श्लो० २९—अन्तस्स्वनमाप्य**—म म गणपतिशास्त्री के शब्दो म—प्रातिपूर्वकमनामाप्य—इसकी व्याख्या करते हुए आचार्य रामचन्द्रमिश्र ने लिखा है—'यज्ञानुष्ठाननियमादिना कृशकायस्त्वम् मदालिङ्गनज क्लं यदि सोढु शक्ष्यसि तदाह त्वा दृढमालिङ्ग्य सुखयिष्यामि, पर त्वदाय हृदयाभिप्रायम ज्ञात्वा नाह प्रवर्तिष्ये तवालिङ्गने इति भाव।'

**सभाजयति**—बधाई देता है। 'समाज प्रीतिसेवनयो' चुरादि। स्नेहात् सभाजयितुमेत्य दिना यमूनि। उत्तररामचरि० १,३।

**वासुभद्रेण—वासुदेवेन** । वासु का यहाँ अर्थ है वासुदेव, सम्पूर्ण वासुदेव शब्द के लिए यहाँ उसके एक देश 'वासु' का प्रयोग किया गया है। वासुश्चासौ भद्रश्च । बलभद्र या रामभद्र की तरह यहाँ श्रीकृष्ण के लिए वासुभद्र का प्रयोग किया गया है। क्षीर स्वामी ने इसकी व्याख्या की है—'जगत्या सर्वहृदये वसतीति वासुः।' महाभारत की कथा के अनुमार अभिमन्यु ने गोग्रहण म भाग नही लिया था । उत्तरा के साथ इसकी शादी निश्चित हो जाने पर ही बाद मे इसे मत्स्यपुर अर्थात् विराट नगरी मे बुला लिया गया ।

**व्यपश्रयिष्ये**—मैं प्रार्थना कर लूंगा ( कालान्तर मे माँग लूँगा ) ( वि+अप्+श्रि ) इसी अभिव्यक्ति का उपयोग 'मध्यमव्यायोग' मे भी एक जगह किया गया है—"वृद्धा—हन्त, निराशा स्म. । भवतु, पुत्र व्यपश्रयिष्ये तावदेनाम् । स्वप्नवासवदत्ता मे इस को व्याख्या है—व्यपाश्रयणा=प्रार्थना । आचार्य रामचन्द्रमिश्र ने लिखा है—"व्यश्रयिष्यते—साधारणो हि याचको दातारं समयान्तरे याचते, आचार्यस्तु न भवति मामान्ययाचकोऽतो नोचितम् तस्य व्यपश्रयणमिति ।

**श्लो० ३०—पीतः सोमो बाल्यदत्तः**—आचार्य ने युवावस्था मे ही सोमरस का नियोगात् अर्थात् विधिवत् पानकर लिया है। ( बाल्यदत्तः—बाल्ये तरुणे वयसि अभिषुत. ) यस्य दरिद्रः यस्मिन् दरिद्र ।

**प्रापस्तावत्**—पानी लाओ। जल की यह माँग कई नाटकों मे विभिन्न परिस्थितियों मे देखी जाती है। यथा—अभिषेक—१-२६[७], प्रतिमा २-२०[१], मध्यम १-४७[४], दूतवाक्य १-४३[१], प्रतिज्ञा १-१५[१९] ।

अश्रुपातोच्छिष्टस्य—वाष्पासारदूषितस्य अर्थात् आसुओ से अपवित्र

**श्लो० ३२—करणम् प्रतिग्रहाणाम्**—प्रतिग्रहाणाम् दामनस्वीकरणानाम् करणम् साधनम्-यहाँ करणशब्द अत्यधिक प्रभावकारी साधन या प्रमाण है। करण का यही अर्थ है एक बन्धपत्र, अनुबन्ध या प्रमाणपत्र। उदाहरण—मनु० Nu ५१ ५२।

**श्लो० ३३—येषां गति क्वापि**—येषा निराश्रयाणाम् कुत्राप्याश्रयस्तमाश्रयमलभमानानां कुत्रापि गति नोपलब्धा'—जिन्हें कोई आश्रय नही है। महाभारत के अनुमार कौरवों को यह पता नही था कि बारहवर्षों तक पाण्डव

दर दर की ठोकर खाने के बाद यह तेरहवां वर्ष अज्ञात वास में रूप में कहीं व्यतीत कर रहे हैं। प्रथम पंक्ति में उल्लिखित सर्वनाम यषाम् की तरह द्वितीय पंक्ति में पाण्डवों के साथ तेषाम् है।

श्लो० ३४—उपन्यस्तस्य—दक्षिणादानोपन्यासम्, दक्षिणा देने के प्रस्ताव को उपस्थित करने वाले प्रतिगृह्यताम् दक्षिणा इति उपन्यास कुर्वाणस्य। उपन्यस्तस्य = उपन्यस्यवत कर्तरि क्त। और इसका यह अर्थ समर्पित (तुम्हारी देखरेख) में भी हो सकता है। गौरव-गुरुत्व तुम्हें आध्यात्मिक पथ प्रदर्शक मान कर जिसने तुम पर विश्वास किया।

यज्ञप्रस्तुतम्—यज्ञे प्रस्तुतम्, यज्ञ के लिए आवश्यक बताना अर्थात् यज्ञ की आवश्यकताओं से लाभ उठाना यथा इप्सितदान प्रभृति, धर्मवञ्चना-धर्मेण हेतुना वञ्चना धर्म के नाम पर छल।

गान्धारविषयविस्मित विस्मित गर्वित। विस्मित शब्द का प्रयोग अन्यनाटकों में भी इसी अर्थ में हुआ है-यथा-विहगवाहनमानविस्मित दूतवाक्य। १-१२

सर्वलोकमनार्यमितिमन्यसे—यह वाक्य रचना अनियमित है। इस होना चाहिए था। सर्वं लोकं अनार्यं इति मन्यसे। यहाँ इति शब्द का योग भी जा सकता है। चूंकि 'मन्यसे' सर्वलोकमनार्यम्' में द्वितीया विभक्ति का प्रयोग है। इति का ऐसा प्रयोग गीता में भी उपलब्ध है "यमन्यायमितिप्राहु।" ६-२।

श्लो० ३५—किं पर याचितं दत्त बलात्कारेण तेह तम—ऐसा ही प्रयोग भास ने श्रीकृष्ण के मुख से दूतवाक्य में किया है—

> दातुमर्हति मद्वाक्यात् राज्यार्धं धृतराष्ट्रज।
> अन्यथा सागरान्ता गां हरिष्यन्ति हि पाण्डवा॥

याचितं—याचनाभि। मावत।

अवभृथस्नानमात्रमेव खलु—इद यज्ञान्तस्नानम्। यहाँ 'इदानीम् वर्तते' का प्रयोग होना चाहिए। तुम इस समय यज्ञान्त स्नानकर चुके हो। इस पवित्रतम स्थिति में तुम्हें शकुनि की बात नहीं सुननी चाहिए क्योंकि शकुनि मित्रमुख. मित्र मुखम्—वाक्यस्य अर्थात् वाङ्मात्रमित्रम्।

**धर्मच्छलेन**—धर्मः इति छलं तेन। धर्मच्छलेन सत्यवचनपालनाग्रहेण। धर्म शब्द के नाटकीय व्याज से। द्यूताश्रयवृत्तिः—द्यूतव्यसनी, जुए का शौकीन।

**श्लो० ३८—तोलयन्नेव**—जब वह ऊर्ध्वोन्मुख हो ही रहा था। म० म० गणपतिशास्त्री ने इसकी व्याख्या की है—उन्मिमान एव। उन्मानमिह तारतम्य-परीक्षणम्। किमनेन स्तम्भेन घर्षयितॄन् प्रहरेयं किममुना स्तम्भेनेति तत्सारफल्गुताम्—दृष्ट्या पर्यालोचयन् नन्। यथा—एष दुरात्मा भीमः सर्वराजसमक्षमवमानिता द्रौपदी दृष्ट्वा प्रवृद्धामर्षः समास्तम्भ तुलयति। दूतवाक्य—१–७।

यद्येकस्मिन् विमुक्तः—किसी एक व्यक्ति पर आक्षेप किया गया है। यद्यपि स्पष्टतः किसी का नामोल्लेख नहीं है फिर भी स्पष्टतः शकुनिकी ओर सकेत है।

**कर्दनम्**—कुत्सित. शब्दः। एपा च भिक्षा मम दक्षिणा च "इत्येवं रूप याच्ञादैन्यपरः शब्द.। म० म० गणपतिशास्त्री ने इसका अर्थ 'खुशामद' लिखा है। अर्थात् खुशामद मत करो।

कर्दनम् का अर्थ है 'कुत्सितम् याचनम्।'

**श्लो० १–३९—ज्येष्ठो भवान्**—इस कथन से स्पष्टतः यह पता चलता है कि उम्र की दृष्टि से दुर्योधन पाण्डवों से बडा था। किन्तु, महाभारत, आदि पर्व के अनुसार युधिष्ठिर तो कौरवो से बड़े थे ही। कदाचित् भीम भी दुर्योधन से बडे थे। क्योंकि दुर्योधनका भी जन्म उसी दिन हुआ था जिस दिन भीम ने जन्म लिया था—

> 'यस्मिन्नहनि भीमस्तु जज्ञे भारतसत्तम,
> दुर्योधनोऽपि तत्रैव प्रजज्ञे वसुधाधिप।'—महाभारत, आदिपर्व.

इसी श्लोक के अन्तिम पंक्ति मे प्रश्नार्थक दो विकल्प उपस्थित किये गये है—कुटुम्बे तान् धारयिष्यसि ? अथवा—'पाण्डवाः मृगैः सह वर्त्तयन्तु। तान् पाण्डवान् कुटुम्बे परिवारे धारयिष्यसि अन्तर्भाव्यपरिपालयसि ? अथवा—पाण्डवाः मृगैः सह वर्तयन्तु = देहयात्रा कुर्वन्तु। यहाँ वृत् धातु का प्रेरणार्थ रूप ( वर्तयति ) है जिसका अर्थ सदा कार्य रत रहना है।

**श्लो० ४०—गतमितमवसानम्**—इदम् अवसानम् गतम्, अब यह बात समाप्त हो चुकी है। रक्ष्यताम् शिष्यकार्यम्—शिष्यकार्यम् से कौरव और पाण्डव दोनों ही शिष्यों का हितसाधन कीजिए। 'पाण्डवो को 'राज्यांशप्राप्ति

म्द' अर्थात् आधा राज्य दिलवाकर हित साधन करें और कौरवों को 'गुरु-दक्षिणादान प्रतिज्ञा' की आपूर्ति करें।

श्लो० ४१—धर्माधिकारवचनेषु शमीभवन्तु—धर्माधिकाराः धर्मोप-देशाधिकारिणः गुरुजनाः, तेषां वचनेषु अर्थात् भवादृशानां महाकुलानां बान्धव-विग्रहोगुरुजनोपदेशैरेव शाम्यन्तीति भाव। इसी तरह का अन्य प्रयोग 'परिष्वङ्गः शमीक्रिया' और नष्टानि कार्याणि शमीकरोति। अविमारक ६–१६ पृष्ठ।

समर्थयितुम्—अनुमोदनम् कारयितुम्, स्वसहायानां सम्मतिं प्रार्थमित्यर्थः।

हृन्तविपन्नम् कार्यम्—यह वाक्य 'बालचरित १–१९ में प्राप्त है। यह एकस्वगत भाषण है और हम इसमें भय प्रदर्शन की आशा करते है। 'आत्मगतम्' सन्दर्भगत है।

यदि दातव्ये राज्ये—राज्ये यदि दातव्ये, जिसका अर्थ है 'राज्य दानव्यम् चेत्, यहाँ निर्देश की अस्पष्टता के कारण 'यदि' का प्रयोग आवश्यक नहीं है।

श्लो० ४५—क्षमाक्षमत्वे तु भवान् प्रमाणम्—राज्यार्द्धदानस्य क्षमा-क्षमत्वे युक्तायुक्तत्वे—तुम्हें अकेले ही इस बात का निर्णय लेना है कि राज्य आधा हिस्सा जो तुम पाण्डवों को दोगे, वह उचित है अथवा अनुचित।

सुभ्रातृनाम्—दन्दिते भ्रातृ। पा० ५।४।१५६ इति कप प्रतिषेधः। शोभनः भ्राता यस्य असौ सुभ्राता, तस्य भाव सुभ्रातृता। भास ने 'सौभ्रात्रम्' शब्द का प्रयोग प्रतिमा १–३० अभिषेक ३–२५ में किया है।

श्लो० ४६—शून्यमित्यभिधास्यामि—ऐसा कोई देश नहीं है जहाँ पार्थ से अधिक शक्तिशाली कोई अन्य वीर हो अथवा—जहाँ राजा युधिष्ठिर राज्य करेंगे वहाँ ऊसर भी ऊपजाऊ हो जायेगा इस तरह की बात महाभारत में भी कही गई है—

> सदा च तत्र पर्जन्यः सम्यग् वर्षी न संशयः
> सम्पन्नसस्या च मही निरातङ्का भविष्यति
> न भय त्वा विद्येतत्र यत्र राजा युधिष्ठिरः। महाभारतविराटपर्व २८

श्लो० ४७—प्रनमिह कुलवृद्धं—यहाँ तृतीया का प्रयोग कुलवृद्धैस्यः के लिए प्रयुक्त है। यदिह पृथिव्याम् प्रमाणम् कुलवृद्धमुखात् श्रुतम् अवगतम्। मैंने

गुरुदेव के हाथ मे जल छोड दिया है। यह इस दान का प्रमाण है, ऐसा कुल-वृद्धो न शास्त्रो से जाना है। 'अपनय' तस्मात् जलदानादिकर्म अपनय—अनीति-र्वाविञ्चना द्रोणकृतासमदप्रतारणा यथा वा अन्य एव वा कोप्यनयो भवत् जायताम्, नृप—शकुनि के लिए प्रयुक्त है।

**श्लो० ४८—सम्वत्सरद्वादशभिर्न दृष्टा**—म म गणपति शास्त्री ने इसकी व्याख्या की है—द्वादशवर्षैभि करणभूतै—यहाँ तक की उनकी व्याख्या का तात्पर्य यह है कि—

प्रतिज्ञा यह थी कि बारह वर्षों के वनवास के बाद पाण्डवो को एक वर्ष गुप्तवास म रहना पडेगा। इस गुप्तवास की अवधि म यदि वह किसी की पहचान म आ गया तो पुन बारह वर्षो का वनवास भोगना पडेगा। किन्तु कठोर श्रम के बाद भी कौरवो को गुप्तवास की अवधि म पाण्डवो का पता नहीं चल सका। किन्तु, भास महाभारत की इस प्रचलित कथा मे पूर्णत अन-भिज्ञ प्रतीत होते है। क्योकि, इमसे पूर्व के पद्य म उ होने लिखा है कि 'बारह वर्षों से जिनका पता नही चला है—

येषा गति क्वापि निराश्रयाणा सवत्सरैर्द्वादशभिर्न दृष्टा

—पञ्चरात्रम् १, ३३

**ग्रच्छलोघम**—अच्छल मित्रत्व नाम। अविमारक ४-१२-३३ अच्छलो हि स्नेहो नाम अविमारक-५-४

**श्लो० ५०—हनूमत्व गता स्पृहा**—स्पृहा अभिलाष, हनूमत्व गता मम इच्छा हनूमत इच्छेवातिविशाला जातेत्यर्थ। हनुमान को भी सीता के निवास स्थान का कुछ भी पता नही था फिर भी उन्हे जानकी का पता लगाने म सफलता मिली। दूसरी पक्ति मे प्रयुक्त 'येन' शब्द हनुमत् शब्द का ही बोध कराता है। प्रथम पक्ति मे यद्यपि जो शब्द अप्राप्य है फिर भी हनुमत्व मे तद्धित रूप मे वह प्राप्य है।

**कुतो न खलु पाण्डवाना प्रवृत्तिरुपानेतव्या**—तो फिर कहाँ से पाण्डवो का पता चले? द्रोण के इस स्वगत प्रश्न का उत्तर भट के-शब्दो म मिलता है—'विराटनगरात्' यद्यपि इसने यह उत्तर अन्य उद्धरणो के रूप म दिया है।

## द्वितीय अङ्क

गोपालो के इस दृश्य की तुलना 'बालचरित' के तृतीय अंक के प्रारंभिक दृश्य के साथ की जा सकती है।

**अहीनवत्साः**—न हीना अहीनाः, अहीना वत्सा यासां ता अहीनवत्सा.। अहीनवत्सा. की दूसरी व्याख्या 'स्वस्तिमन्त' अथवा—'अनपेत' भी की जा सकती है।

**आ अन्तु**—इसे 'आ अन्तु' आयान्तु होना चाहिए। म० म० गणपति शास्त्री ने इसकी व्याख्या—आअन्तु आगन्तु सज्जीकृतम्' के रूप मे की है।

**किदमङ्गलमोदआ**—इससे सुन्दर 'किदमङ्गलामोदा' प्रयोग है। कृत मङ्गलम् आमोदश्च यैस्ते। यहाँ 'मङ्गल' का अर्थ नवीन वस्त्र एवं आभूषण से है जिससे वे सजे सजाये हैं, और 'आमोद' का अर्थ उसके माला और सुगन्धि से है। अथवा हम यो कह सकते हैं कि 'मगल' का अर्थ शुभ होता है और आमोद का अर्थ 'प्रीति' खुशी या प्रसन्नता 'कृतः मङ्गल आमोदः यैस्ते—आमोद यहाँ खुशी और प्रसन्नता के लिए प्रयुक्त है। यथा—'विवाहामोदसंकुले राजकुले। स्वप्नवासवदत्ता, ३–३।

**एषो वा अषो पुक्खलुक्खं इत्यादि**—इस अपशकुन की सूचना के लिए द्रष्टव्य—

रूक्षस्वरं वाशति वायसोऽयम् एव शुष्कवृक्षस्थितोऽध्वाक्ष आदित्यमुखस्तथा—मृच्छकटिक ९–१०–११.

**एवु ज्येट्ठं गच्छिअ**—यहाँ ज्येष्ठम् का प्रयोग ज्येष्ठयम् के अर्थ मे हुआ है। अर्थात् वयोधिकत्वकृतं सत्कारमासाद्य व्याहरामि। मैं उनमे सबसे बड़े का अभिनय करूँगा।

**दिवाचन्द्रप्पभापण्डुल इत्यादि**—पण्डुलजोवगुण्ठिदमण्डलु—पाण्डुरजो-वगुण्ठितमण्डल'—दिवसनिशाकरस्य कान्तिरिव धवलपीतवर्णयद्रजस्तेनावगुण्ठित-व्याप्तम् छन्नं मण्डलं यस्य तादृशोयं सूर्य.। अस्ति च नास्ति च, आकारमात्रेण विद्यते प्रभया पुनर्नास्ति, सन्नपि न प्रकाशते इत्यर्थः। तात्पर्य यह है कि गोपबाल भयाक्रान्त होने के कारण अपनी आशका मे सूर्य के शतशतभयावह आँखो को आकाश मे देखता है जो धूल रूपी बादल की घूँघट से झाक रही हैं।

हनुमान्— तव नृप ! मुखनिःसृतैर्वचोभि—
विगतभया हि वयं विनष्टशोकाः।
रघुवर ! हरये जयं प्रदातुं
गिरिमभिगच्छ सनीरनीरदाभम् ॥

लक्ष्मणः— आर्य ! सोपस्नेहतया वनान्तरस्याभितः खलु किष्किन्धया भवितव्यम् ।

सुग्रीवः—सम्यगाह कुमारः ।

---

अन्वय.—हे नृप ! मुखनि मृतैं तव वचोभि वयं हि विगतभयाः विनष्ट-शोका च (स्म) हे रघुवर ! विजयं प्रदातुं सनीरनीर-दाभम् गिरिम् अभिगच्छ ।

तवेति—नृप=हे राजन्, मुखनि मृतै.=मुखात् वक्त्रात् नि मृतैं विनिर्गतै, तव=रामस्य, वचोभि=वचनै, वय=हनूमानादय, विगत-भया=भयरहिता, विनष्टशोका=शोकरहिता । रघुवर=हे रघुश्रेष्ठ ! हरये=वानराय, विजय=जयम्, प्रदातु=वितरितुम्, सनीरनीरदाभं=सनीरण जलेन सह वर्तमान सनीर सनीर चासौ नीरद बादल तस्य आभा कान्ति इव आभा यस्य तम्, गिरि=पर्वतम्, अभिगच्छ=अभियाहि । उपमालङ्कार । पुष्पिताग्राछन्द ।

सोपस्नेहतयेति—सोपस्नेहतया=स्वच्छतया, वनान्तरस्य=अरण्यसमीपस्य, किष्किन्धया=एतन्नामकनगर्या, भवितव्य=भवनीयम् ।

सम्यगेति—सम्यक्=उचितम् ।

---

हनुमान्—हे राजन्, आपके मुख से निकले वचनों से हम लोग निर्भय एवं शोकरहित हो गये हैं। हे रघुवर ! वानर (सुग्रीव) को विजय प्रदान करने के लिए जलपूर्ण बादल के समान इस पर्वत पर चलिए।

लक्ष्मण—हे आर्य ! (जङ्गल के) स्वच्छ होने के कारण (ज्ञात होता है कि) इस वन के पास ही किष्किन्धा होनी चाहिये ।

सुग्रीव—कुमार (लक्ष्मण) ने ठीक ही कहा ।

सम्प्राप्ता हरिवरबाहुसम्प्रगुप्ता किष्किन्धा तव नृप ! बाहुसम्प्रगुप्ता ।
तिष्ठ त्वं नृवर ! करोम्यहं विसंज्ञं नादेन प्रचलमहीधरं नृलोकम् ॥७॥

रामः—भवतु, गच्छ ।

सुग्रीवः—यदाज्ञापयति देवः । (परिक्रम्य) भोः ।

अपराधमनुद्दिश्य परित्यक्तस्त्वया विभो ।
युद्धे त्वत्पादशुश्रूषां सुग्रीवः कर्तुमिच्छति ॥८॥

अन्वयः—हे नृप ! (पूर्वं) हरिवरबाहुसम्प्रगुप्ता (सम्प्रति) तव बाहुसम्प्रगुप्ता किष्किन्धा सम्प्राप्ता । हे नृवर ! त्वं तिष्ठ, अहं नादेन प्रचलमहीधरं नृलोकं (च) विसंज्ञं करोमि ।

सम्प्राप्तेति—नृप=हे राजन् ! (पूर्वम्) हरिवरबाहुसम्प्रगुप्ता= हरिवरस्य वानरश्रेष्ठस्य बाहुभ्यां भुजाभ्यां सम्प्रगुप्ता संरक्षिता, (सम्प्रति) तव=भवतः, बाहुसम्प्रगुप्ता बाहुभ्यां भुजाभ्यां सम्प्रगुप्ता संरक्षिता, किष्किन्धा =एतन्नामकनगरी, सम्प्राप्ता=आगता । नृवर=हे नरश्रेष्ठ ! त्वं=भवान्, तिष्ठ=स्थितिं विधारयतु, अहं=सुग्रीवः, नादेन=गर्जनेन, नृलोकं=नरजगत्, विसंज्ञं=चेतनारहितम्, प्रचलमहीधरं=कम्पमानपर्वतम् करोमि विदधे । अन्त्यानुप्रासालङ्कारः । प्रहर्षिणीच्छन्दः ।

अन्वयः—हे विभो ! अपराधम् अनुद्दिश्य त्वया परित्यक्तः सुग्रीवः युद्धे त्वत्पादशुश्रूषां कर्तुम् इच्छति ।

अपराधेति—विभो=हे प्रभो ! अपराधम्=दोषम्, अनुद्दिश्य=न निरूप्य, त्वया=वालिना, सुग्रीवः=अहं सुग्रीवः, युद्धे=रणे, त्वत्पादशुश्रूषां= तव पादौ चरणौ तयोः शुश्रूषां सेवाम्, कर्तुं=विधातुम्, इच्छति=वाञ्छति ।

हे राजन् ! पहले कपिराज (बाली) के बाहुओं से रक्षित (किन्तु अब) आपके भुजाओं के अधीन किष्किन्धा आ गयी । हे नृवर ! आप रुकिए । मैं गर्जन से पर्वत को प्रकम्पित तथा नरलोक को चेतनाविहीन कर रहा हूँ । ।

राम—अच्छा, जाओ ।

सुग्रीव—महाराज जैसी आज्ञा देते हैं । (घूमकर) अहा !

हे महाराज (बाली) ! बिना अपराध को बताए आपके द्वारा निकाले दिया गया यह सुग्रीव युद्ध में आपके चरणों की सेवा करना चाहता है ।

(नेपथ्ये) कथं कथं सुग्रीव इति।

(ततः प्रविशति वाली, गृहीतवस्त्रया तारया सह।)

बाली—कथं कथं सुग्रीव इति।

तारे ! विमुञ्च मम वस्त्रमनिन्दिताङ्गि !
प्रस्रस्तवक्त्रनयने ! किमसि प्रवृत्ता।
सुग्रीवमद्य समरे विनिपात्यमानं
तं पश्य शोणितपरिप्लुतसर्वगात्रम् ॥ १॥

---

अन्वय—हे अनिन्दिताङ्गि तारे ! मम वस्त्रं विमुञ्च। हे प्रस्रस्तवक्त्र-नयने ! किं प्रवृत्ता असि। अद्य समरे विनिपात्यमानं तं सुग्रीवं शोणित-परिप्लुतसर्वगात्रं पश्य।

तारे इति—अनिन्दिताङ्गि=हे मनोहराङ्गि ! तारे=हे मम पत्नी तारे ! मम वस्त्रं=मम वसनम्, विमुञ्च=त्यज। प्रस्रस्तवक्त्रनयने=हे शिथिलनेत्रे ! किं=केन कारणेन, प्रवृत्ता असि=संलग्ना असि, अद्य=अस्मिन्दिवसे, तं=पुरोवर्तमानम्, सुग्रीवं=एतन्नामकं ममानुजम्, समरे=युद्धे, विनिपात्यमानं=विनाश्यमानम्, शोणितपरिप्लुतसर्वगात्रं=शोणितेन रुधिरेण परिप्लुतं परिपूर्णं सर्वं सम्पूर्णं गात्रं शरीरं यस्य तम्, पश्य=विलोकय। वसन्ततिलकाच्छन्दः।

---

[नेपथ्य में]

क्या सुग्रीव आया है।

[तत्पश्चात् वस्त्र पकड़ी हुई तारा के साथ बाली प्रवेश करता है]

बाली—क्या सुग्रीव आया है।

हे अनिन्दिताङ्गि तारा ! मेरे वस्त्र को छोड़ो। हे उदासीन मुख और नेत्रों वाली ! क्यों मुझे (रोकने में) लगी हो। आज युद्ध में (मेरे द्वारा) मारे जाते हुए तथा रक्त से लथपथ शरीर वाले सुग्रीव को देखो ॥ १॥

**तारा**—पसीअउ पसीअउ महाराओ। अप्पेण कारणेण ण आगमिस्सइ सुग्गीओ। ता अमच्चवग्गेण सह सम्मतिअ गन्तव्वं। [प्रसीदतु प्रसीदतु महाराजः। अल्पेन कारणेन नागमिष्यति सुग्रीवः। तदमात्यवर्गेण सह सम्मन्त्र्य गन्तव्यम्।]

**बाली**—आः,

शक्रो वा भवतु गतिः शशाङ्कवक्त्रे!
शत्रोर्मे निशितपरश्वधः शिवो वा।
नालं मामभिमुखमेत्य सम्प्रहर्तुं
विष्णुर्वा विकसितपुण्डरीकनेत्र. ॥१०॥

---

अल्पेनेति—अल्पेन=लघुना, कारणेन=हेतुना, न आगमिष्यति, न आयास्यति। तत्=अत एव, अमात्यवर्गेण=मन्त्रिदलेन, समन्त्र्य=मन्त्रणा कृत्वा, गन्तव्यं=गमनीयम्।

अन्वय.—हे शशाङ्कवक्त्रे! शक्र वा निशितपरश्वध शिव वा विकसितपुण्डरीकनेत्र विष्णु वा मे शत्रो गति भवतु, अभिमुखम् एत्य मा सम्प्रहर्तुं न अलम्।

शक इति—शशाङ्कवक्त्रे=चन्द्रमुखि, शक्र वा=इन्द्र वा, निशितपरश्वध =निशितौ तीक्ष्णौ परश्वधौ परशुकुठारौ यस्य स, शिव वा=शङ्कर वा, विकसितपुण्डरीकनेत्र=प्रफुल्लितकमलनयन, विष्णु वा=नारायणं वा, मे=मम, शत्रो =अरे सुग्रीवस्य, गति =रक्षक, भवतु=जायताम्, अभिमुखं=सम्मुखम्, एत्य=आगत्य, माम्=बालीम्, सम्प्रहर्तुं=आहन्तुम्, न अलं=न समर्थ । उपमालङ्कार । प्रहर्षिणीच्छन्द ।

---

तारा—हे महाराज! प्रसन्न होइये, प्रसन्न होइये। साधारण कारण से सुग्रीव नहीं आएगा। तो मन्त्रीवर्ग से मन्त्रणा करके जाना चाहिए।

बाली—ओह!

हे शशिमुखी! मेरे शत्रु (सुग्रीव) के रक्षक इन्द्र हों अथवा हाथ में तीक्ष्ण परशु धारण करने वाले शिव हों अथवा विकसित कमल के समान नेत्रों वाले विष्णु हों, (मेरे) सामने आकर भी मुझ पर प्रहार नहीं कर सकते।

तारा—पसीअउ पसीअउ महाराओ। इमस्स जणस्स अणुग्गहं दाव करेउं अरिहदि महाराओ। [प्रसीदतु प्रसीदतु महाराजः। अस्य जनस्यानुग्रहं तावत् कर्तुमर्हति महाराजः।]

वाली—श्रूयतां मत्पराक्रमः।

तारे! मया खलु पुरामृतमन्थनेऽपि
गत्वा प्रहस्य सुरदानवदैत्यसङ्घान्।
उत्फुल्लनेत्रमुरगेन्द्रमुदग्ररूप-
माकृष्यमाणमवलोक्य सुविस्मितास्ते ॥ ११ ॥

तारा—पसीअउ पसीअउ महाराओ। [प्रसीदतु प्रसीदतु महाराज।]

---

अन्वयः—हे तारे! पुरा अमृतमन्थने अपि गत्वा सुरदानवदैत्यसङ्घान् मया आकृष्यमाणम् उत्फुल्लनेत्रम् उदग्रनेत्रम् उदग्ररूपम् उरगेन्द्रम् अवलोक्य ते सुविस्मिता खलु (जाता)।

तारे इति—तारे=हे तारे! पुरा=प्राचीनकाले, अमृतमन्थने अपि=अमृतस्य सुधायाः मन्थने मथने अपि, गत्वा=यात्वा, सुरदानवदैत्यसङ्घान्=सुराः देवाः दानवाः राक्षसाः दैत्याः दैतेयाश्च तेषां सङ्घान् समूहान्, प्रहस्य=उपहस्य, मया=वालिना, आकृष्यमाणं=धृष्यमाणम्, उत्फुल्लनेत्रं=विस्फारितनयनं, उदग्ररूपं=भयङ्कररूपम्, उरगेन्द्रं=शेषनागम्, अवलोक्य=विलोक्य, ते=सर्वे, सुविस्मिताः=आश्चर्ययुक्ताः, खलु=निश्चयेन, जाता इति शेषः। वसन्ततिलकाच्छन्दः।

---

तारा—हे महाराज प्रसन्न होइए, प्रसन्न होइए। इस व्यक्ति (मुझ) पर कृपा करनी चाहिये।

वाली—मेरा पराक्रम सुनो।

हे तारा! पहले अमृतमन्थन (के समय) पर भी जाकर देवता, राक्षस और दैत्यगणों पर हँसकर मेरे द्वारा खींचे जाते हुए शेषनाग को देखकर जिसकी आँखें फटी-सी हो रही थी और चेहरा उत्तेजित हो उठा था—वे सब बहुत चकित हो गये थे।

तारा—हे महाराज! प्रसन्न होइए, प्रसन्न होइए।

बाली—आः, मम वशानुवर्तिनी भव। प्रविश त्वमभ्यन्तरम्।
तारा—एसा गच्छामि मन्दभाआ। (निष्क्रान्ता।) [एषा गच्छामि मन्दभागा।]

बाली—हन्त प्रविष्टा तारा। यावदहं सुग्रीवं भग्नग्रीवं करोमि। (द्रुतमुपगम्य) सुग्रीव! तिष्ठ तिष्ठ।

इन्द्रो वा शरणं तेऽस्तु प्रभुर्वा मधुसूदनः।
मच्चक्षुष्पथमासाद्य सजीवो नैव यास्यसि ॥ १२ ॥

इत इत।

सुग्रीवः—यदाज्ञापयति महाराजः।

---

ममेति—वशानुवर्तिनी = ममाज्ञापालिका, अभ्यन्तरम् = रनिवासम्, प्रविश = प्रवेश कुरु।

प्रविष्टेति—प्रविष्टा = प्रवेश कृता, भग्नग्रीवं = खण्डितगलम्।

अन्वयः—इन्द्र वा प्रभु मधुसूदन वा ते शरणम् अस्तु मच्चक्षुष्पथम् आसाद्य सजीव न एव यास्यसि।

इन्द्रो वेति—इन्द्र वा = शक्र वा, प्रभु = स्वामी, मधुसूदन वा = विष्णुः वा, ते = तव सुग्रीवस्य, शरण = सरक्षक, अस्तु = भवतु, मच्चक्षुष्पथ = मम चक्षु नयन तस्य पन्थान मार्गम्, गोचरमित्यर्थ, आसाद्य = प्राप्य, सजीव = जीवित, न एव यास्यसि = नैव गमिष्यसि। अनुष्टुप् छन्द।

---

बाली—ओह! मेरी बात मानो, तुम अन्दर जाओ।

तारा—यह मैं जाती हूँ। (निकल जाती है।)

बाली—ओह! तारा अन्दर चली गयी। तो मैं सुग्रीव की गर्दन तोड़ता हूँ। (शीघ्रता से जाकर) हे सुग्रीव! रुको, रुको।

इन्द्र तुम्हारे रक्षक हों अथवा भगवान् विष्णु, मेरे आँखों के सामने आकर तुम जीवित नहीं जाओगे।

इधर से, उधर से।

सुग्रीव—जो महाराज की आज्ञा।

( उभौ नियुद्धं कुरुतः । )

रामः—एष एष वाली,

सन्दष्टोष्ठश्चण्डसंरक्तनेत्रो मुष्टिं कृत्वा गाढमुद्वृत्तदंष्ट्रः ।
गर्जन् भीमं वानरो भाति युद्धे संवर्ताग्निः सन्दिधक्षुर्यथैव ॥ १३ ॥

लक्ष्मणः—सुग्रीवमपि पश्यत्वार्यः ।

विकसितशतपत्ररक्तनेत्रः कनकमयाङ्गदनद्धपीनबाहुः ।
हरिवरमुपयाति वानरत्वाद् गुरुमभिभूय सतां विहाय वृत्तम् ॥ १४ ॥

अन्वयः—वानरः सन्दष्टोष्ठः चण्डसंरक्तनेत्रः उद्वृत्तदंष्ट्रः च मुष्टिं गाढं कृत्वा भीमं गर्जन् युद्धे (जगत्) सन्दिधक्षुः संवर्ताग्निः यथा एव भाति ।

सन्दष्टोष्ठेति—वानरः=कपिः वाली, सन्दष्टोष्ठः=सन्दष्टः दन्तैः खण्डितः ओष्ठः दन्तच्छदः येन सः, चण्डसंरक्तनेत्रः=चण्डेन क्रोधेन संरक्ते लोहिते नेत्रे नयने यस्य सः, उद्वृत्तदंष्ट्रः=उद्वृत्ता बहिर्निःसृता दंष्ट्रा=दन्तविशेषः दाढ यस्य सः, मुष्टिं=बद्धपाणिम्, गाढं=कठोरम्, कृत्वा=विधाय, भीमं=भीषणम् गर्जन्=गर्जनं विधास्यन्, युद्धे=रणे, संवर्ताग्निः यथा=प्रलयाग्निः इव, भाति=भ्राजते । उपमालङ्कारः । शालिनीच्छन्दः ।

अन्वयः—विकसितशतपत्ररक्तनेत्रः कनकमयाङ्गदनद्धपीनबाहुः वानरत्वात् सतां वृत्तं विहाय, गुरुम् अभिभूय हरिवरम् उपयाति ।

[दोनों युद्ध करते हैं ।]

राम—यह वाली,

वानर (वाली) दाँतों से ओठ काटे, क्रोध से आँख लाल किये, दाढ़ ऊपर किये (तथा) भयङ्कर रूप से गरजता हुआ युद्ध में (जगत् को) भस्म कर देने वाली प्रलय-अग्नि की तरह चमक रहा है ।

लक्ष्मण—महाराज सुग्रीव को भी देखिए,

खिले हुए कमल के समान लाल आँखों तथा सोने के बाजूबन्दों से बँधी मोटी भुजाओं वाला (वह) वानर होने के कारण सज्जनों का आचरण त्याग कर (अपने) श्रेष्ठ (भाई) का अपमान करके वानरराज (वाली) पर आक्रमण कर रहा है ।

युक्तं भो ! नरपतिधर्ममास्थितेन युद्धे मां छलयितुमक्रमेण राम !
वीरेण व्यपगतधर्मसंशयेन लोकानां छलमपनेतुमुद्यतेन ॥ १७ ॥

हन्त भो !

भवता सौम्यरूपेण यशसो भाजनेन च ।
छलेन मां प्रहरता प्ररूढमयशः कृतम् ॥ १८ ॥

भो राघव ! चीरवल्कलधारिणा वेषविपर्यस्तचित्तेन मम भ्रात्रा सह युद्धव्यग्रस्याधर्म्यः खलु प्रच्छन्नो वधः ।

---

अन्वय.—भो राम ! नरपतिधर्मम् आस्थितेन व्यपगतधर्मसंशयेन, लोकानां छलम् अपनेतुं उद्यतेन वीरेण त्वया युद्धे अक्रमेण माम् छलयितुं युक्तम् ? —

युक्तमिति—भो राम = हे राम ! नरपतिधर्मं = नृपतिकर्तव्यम्, आस्थितेन = आश्रितेन, व्यपगतधर्मसंशयेन = व्यपगत असन्दिग्ध धर्मसंशय धर्मसन्देह यस्य तेन, लोकानां = जनानाम्, छलं = कपटम्, अपनेतुम् = अपाकर्तुम्, उद्यतेन = सन्नद्धेन, वीरेण = वीरपुरुषेण, युद्धे = रणे, अक्रमेण = अन्यायेन, माम्, छलयितुं = प्रतारयितुम्, युक्तं = उचितम्, अस्तीति शेषः । प्रहर्षिणीछन्दः ।

अन्वय.—सौम्यरूपेण यशसः भाजनेन छलेन माम् प्रहरता भवता अयशः प्ररूढं कृतम् ।

भवतेति—सौम्यरूपेण = प्रियाकारेण, यशसः = कीर्तेः, भाजनेन = पात्रेण, भवता = रामेण, छलेन = कपटेन, मां = बालीम्, प्रहरता = प्रहारं कुर्वता, अयशः = अपकीर्तिः, प्ररूढ = अङ्कुरितम्, कृतं = विहितम् ।

भो राघवेति—चीरवल्कलधारिणा = चीररूपं वल्कलं वृक्षत्वक् धारयतीति तेन, वेषविपर्यस्तचित्तेन = वेषेण परिधानेन विपर्यस्त विपरीत चित्त

---

हे राम ! राजा के धर्म पर आरूढ, असन्दिग्ध धर्मज्ञान वाले, संसार का छलप्रयत्न दूर करने में संलग्न और वीर आप के द्वारा अन्याय से छलना (अन्यायपूर्वक छल से मारना) क्या उचित है ।

ओह, खेद है !

सौम्यरूप वाले तथा यश के पात्र आपके द्वारा छलपूर्वक मेरे ऊपर प्रहार करते हुए (आप) के द्वारा महान् अपयश अङ्कुरित (प्राप्त) किया गया ।

रामः—कथमधर्म्यं खलु प्रच्छन्नो वध इति ।

वाली—क संशय. ।

रामः—न खल्वेतत् । पश्य,

> वागुराच्छन्नमाश्रित्य मृगाणामिष्यते वध ।
> वध्यत्वाच्च मृगत्वाच्च भवाञ्छन्नेन दण्डित. ॥ १९ ॥

वाली—दण्ड्य इति मा भवान् मन्यते ।

रामः—क सशय ?

वाली—केन कारणेन ?

---

मन यम्य तेन, युद्धव्यग्रयस्य=युद्धे रणे व्यग्रम्य व्यासक्तस्य, अधर्म्यं=धर्म-प्रतिकूल , प्रच्छन्न =अप्रकट., वध =घात कृत ।

अन्वय.—वागुराच्छन्नम् आश्रित्य मृगाणा वध. इष्यते । वध्यमानत्वात् च मृगत्वात् च भवान् छन्नेन दण्डित ।

वागुरेति—वागुराच्छनं=वागुरा जाल च छन्न छदन च तम्, आश्रित्य =आश्रय कृत्वा, मृगाणा=पशूनाम्, वध =हननम्, इष्यते=अनुमन्यते, वध्य-त्वात्=वधार्हत्वात्, मृगत्वात् च=पशुत्वात् च, भवान्=वाली, छन्नेन=प्रच्छन्नेन मया इति शेष , दण्डित =दण्ड दत्त । काव्यलिङ्गम् अलङ्कार । अनुष्टुप्छन्द ।

---

हे राम ! चीरवल्कल धारण करने वाले (फिर भी) वेष के विपरीत हृदय वाले आपके द्वारा, भाई के साथ युद्ध मे व्यस्त मेरा छिपकर मारा जाना अधर्म है ।

राम—छिपकर मारना कैसे अधर्म है ?

वाली—क्या इसमे सन्देह है ।

राम—यह नही है, देखो,

जाल और छिपाव का आश्रय लेकर पशुओ का वध अनुमत है । वध-योग्य और पशु होने के कारण छिपे हुए मैंने आपको दण्ड दिया है ।

वाली—आप मुझको दण्डनीय मानते है ।

राम—(इसमे) क्या सन्देह है ।

वाली—किस कारण से (मुझे दण्डनीय मानते हैं ।)

**रामः**—अगम्यागमनेन ।

**वाली**—अगम्यागमनेनेति । एषोऽस्माक धर्म ।

**रामः**—ननु युक्त भो !

भवता वानरेन्द्रेण धर्माधर्मौ विजानता ।
आत्मान मृगमुद्दिश्य भ्रातृदाराभिमर्शनम् ॥ २० ॥

**वाली**—भ्रातृदाराभिमर्शनेन तुल्यदोषयोरहमेव दण्डितो, न सुग्रीव ।

---

अगम्येति—अगम्यागमनेन=अगम्या अभिगन्तुम् अयोग्या तस्या गमन सम्भोगा तेन ।

अन्वय —धर्माधर्मौ विजानता वानरेन्द्रेण मृगम् उद्दिश्य भवताभ्रातृदाराभिमर्शन युक्तम् ?

भवतेति—धर्माधर्मौ=धर्मश्च, अधर्मश्च तौ, विजानता=बुध्यमानेन, वानरेन्द्रेण=वानराणा कपीनाम् इन्द्रेण स्वामिना, भवता=त्वया बालिना, मृग=पशुम्, उद्दिश्य=कथयित्वा, भ्रातृदाराभिमर्शन=भ्रातु अनुजस्य सुग्रीवस्य दाराणा पत्न्या अभिमर्शनम् अभिगमनम्, युक्तम्=उचितम् । अनुष्टुप्छन्द ।

भ्रातृदारेति—भ्रातृदाराभिमर्शनेन=अनुजपत्न्याभिगमनेन, तुल्यदोषयो =समानापराधयो, दण्डित =दण्ड प्राप्त ।

---

राम—अगम्यागमन के कारण (तुमको दण्डनीय मानता हूँ ।)

वाली—अगम्यागमन के कारण ? यह तो हमारा धर्म है ।

राम—अरे ! क्या यह उचित है ।

धर्म और अर्थ को जानते हुए आप वानरेन्द्र के द्वारा अपने को (साधारण) मृग कहकर भाई की पत्नी को दूषित किया जाना (क्या उचित है ।)

बाली—भाई की पत्नी को दूषित करने के कारण समान अपराध वाले (मुझ तथा सुग्रीव) दोनो मे मैं ही दण्डित हुआ, सुग्रीव क्यो नही (दण्डित) भ ।

वाली—सुग्रीवेणाभिमृष्टाऽभूद् धर्मपत्नी गुरोर्मम।
तस्य दाराभिमर्शेन कथ दण्ड्योऽस्मि राघव ! ॥ २१ ॥

राम.—न त्वेव हि कदाचिज्ज्येष्ठस्य यवीयसो दाराभिमर्शनम्।

वाली—हन्त अनुत्तरं वयम्। भवता दण्डितत्वाद् विगतपापोऽहं ननु।

राम.—एवमस्तु।

सुग्रीव.—हा धिक्।

राम.—दण्डितस्त्वं हि दण्ड्यत्वाद्, अदण्ड्योऽनेव दण्डयते।

---

अन्वय.—सुग्रीवेण गुरो मम धर्मपत्नी अभिमृष्टा अभूत्, तस्य दाराभिमर्शेन हे राघव ! (अहं) कथं दण्ड्यः अस्मि।

सुग्रीवेण—सुग्रीवेण=एतन्नामकेन मत्सानुजेन, गुरो=अग्रस्य मम, धर्मपत्नी=भार्या तारा, अभिमृष्टा=अभिगता, अभूत्। तस्य=सुग्रीवस्य, दाराभिमर्शेन=पत्न्याभिगमनेन, राघव=हे राम !, कथ=कस्मात्कारणात्, दण्ड्य=दण्डनीय, अस्मि। अनुष्टुप्छन्द।

हन्तेति—अनुत्तरा=उत्तररहिता। विगतपाप=पापरहित।

---

राम—दण्डनीय होने कारण तुम (बाली) ही दण्डित हुए। दण्डनीय न होने के कारण (सुग्रीव) दण्डित नहीं हुआ।

वाली—हे राम ! सुग्रीव के द्वारा मुझ बड़े (भाई) की पत्नी दूषित की गयी। (तब) उसकी पत्नी को दूषित करने के कारण मैं ही क्यों दण्डनीय हूँ ?

राम—छोटे (भाई) के मरने में बड़े (भाई) की पत्नी इस प्रकार (दूषित) नहीं होती है।

वाली—ओह ! हम निरुत्तर हो गये। आपके द्वारा दण्डित किया गया मैं निष्पाप हो गया।

राम—ऐसा ही है।

सुग्रीव—ओह ! धिक्कार है।

करिकरसदृशौ गजेन्द्रगामि-
स्तव रिपुशस्त्रपरिक्षताङ्गदौ च।
अवनितलगतौ समीक्ष्य बाहू
हरिवर ! हा पततीव मेऽद्य चित्तम् ॥ २२ ॥

वाली—सुग्रीव ! अलमलं विषादेन। ईदृशो लोकधर्मः।

(नेपथ्ये)

हा हा महाराओ।

वाली—सुग्रीव ! सवार्यतां सवार्यतां स्त्रीजनः। एवंगतं नार्हति मां द्रष्टुम्।

---

अन्वय —हे गजेन्द्रगामिन् ! हरिवर ! तव करिकरसदृशौ रिपुशस्त्रपरिक्षताङ्गदौ अवनितलगतौ च बाहू समीक्ष्य हा ! मे चित्तम् अद्य पतति इव।

करिकरेति—हे गजेन्द्रगामिन्=हे गजेन्द्रगामिन् ! हरिवर=कपिराज ! करिकरसदृशौ=करिणः हस्तिनः करः शुण्डः तेन सदृशौ समानौ रिपुशस्त्रपरिक्षताङ्गदौ=रिपोः शत्रोः शस्त्रेण आयुधेन परिक्षते भग्ने अङ्गदे केयूरे ययोः तौ, अवनितलगतौ=अवन्याः पृथिव्याः तलम् अधः गतौ प्राप्तौ, तव=भवतः, बाहू=भुजौ, समीक्ष्य=विलोक्य, हा=खेदे, मे=मम सुग्रीवस्य, चित्तं=मनः, पतति=स्रंसते। उत्प्रेक्षालङ्कारः। पुष्पिताग्राच्छन्दः।

सुग्रीवेति—सवार्यतां=निरुद्ध्यताम्, स्त्रीजनः=नारीलोकः एवं गतम्=एतां दशां प्राप्तम् द्रष्टुं=विलोकयितुम् न अर्हति=समर्थः नास्ति।

---

हे गजराज के समान गति वाले कपिराज (वाली) ! हाथी की सूंड के समान, शत्रु के शस्त्र से टूट गये बाजूबन्दों वाली तथा भूतल पर पडी हुई भुजाओं को देखकर मेरा मन आज मानो बैठा जा रहा है।

वाली—हे सुग्रीव ! विषाद करना व्यर्थ है। यह तो संसार का नियम है।

[नेपथ्य में]

हाय ! हाय ! महाराज !

वाली—हे सुग्रीव ! स्त्रियों को रोको, रोको। ऐसी अवस्था में पडे हुए (मे) देख नही सकती।

सुग्रीवः—यदाज्ञापयति महाराजः। हनूमन्! एवं क्रियताम्।
हनूमान्—यदाज्ञापयति कुमार। (निष्क्रान्तः)
(ततः प्रविशत्यङ्गदो हनूमांश्च)
हनूमान्—अङ्गद! इत इतः।
अङ्गदः—

श्रुत्वा कालवशं यान्तं हरिमृक्षगणेश्वरम्।
समापतितसन्तापः प्रयामि शिथिलक्रमः॥ २३॥

हनूमन्! क्व महाराजः।
हनूमान्—एष महाराजः,

---

अन्वयः—ऋक्षगणेश्वरं हरिं कालवशं यान्तं श्रुत्वा समापतितसन्तापः (अहं) शिथिलक्रमः प्रयामि।

श्रुत्वेति—ऋक्षगणेश्वरम्=ऋक्षाणां भल्लूकानां गणस्य समूहस्य ईश्वरं स्वामिनम्, हरिं=वानरं वालीमित्यर्थः, कालवशं=कालस्य मृत्योः वशम् अधीनताम्, यान्तं=गच्छन्तम्, श्रुत्वा=आकर्ण्य, समापतितसन्तापः=समापतितः समागतः सन्तापः शोकः यस्मिन् सः, शिथिलक्रमः=शिथिलः मन्दः क्रमः पादप्रक्षेपः यस्य सः, प्रयामि=गच्छामि। काव्यलिङ्गमलङ्कारः। अनुष्टुप् छन्दः।

---

सुग्रीव—महाराज जो आज्ञा देते हैं। हे हनुमान्! ऐसा करो।

हनुमान्—कुमार जो आज्ञा देते है। (निकल जाता है)।

(तत्पश्चात् अङ्गद और हनुमान् प्रवेश करते हैं)

हनुमान्—हे अङ्गद! इधर से, इधर से (आइए)।

अङ्गद—वानरगण और ऋक्षगण के स्वामी (वाली) का यमपुर में जाना (मृत्यु को प्राप्त होना) सुनकर खिन्न (और) शिथिल अङ्गो वाला मैं चल रहा हूँ।

हे हनुमान्! महाराज कहाँ है?

हनुमान्—ये महाराज है—

क्षन्तुमर्हसि ।

रामः—बाढम् ।

बाली—सुग्रीव ! प्रतिगृह्यतामस्मत्कुलधन हेममाला ।

सुग्रीवः—अनुगृहीतोऽस्मि । (प्रतिगृह्णाति)

बाली—हनूमन् ! आपस्तावन् ।

हनूमान्—यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) इमा आप ।

बाली—(आचम्य) परित्यजन्तीव मा प्राणा. । इमा गङ्गाप्रभृतयो महानद्य एता उर्वश्यादयोऽप्सरसो मामभिगता. । एप सहस्रहसप्रयुक्तो वीरवाही विमान. कालेन प्रेषितो मा नेतुमागत. । अयमयमागच्छामि । ( स्वर्याति ) ।

---

=वानराणा कपीना चापल चाञ्चल्यम्, क्षन्तु =मर्पयितुम्, अर्हसि= योग्योऽसि । बाढम्=स्वीकारे । प्रतिगृह्यता =स्वीक्रियताम्, अस्मत्कुलधन =अस्माक कुलस्य वंशस्य धनं सम्पत्ति. , हेममाला=हेम्न सुवर्णस्य माला हार । अनुगृहीत =उपकृत । आप =अलम् ।

परित्यजेति—मा =वालिम्, प्राणा =प्राणवायव , परित्यजतीव =

---

सुग्रीव) की बानर चपलता को क्षमा कीजिएगा ।

राम—ठीक है ।

वाली—हे सुग्रीव ! हमारे कुल की सम्पत्ति (इस) सुवर्ण की माला को ग्रहण करो ।

सुग्रीव—मैं अनुगृहीत हूँ ।

वाली—हे हनुमान् ! पानी लाओ ।

हनुमान्—जो महाराज की आज्ञा ! (निकल कर प्रवेश करके) यह पानी है ।

वाली—(आचमन करके) मेरे प्राण मुझे छोड़ रहे हैं । ये गङ्गा इत्यादि नदियाँ, उर्वशी इत्यादि अप्सराएँ मुझे लेने आ रही हैं । यह हजार हंसों वाला वीरवाही (नामक) यमराज द्वारा भेजा गया विमान मुझे लेने के लिए आ गया है । अच्छा, यह मैं आ रहा हूँ ।(स्वर्ग चला गया)

सर्व—हा हा महाराज ! ।
राम—हन्त स्वर्गं गतो वाली । सुग्रीव ! क्रियतामस्य सस्कार ।
सुग्रीव—यदाज्ञापयति देव. ।
राम:—लक्ष्मण ! सुग्रीवस्याभिषेक: कल्प्यताम् !
लक्ष्मणः—यदाज्ञापयत्यार्य. !

(निष्क्रान्ता सर्वे)

प्रथमोऽङ्कः

—०—

---

उज्ज्वलन्ति इव । अभिगता=प्रत्यायाता । महस्त्रहसप्रयुक्त =महत्त्वमस्पर्श इमं पक्षिविशेषं प्रयुक्त आकृष्ट, विमान =यानम्, कान्त=गमन, प्रेषित = प्रेरित । आगच्छामि=आयामि ।

सस्कार =अन्त्येष्टि । अभिषेक =राज्याभिषेक , कल्प्यता= क्रियताम् ।

॥ इति प्रथमोऽङ्कः ॥

—०—

---

सभी—हाय, हाय महाराज ।
राम—हाय, वाली स्वर्ग चला गया । हे सुग्रीव इसका सत्कार करो ।
सुग्रीव—जो महाराज की आज्ञा ।
राम—हे लक्ष्मण ! सुग्रीव के अभिषेक की तैयारी करो ।
लक्ष्मण—जो आप की आज्ञा ।

(सभी निकल जाते हैं)

॥ प्रथम अङ्क समाप्त ॥

—०—

अहो व्यर्थो मे परिश्रम । भवतु, एतद्धर्म्याग्रमारुह्यावलोकयामि। (तथा कृत्वा) अये अय प्रमदवनराशि । इम प्रविश्य परीक्षिष्ये। (प्रविश्यावलोक्य) अहो प्रमदवनसमृद्धि इह हि,

कनकरचितविद्रुमेन्द्रनीलैर्विकृतमहाद्रुमपङ्क्तिचित्रदेशा ।

---

भवनप्रासादहर्म्येषु पानागारनिशान्तदेशविवरेषु च अह बहुश आक्रान्तवान् अस्मि । भो सर्व विचितम् च, नृपते पत्नी न एव मया दृश्यते ।

गर्भागारेति—गर्भागारविनिष्कुटेषु= गर्भस्य अन्तरस्य, आगाराणि गृहाणि च विनिष्कुटेषु उद्यानेषु, शालाविमानादिषु=शाला गृहाणि विमानानि आदि येषा तेषु, स्नानागारनिशाचरेन्द्रभवनप्रासादहर्म्येषु=स्नानागाराणि स्नानगृहाणि निशाचरेन्द्रस्य राक्षसेन्द्रस्य रावणस्य भवनानि गृहाणि प्रसादा आट्टालिकानि हर्म्याणि राजगृहाणि च तेषु, पानागारनिशान्तदेशविविरेषु च=पानागाराणि मधुशाला निशान्ता नि शब्दा देशविवराणि सुरङ्गानि तेषु च, अह=हनूमान्, बहुश =बहुप्रकारेण, आक्रान्तवान् अस्मि= समन्तात् भ्रमन् अस्मि । भो=अरे ! सर्व=सम्पूर्णम्, स्थानमितिशेष , विचित =अन्विष्टम्, नृपते = राज्ञ रामस्य, पत्नी=दारा सीता, न एव=नहि एव, मया=हनुमता, दृश्यते=विलोक्यते । शार्दुलविक्रीडित छन्द ।

अहो इति—व्यर्थ =प्रयोजनरहित , परिश्रम =श्रम , एतत् पुरोवर्तमान, हर्म्याग्रम्=राजभवनशिखरम् आरुह्य=ऊर्ध्वं गत्वा, अवलोकयामि=विलो कयामि । प्रमदवनराशि =विलासोद्यानपक्ति । परीक्षिष्ये=निरीक्षण करिष्ये , प्रमदवनसमृद्धि =विलासोद्यानसम्पन्नता ।

अन्वय —कनकरचितविद्रुमेन्द्रनीलै विकृतमहाद्रुमपक्तिचित्रदेशा रुचिर

---

ओह ! मेरा परिश्रम व्यर्थ हो गया । अच्छा, इस महल पर चढकर देखता हूँ । (वैसा करके) अरे ! यह तो प्रमदवन है । इसमे प्रवेश करके खोजता हूँ । (प्रवेश करके देखकर) अहा ! प्रमदवन की रमणीयता (कैसी) अद्भुत है) । क्योकि यहाँ—

स्वर्ण खचित मूँगे ( प्रवाल ) तथा इन्द्रनील से बना हुआ, विचित्र ।र बडे बडे वृक्षो की पक्तियो से रङ्ग विरङ्गा स्थान यह चमकीले पर्वतो

रुचिरतरनगा विभाति शुभ्रा नभसि सुरेन्द्रविहारभूमिकल्पा ॥५॥

अपि च—

> चित्रप्रस्नुतहेमधातुरुचिराः शैलाश्च दृष्टा मया
> नानावारिचराण्डजैर्विरचिता दृष्टा मया दीर्घिका ।
> नित्यं पुष्पफलाढ्यपादपयुता देशाश्च दृष्टा मया
> सर्वं दृष्टमिदं हि रावणगृहे सीता न दृष्टा मया ॥ ६॥

---

तरनगा शुभ्रा नभसि सुरेन्द्रविहारभूमिकल्पा विभाति ।

कनकरचितेति—कनकरचितविद्रुमेन्द्रनीलैः=कनकरचिता सुवर्णरचिता विद्रुमा प्रवालाः इन्द्रनीलाः च नीलकान्तमणयः च तैः, विवृतमहाद्रुमपङ्क्तिचित्रदेशा=विवृता परिवर्तनं प्राप्ता ये महान्तः विशालाः द्रुमाः वृक्षाः तेषां पङ्क्तिभिः श्रेणिभिः चित्राः कर्बुराः देशाः स्थानानि यस्याः सा, रुचिरतरनगा=रुचिरतराः देदीप्यमानाः नगाः पर्वताः यस्याः सा, शुभ्रा=उज्ज्वला, नभसि=आकाशे, सुरेन्द्रविहारभूमिकल्पा=इन्द्रविहारभूमिसदृशा, विभाति=शोभते ।

अन्वयः—मया चित्रप्रस्नुतहेमधातुरुचिराः शैलाः च दृष्टाः, मया नानावारिचराण्डजैः विरचिताः दीर्घिकाः, मया नित्यं पुष्पफलाढ्यपादपयुताः देशाः च दृष्टाः । इदं सर्वं हि दृष्टं (किन्तु) मया रावणगृहे सीता न दृष्टा ।

चित्रप्रस्नुतेति—मया=हनुमता, चित्रप्रस्नुतहेमधातुरुचिराः=चित्राः विचित्राः प्रस्नुताः प्रस्यन्दिताः ये हेम्नः सुवर्णस्य धातुः खनिजः तेन रुचिराः

---

से युक्त तथा उज्ज्वल बनी हुई ऐसी शोभायमान है जैसे आकाश में इन्द्र की विहार भूमि (जगमगाती है) ।

और भी—

मेरे द्वारा नाना प्रकार के तथा रिसे हुए सुवर्ण धातु से चमकीले पर्वत देख लिए गए । अनेक प्रकार के जलचर-जीवों और पक्षियों से शोभायमान बावलियाँ देख ली गयीं । मेरे द्वारा सर्वदा पुष्पों और फलों से सम्पन्न वृक्षों वाले स्थान भी देख लिये गये । यह सब कुछ (मेरे द्वारा) देख लिया गया किन्तु रावण के घर में मेरे द्वारा सीता नहीं देखी गयी ।

किमिदानीं करिष्यते। भवतु, दृष्टम्। एनमशोकपादपमारुह्य कोटरान्तरितो भूत्वा दृढं वृत्तान्तं ज्ञास्यामि। (तथा करोति।)

(ततः प्रविशति रावणः सपरिवारः।)

रावणः—

दिव्यास्त्रैः सुरदैत्यदानवचमूविद्रावणं रावणं
युद्धे क्रुद्धसुरेभदन्तकुलिशव्यालीढवक्षःस्थलम्।
सीता मामविवेकिनी न रमते सक्ता च मुग्धेक्षणा
क्षुद्रे क्षत्रियतापसे ध्रुवमहो दैवस्य विघ्नक्रिया ॥१०॥

मणिविरचितेति—मणिविरचितमौलिः = मणिविरचितः रत्नरचितः मौलिः मुकुटं यस्य सः, चारुताम्रायताक्षी = चारूणि मनोहराणि च ताम्राणि रक्तवर्णानि च आयतानि विशालानि च अक्षीणि नयनानि यस्य सः, मदललितगामी = मदेन गर्वेण ललितं सविलासं यथा स्यात्तथा गच्छतीति गामी, मत्तमातङ्गलीलः = मत्तः मदोत्कटः यः मातङ्गः गजः तद्वत् लीला क्रीडा यस्य सः, युवतिजननिकाये = स्त्रीवर्गसमूहे, चेष्टमानः = चेष्टां कुर्वन्, असौ = पुरोवर्तमानः, राक्षसेशः = राक्षसेन्द्रः रावणः, हरिणीनां = मृगीणाम्, अन्तरे = मध्ये, हरिः इव = सिंह इव, भाति = शोभते। उपमालङ्कारः। मालिनीच्छन्दः।

किमिति—अशोकपादपं = अशोकवृक्षम्, आरुह्य = आरोहं कृत्वा, कोटरान्तरितः = कोटरेण क्रोडेन अन्तरितः व्यवहितः, दृढं = निश्चयपूर्वकम् वृत्तान्तं = समाचारम्, ज्ञास्यामि = उपलप्स्ये।

अन्वयः—अविवेकिनी मुग्धा सीता दिव्यास्त्रैः सुरदैत्यदानवचमूविद्रावणं

---

अब क्या करूँ। अच्छा! (उपाय) समझ गया। इस अशोक के पेड़ पर चढ़ कर कोटर में छिप कर सभी समाचार को मालूम करूँगा।

( तत्पश्चात् सपरिवार रावण प्रवेश करता है )

रावण—दिव्य अस्त्रों द्वारा देवता तथा राक्षसों की सेना को खदेड़ देने वाले तथा युद्ध में क्रोधित ऐरावत के दन्तरूपी वज्र से क्षत हुए वक्षःस्थल वाले मुझ (रावण) पर भोली भाली नादान सीता अनुरक्त होकर रमण नहीं करती, क्षुद्र क्षत्रिय—तपस्वी पर अनुराग करती है, निश्चय ही (मेरे) दुर्भाग्य का यह विघ्न-कार्य है।

(ऊर्ध्वमवलोक्य) एष एष चन्द्रमा,
रजतरचितदर्पणप्रकाशः करनिकरैर्हृदयं ममाभिपीड्य ।
उदयति गगने विजृम्भमाणः कुमुदवनप्रियबान्धवः शशाङ्कः ॥११॥

---

युद्धे क्रुद्धसुरेभदन्तकुलिशाव्यालीढवक्षःस्थलं मां न रमते, क्षुद्रे क्षत्रियतापसे च मक्ता ।

दिव्यास्त्रैः इति—अविवेकिनी=मूढा, मुग्धा=मनोहरा, सीता=जानकी, दिव्यास्त्रैः=दिव्यायुधैः सुरदैत्यदानवचमूविद्रावण=सुरा देवा दैत्याश्च दानवाः राक्षसाश्च तेषां चमूना सेनानां विद्रावणम् अपकर्त्तारम् युद्धे=रणे, क्रुद्धसुरेभदन्तकुलिशव्यालीढवक्षःस्थलम्=क्रुद्धाः कुपिता ये सुराणां देवानां इभाः गजाः तेषां दन्ताः दशनाः कुलिशा वज्रा इव तैः व्यालीढम् आस्वादितम् वक्षःस्थलम् उरःस्थलं यस्य तम्, मां रावणम्, न रमते=न रमयति, क्षुद्रे=तुच्छे, क्षत्रियतापसे=क्षत्रियश्चासौ तापसः तपस्वी तस्मिन्, च, मक्ता=अनुरक्ता, अस्तीति शेषः, अहो=आश्चर्यम्, ध्रुवम्=निश्चयेन, दैवस्य=भाग्यस्य, विघ्नक्रिया=बाधनम् । उपमालङ्कारः । शार्दूलविक्रीडितं छन्दः ।

अन्वयः—रजतरचितदर्पणप्रकाशः कुमुदवनप्रियबान्धवः शशाङ्कः गगने विजृम्भमाणः करनिकरैः मम हृदयम् अभिपीड्य उदयति ।

रजतेति—रजतरचितदर्पणप्रकाशः=रजतेन रौप्येन रचितः निर्मितः यः दर्पणः मुकुरः तस्य इव प्रकाशः आलोकः यस्य सः, कुमुदवनप्रियबान्धवः=कुमुदानां कैरवाणां यत् वनं समूहः तस्य प्रियबान्धवः स्नेहीबान्धवः शशाङ्कः चन्द्रः, गगने=आकाशे, विजृम्भमाणः=प्रसरन्, करनिकरैः=रश्मिसमूहैः, मम=रावणस्य, हृदयम्=अन्तःस्थलम्, अभिपीड्य=सन्ताप्य,उदयति=उदेति । उपमालङ्कारः । पुष्पिताग्राच्छन्दः ।

---

(ऊपर देखकर) यह, यह चन्द्रमा—

चाँदी से निर्मित दर्पण के प्रकाश के समान प्रकाश वाला, अपने सामर्थ्य को प्रदर्शित करता हुआ, कुमुद-समूह का प्रियबन्धु, (यह) चन्द्रमा अपने किरणों से मुझ (रावण) के हृदय को (काम से) पीडित करता हुआ आकाश में उदित हो रहा है ।

**सीता**—हस्सी खु रावणओ, जो वअणगदसिद्धिं वि ण जाणादि।
[हास्य खलु रावणक, यो वचनगतसिद्धिमपि न जानाति।]

**हनूमान्**—(सक्रोधम्) अहो रावणस्यावलेप।

तौ च बाहू न विज्ञाय तच्चापि सुमहद्धनु।
सायकं चापि रामस्य गतायुरिति भाषते॥ १५॥

न शक्नोमि रोषं धारयितुम्। भवतु अहमेवार्यरामस्य कार्यं साधयामि। अथवा,

---

हास्य इति—रावणक=कुत्सित रावण, खलु=निश्चयेन, हास्य=हसनीय, वचनगतसिद्धि=वचने कथने गता स्थिता सिद्धि निष्पत्ति ताम्, न जानाति=न वेत्ति।

अहो इति—अवलेप=अभिमान।

अन्वय—रामस्य तौ च बाहू तत् च अपि सुमहत् धनु सायकं च अपि न विज्ञाय गतायु इति भाषते।

तौ चेति—रामस्य=राघवस्य, तौ=प्रसिद्धौ बाहू=भुजौ, तत्=प्रसिद्धम्, च अपि, सुमहत्=सुविशालम् धनु=चापम् सायक=बाणम्, च अपि, न विज्ञाय=न ज्ञात्वा, इति=एवं प्रकारेण भाषते=कथयति। अनुष्टुपच्छन्द।

न शक्नोमीति—शक्नोमि=समर्थोऽस्मि, रोष=क्रोधम्, धारयितु=धारण कर्तुम्। कार्य=रावणवधरूप अनुष्ठानम्, साधयामि=करोमि।

---

सीता—निश्चित ही नीच रावण उपहास (हँसी) के योग्य है जो बोलने का ढंग भी नहीं जानता है।

हनुमान्—(क्रोध के साथ) ओह! (यह) रावण का अभिमान है!

(यह रावण) राम के उन हाथों को (उनके) उस विशाल धनुष को तथा बाण को बिना जाने ही (राम का) समाप्त आयु वाला कह रहा है।

मैं (अपने) क्रोध को धारण करने (रोकने) में समर्थ नहीं हूँ। अच्छा, राम का कार्य कर दे रहा हूँ। अथवा—

यद्यहं रावणं हन्मि कार्यसिद्धिर्भविष्यति ।
यदि मां प्रहरेद् रक्षो महत् कार्यं विपद्यते ॥ १६ ॥

रावणः—
वरतनु ! तनुगात्रि ! कान्तनेत्रे ! कुवलयदामनिभां विमुच्य वेणीम् ।
बहुविधमणिरत्नभूषिताङ्गं दशशिरसं मनसा भजस्व देवि ! ॥१७॥

अन्वयः—यदि अहं रावणं हन्मि कार्यसिद्धिः भविष्यति, यदि रक्षः मां प्रहरेद्, महत् कार्यं विपद्यते ।

यद्यहमिति—यदि=चेत्, अहं=हनुमान्, रावणं=दशाननम्, हन्मि=मारयामि, कार्यसिद्धिः=कार्यस्य रावणवधरूपस्यानुष्ठानस्य सिद्धिः निष्पत्तिः, भविष्यति, यदि=चेत्, रक्षः=राक्षसः रावणः, मां, प्रहरेत्,=मारयेद्, महत्=विपुलम्, कार्यं=रामस्य सीताप्रत्यानयनरूपमनुष्ठानम्, विपद्यते=निष्फलीभवति । अनुष्टुप्छन्दः ।

अन्वयः—हे वरतनु ! तनुगात्रि ! कान्तनेत्रे ! कुवलयदामनिभां वेणीं विमुच्य हे देवि ! बहुविधमणिरत्नभूषिताङ्गं दशशिरसं मनसा भजस्व ।

वरतन्विति—वरतनु=हे सुन्दरि, तनुगात्रि=हे कृशाङ्गि ! कान्तनेत्रे=हे सुनयने ! देवि=हे सीते ! कुवलयदामनिभां=कुवलयानां नीलकमलानां यद् दाम माल्यं तन्निभां=तत्सदृशाम् वेणीं=कबरीम्, विमुच्य=विहाय, बहुविधमणिरत्नभूषिताङ्गं=बहवः अनेकाः विधाः प्रकाराः येषां तानि यानि मणिरत्नानि बहुमूल्याः पाषाणविशेषाः तैः भूषितानि सुशोभितानि अङ्गानि गात्राणि यस्य तम्, दशशिरसं=दशाननं मां रावणम्, मनसा=चित्तेन, भजस्व=स्वीकुरु । उपमालङ्कारः । पुष्पिताग्राछन्दः ।

यदि मैं रावण को मार दूँगा (तो सीता प्राप्तिरूपी) कार्य सिद्ध (पूरा) हो जाएगा । यदि राक्षस (रावण) मुझे मार देगा (तो सीता प्राप्ति रूपी) कार्य नष्ट हो जाएगा ।

रावण—हे सुन्दरी ! हे कृशाङ्गी ! हे सुनयने देवि (सीते) ! नीलकमल की माला के समान (इस) वेणी को छोड़कर अनेक प्रकार के मणियों तथा रत्नों से भूषित शरीर वाले (इस) दशानन (रावण) को मन से स्वीकार करो ।

**सीता**—ह विपरीओ खु धम्मो, ज जीवदि खु अअ पापरक्खसो ।
[ह, विपरीत खलु धर्म, यद् जीवति खल्वय पापराक्षस ।]

**रावणः**—ननु देवि !

**सीता**—सत्तो सि । [शप्तोऽसि]

**रावण**—हहह, अहो पतिव्रतायास्तेज !

देवा सेन्द्रादयो भग्ना दानवाश्च मया रणे ।
सोऽह मोह गतोऽस्म्यद्य सीतायास्त्रिभिरक्षरै ॥ १८ ॥

(नेपथ्ये)

---

हमिति—ह=खेदे ! विपरीत =विरुद्ध, पापराक्षस =पाप पापयुक्त चासौ राक्षस निशिचर, रावण इत्यर्थ ।

अन्वय —सेन्द्रादय देवा दानवा च मया रणे भग्ना । स अहम् अद्य सीताया त्रिभि अक्षरै मोह गत अस्मि ।

देवा इति—सेन्द्रादय =इन्द्रादिभि सह, देवा =सुरा, दानवा =दैत्याश्च, मया=रावणेन, रणे=युद्धे, भग्ना =पराजिता, स =प्रसिद्ध, अह=रावण, अद्य=अस्मिन्दिवसे, सीताया =जानक्या, त्रिभि =त्रिसङ्ख्यकै, अक्षरै =वर्णै, 'शप्तोसि' इत्यात्मकै, मोह=मुग्धताम्, गत =प्राप्त, अस्मि । अनुष्टुप्छन्द ।

---

सीता—ओह ! धर्म भी बडा उल्टा है, जो पापी राक्षस (अभी) जी रहा है ।

रावण—हे देवि !

सीता—(मेरे द्वारा) शाप दे दिये जाओगे ।

रावण—ओह ! पतिव्रता का तेज (आश्चर्यजनक) है ।

सम्पूर्ण इन्द्र इत्यादि देवता तथा राक्षस मेरे द्वारा युद्ध मे पराजित कर दिये गये, वही मैं आज सीता के (शप्तोऽसि—इन) तीन अक्षरो के द्वारा मुग्ध हो रहा हूँ ।

[नेपथ्य मे]

जयतु देव । जयतु लङ्केश्वर । जयतु स्वामी । जयतु महाराज। दश नाडिका पूर्णा । अतिक्रामति स्नानवेला । इत इतो महाराज ।

(निष्क्रान्ता सपरिवारो रावण)

हनूमान्—हन्त निर्गतो रावण, सुप्ताश्च राक्षसस्त्रिय । अय कालो देवीमुपसर्पितुम् । (कोटरादवरुह्य) जयत्वविधवा ।

प्रेषितोऽहं नरेन्द्रेण रामेण विदितात्मना ।
त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा ॥ १९ ॥

---

जयत्विति—लङ्केश्वर = लङ्केश रावण, नाडिका = घटिका, पूर्णा = समाप्ता, स्नानवेला = स्नानसमय, अतिक्रामति = अत्येति ।

हन्तेति—हन्त = खेदे । निर्गत = निर्यात, सुप्ता = शयिता, राक्षसस्त्रिय = राक्षसानामसुराणा स्त्रिय नार्य, अयम् = एव, काल = समय, देवी = सीताम्, उपसर्पितु = उपयातुम् अविधवा = सौभाग्यवती ।

अन्वय —विदितात्मना त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा नरेन्द्रेण रामेण अह प्रेषित ।

प्रेषित इति—विदितात्मना = ज्ञातधृति, त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा = त्वयि सीताया गत स्थित य स्नेह प्रणय तस्माद् य सन्ताप, दु ख तेन विक्लवीकृत विह्वलीकृत चेत मन यस्य तेन, नरेन्द्रेण = राज्ञा रामेण = राघवेण प्रेषित अस्मि = प्रहित अस्मि । अनुष्टुप्छन्द ।

---

देव विजयी होवे, लङ्केश्वर विजयी होवे, स्वामी विजयी होवे, महाराज विजयी होवे । दस बज गया । स्नान का समय बीत रहा है । महाराज इधर, इधर से (चलिए) ।

( सपरिवार रावण निकल जाता है )

हनुमान्—अरे ! रावण निकल गया और राक्षसों की स्त्रियाँ सो गयी । देवी (सीता) के समीप चलने का यह (उचित) समय है । (कोटर से उतर कर) सुहागिनी (आप) की जय हो ।

आप (सीता) में स्नेह के सन्ताप से व्याकुल हृदय वाले आत्मज्ञ राजा राम के द्वारा मैं भेजा गया हूँ ।

सीता—(आत्मगतम्) को णु खु अअं, पापरक्खो अय्यउत्तकेरओत्ति अत्ताणं ववदिसिअ वाणररूवेण मं वञ्चिदुकामो भवे। भोदु, तुह्णिआ भविस्सं। [को नु खल्वयं, पापराक्षस आर्यपुत्रसम्बन्धीत्यात्मानं व्यपदिश्य वानररूपेण मां वञ्चयितुकामो भवेत्। भवतु, तूष्णीका भविष्यामि।]

हनूमान्—कथं न प्रत्येति भवती। अलमन्यशङ्कया। श्रोतुमर्हति भवती।

इक्ष्वाकुकुलदीपेन सन्धाय हरिणा त्वहम्।
प्रेषितस्त्वद्विचित्यर्थं हनुमान् नाम वानरः॥ २०॥

---

कोन्विति—पापराक्षस = पाप पापयुक्त राक्षस निशाचर, आर्यपुत्रसम्बन्धी = आर्यपुत्रस्य प्राणनाथस्य सम्बन्धी सम्बन्धवान्, आत्मानं = स्वम् व्यपदिश्य = कथयित्वा, वञ्चयितुकाम = वञ्चयितुं प्रतारयितुं कामः अभिलाषः यस्य स। तूष्णीका = शान्ता।

कथमिति—प्रत्येति = विश्वसिति। अन्यशङ्कया = अन्यथा चिन्तया।

अन्वयः—इक्ष्वाकुकुलदीपेन सन्धाय हरिणा त्वद्विचित्यर्थम् अहं हनुमान् नाम वानरः प्रेषितः।

इक्ष्वाकुकुलेति—इक्ष्वाकुलदीपेन = रघुवंशश्रेष्ठेन रामेण, सन्धाय = सन्धिं कृत्वा, हरिणा = वानरेण सुग्रीवेण, त्वद्विचित्यर्थं = तव ते सीतायाः विचितिः अन्वेषणं तस्मै, अहं = हनुमान्, हनुमान् = पवनतनयः, नाम, वानरः = कपिः, प्रेषितः = प्रहितः। उपमालङ्कारः। अनुष्टुप्छन्दः।

---

सीता—(अपने मन में) यह कौन है? यह कोई पापी राक्षस (अपने को) आर्यपुत्र (राम) का सम्बन्धी बतला कर वानर के रूप से मुझे छलना चाहता है। ठीक है, चुपचाप रहूँगी।

हनुमान्—आप विश्वास क्यों नहीं करती हैं। अन्यथा सोचना व्यर्थ है। आप सुनिए—

वानरों से सन्धि करके आप की खोज करने के लिए इक्ष्वाकुवंश के दीपक (राम) के द्वारा भेजा गया मैं हनुमान् नामक नामक वानर हूँ।

सीता—(आत्मगतम्) जो वा को वा भोदु। अय्यउत्तणामसङ्कित्तणेण अहं एदेण अभिभासिस्सं। (प्रकाशम्) भद्द! वुत्तन्तो अय्यउत्तस्स?
(यो वा को वा भवतु। आर्यपुत्र नामसङ्कीर्तनेनाहमेतेनाभिभाषिष्ये। भद्र! को वृत्तान्त आर्यपुत्रस्य?)

हनूमान्—भवति! श्रूयताम्,

अनशनपरितप्तं पाण्डु स क्षामवक्त्रं
तव वरगुणचिन्तावीतलावण्यलीलम्।
वहति विगतधैर्यं ह्रीयमानं शरीरं
मनसिजशरदग्धं वाष्पपर्याकुलाक्षम् ॥ २१ ॥

---

यो वेति—आर्यपुत्रनामसङ्कीर्तनेन=आर्यपुत्रस्य प्राणनाथस्य नाम्नः नामधेयस्य सङ्कीर्तनेन उच्चारणेन, अहं=सीता, एतेन=पुरोवर्तमानेन हनूमता, अभिभाषिष्ये=आलपिष्यामि। वृत्तान्तः=समाचारः।

भवतीति—श्रूयताम्=आकर्ण्यताम्।

अन्वयः—स अनशनपरितप्तं पाण्डु क्षामवक्त्रं तव वरगुणचिन्तावीतलावण्यलीलं मनसिजशरदग्धं विगतधैर्यं वाष्पपर्याकुलाक्षं ह्रीयमानं शरीरं वहति।

अनशनेति—सः=रामः, अनशनपरितप्तम्=अनशनेन अनाहारेण परितप्तं पीडितम्, पाण्डु=पीतवर्णम्, क्षामवक्त्रम्=शुष्कमुखम्, तव=सीतायाः, वरगुणचिन्तावीतलावण्यलीलम्=वरगुणाः श्रेष्ठगुणाः तेषां चिन्तया चिन्तनेन, वीतलावण्यलीलं नष्टसौन्दर्यविलासम्, मनसिजशरदग्धम्=कामबाणपीडितम्, विगतधैर्यम्=धैर्यरहितम्, वाष्पपर्याकुलाक्षम्=

---

सीता—(अपने मन में) जो कोई भी हो। आर्यपुत्र का नाम लेने के कारण इससे बातें करूँगी। (प्रकट रूप में) हे भद्र! आर्यपुत्र का क्या समाचार है।

हनुमान्—हे देवि! सुनिए—

वे राम अनाहार के कारण सन्तप्त, पीत वर्ण वाले, सूखे हुए मुख वाले, आप के श्रेष्ठ गुणों का चिन्तन करने के कारण सौन्दर्य और विलास से रहित, कामदेव के बाणों से जले हुए धैर्य-रहित, अश्रु पूर्ण आँखों वाले.. दुर्बल शरीर को धारण कर रहे हैं।

**सीता**—(आत्मगतम्) हद्धि वीलिआ खु म्हि मन्दभाआ एव सो- अन्त अय्यउत्त सुणिअ । अय्यउत्तस्स विरहपरिस्सम वि मे सफलो स- वुत्तो त्ति पेक्खामि, जदि खु अअ वाणरो सच्च मन्तेदि । अय्यउत्तस्स इमस्सि जणे अणु क्कोस परिस्सम च सुणिअ सुहस्स दुक्खस्स अ अन्तरे डोलाअदि विअ मे हिअअ । (प्रकाशम्) भद्द ! कह तुम्मेहि अय्यउत्तस्स सङ्गमो जादो । [हा धिग्व्रीडिता खल्वस्मि मन्दभागा एव शोचन्तमार्यपुत्र श्रुत्वा । आर्यपुत्रस्य विरहपरिश्रमोऽपि मे सफल सवृत्त इति पश्यामि, यदि खल्वय वानर सत्य मन्त्रयते । आर्यपुत्रस्यास्मिन् जनेऽनुक्रोश परिश्रम च श्रुत्वा सुखस्य दु खस्य चान्तरे दोलायत इव मे हृदयम् । भद्र ! कथ युष्माभिरार्यपुत्रस्य सङ्गमो जात ] ।

**हनूमान्**—भवति ! श्रूयताम्—

---

अश्रुपूर्णनेत्रम्, हीयमान=क्षीयमाणम्, शरीर=देहम् वहति=धारयति । काव्यलिङ्गमलङ्कार । मालिनीच्छन्द ।

हा धिगेति—व्रीडिता=लज्जिता, मन्दभागा=दुर्भाग्यशालिनी, शोचन्त =चिन्तयन्तम् । विरहपरिश्रम=वियोगखेद, सवृत्त =जात, मन्त्रयते= कथयति । अस्मिन् जने=मयि सीतायाम्, अनुक्रोश=अनुकम्पाम्, परिश्रम= श्रमम्, अन्तरे=मध्ये, मे=मम, सीताया , हृदयम्=अन्त करणम्, दोलायत इव=दोला प्रेंखा तद्वत् आचरण करोति इव । सङ्गम =समागम ।

---

सीता—(अपने मन मे) ओह ! धिक्कार है । इस प्रकार (मेरे प्रति) शोक करते हुए आर्यपुत्र (के समाचार) को सुनकर मैं अभागिनी लज्जित हो रही हूँ । यदि यह वानर सत्य कह रहा है तो मेरा आर्यपुत्र विषयक विरह- कष्ट भी सफल हो गया, ऐसा मैं देखती (समझती) हूँ । आर्यपुत्र का इस व्यक्ति (मुझ सीता) के प्रति दया और सन्ताप को सुनकर मेरा हृदय मानो झूले के समान सुख और दुख के बीच लटक रहा है । (प्रकट रूप में) हे भद्र ! कैसे आर्यपुत्र की आप से भेंट हुई ।

हनुमान्—आप, सुनिए—

हत्वा वालिनमाहवे कपिवरं त्वत्कारणादग्रजं
सुग्रीवस्य कृतं नरेन्द्रतनये ! राज्यं हरीणां ततः ।
राज्ञा त्वद्विचयाय चापि हरयः सर्वा दिशः प्रेषिता-
स्तेषामस्म्यहमद्य गृध्रवचनात् त्वां देवि ! सम्प्राप्तवान् ॥ २२ ॥

अपि च, ईदृशमिव ।

सीता—अहो अअरुणा क्खु इस्सरा एव्व सोअन्त अय्यउत्तं करअन्तो [अहो अकरुणाः खल्वीश्वरा एव शोचन्तमार्यपुत्रं कुर्वन्तः ।]

---

अन्वय :—हे नरेन्द्रतनये ! त्वत्कारणात् अग्रजं कपिवरं वालिनं हत्वा ततः हरीणां राज्यं सुग्रीवं कृतम् । राज्ञा च त्वद्विचयाय हरयः सर्वाः दिशः प्रेषिताः । हे देवि ! तेषाम् अहम् अद्य गृध्रवचनात् त्वां सम्प्राप्तवान् अस्मि ।

हत्वेति—नरेन्द्रतनये=हे राजपुत्री !, त्वत्कारणात्=तव हेतोः, अग्रजं =ज्येष्ठभ्रातरम् कपिवरं=वानरश्रेष्ठम् वालिनं=एतन्नामकं सुग्रीवाग्रजम्, हत्वा=मारयित्वा, ततः=तत्पश्चात् हरीणां=वानराणाम्, राज्यं=राज्यकार्यम् सुग्रीवस्य=एतन्नामकस्य वानरेन्द्रस्य, कृतं=विहितम् राज्ञा= सुग्रीवेण, त्वद्विचयाय=तव विचयाय अन्वेषणाय, हरयः=वानराः च सर्वाः=निखिलाः, दिशः=दिशाः, प्रेषिताः=प्रहिताः । देवि=हे महिषि ! तेषां=कपीनाम्, अहं=हनुमान्, अद्य=अस्मिन्दिवसे, गृध्रवचनात्= गृध्रस्य सम्पातेः वचनात् कथनात्, त्वां=सीताम्, सम्प्राप्तवान्=आगतवान् अस्मि । शार्दूलविक्रीडितं छन्दः ।

---

हे राजकुमारी ! आप के कारण युद्ध में सुग्रीव के बड़े भाई कपीन्द्र बाली को मारकर तत्पश्चात् (सुग्रीव) को वानरों का राज्य (दिया)। (तदनन्तर) आप को खोजने के लिए राजा (सुग्रीव) के द्वारा सभी दिशाओं में वानर भेजे गये हैं। हे देवि ! उन्हीं में से मैं आज गृध्र (जटायु) के वचनानुसार आप को पा सका हूँ।

और भी, ऐसा ही है।

सीता—*ओह ! आर्यपुत्र को चिन्तित करता हुआ ईश्वर निश्चित ही निष्ठुर है।*

हनूमान्—भवति मा विषादेन । रामो हि,

प्रगृहीतमहाचापो वृतो वानरसेनया ।
समुद्धर्तुं दशग्रीवं लङ्कामेवाभियास्यति ॥ २३ ॥

सीता—किण्णु सिविणो मए दिट्ठो । भद्द ! अवि सच्चं । ण आणामि । [किन्नु खलु स्वप्नो मया दृष्टः । भद्र ! अपि सत्यम् ? न जानामि ।]

हनूमान्—(स्वगतम्) भो ! कष्टम् ।

एवं गाढं परिज्ञाय भर्तारं भर्तृवत्सला ।
न प्रत्यायति शोकार्ता यथा देहान्तरं गता ॥ २४ ॥

---

अहो इति—अकरुणा=निष्ठुराः, ईश्वरा=देवाः । निष्पादेन=शाकेन ।

अन्वयः—प्रगृहीतमहाचापः वानरसेनया वृतः (रामः) दशग्रीवं समुद्धर्तुं लङ्काम् एव अभियास्यति ।

प्रगृहीतेति—प्रगृहीतमहाचापः=प्रगृहीतः धृतः महान् चापः धनु येन सः, वानरसेनया=कपिबलेन, वृतः=परिवृतः, दशग्रीवं=रावणम्, समुद्धर्तुं=विनाशयितुम्, लङ्कामेव=एतन्नामकनगरीमेव, अभियास्यति=आक्रमिष्यति ।

किन्निवति—मया=सीतया, स्वप्नः=स्वापः, दृष्टः=विलोकितः ।

अन्वयः—भर्तृवत्सला भर्तारम् एवं गाढं परिज्ञाय शोकार्ता न प्रत्यायति यथा देहान्तरं गता ।

---

हनुमान्—आप शोक न करें । क्योंकि राम—

विशाल धनुष को धारण करने वाले, वानर सेना से युक्त (राम) दशानन (रावण) को मारने के लिए लङ्का पर शीघ्र ही आक्रमण करेंगे ।

सीता—क्या मेरे द्वारा स्वप्न देखा जा रहा है । हे भद्र ! क्या सच है । मैं नहीं जानती हूँ ।

हनुमान्—(अपने मन में) ओह ! कष्ट है ।

पतिपरायणा तथा शोकार्ता (सीता) पति के विषय में इस प्रकार भलीभाँति जानकर भी विश्वास नहीं कर रही है, जैसे (यह) लोकान्तर गयी हुई हो ।

(सकामम्) भवति ! अयमिदानीं,

समुदितवरचापबाणपाणिं पतिमिह राजसुते ! तवानयामि ।
भव हि विगतसंशया मयि त्वं नरवरपार्श्वगता विनीतशोका ॥२५॥

सीता—भद्द ! एदं मे अवत्थं सुणिअ अज्जउत्तो जह सोअपरवसो ण होइ, तह मे वुत्तन्तं भणेहि । [भद्र ! एतां मेऽवस्थां श्रुत्वार्यपुत्रो यथा शोक-परवशो न भवति, तथा मे वृत्तान्तं भण ।]

---

एवमेति—भर्तृवत्सला=पतिप्रिया, भर्तरि=पतिषु, एवम्=अनेन प्रकारेण, गाढ=पूर्णतया, परिगता=आप्ता, शोकार्ता=दुःख पीडिता, न=नहि, व्यवसायति=निश्चिनोति, यथा=येन प्रकारेण, देहान्तर=द्वितीय शरीरम्, गत.=प्राप्त । अनुष्टुप्छन्द ।

अन्वय—हे राजसुते ! समुदितवरचापबाणपाणिं तव पतिम् इह आनयामि, त्वं हि मयि विगतसंशया नरवरपार्श्वगता विनीतशोका भव ।

समुदितेति—राजसुते=हे राजकुमारि ! समुदितवरचापबाणपाणिं=समुदितौ उन्नितौ च वरौ विशालौ च चापबाणौ धनुःशरौ च पाणौ यस्य तम्, तव=सीतायाः, पतिं=भर्तारम्, इह=अत्र, आनयामि=प्रापयामि, त्वं=सीता, हि=निश्चयेन, मयि=ममविषये, विगतसंशया=सन्देहरहिता, नरवरपार्श्वगता=नरवरस्य नरश्रेष्ठस्य रामस्य पार्श्वं सामीप्यं गता प्राप्ता, विनीतशोका=शोकरहिता, भव=स्याः । पुष्पिताग्राछन्द ।

भद्रेति—भद्र=हे कल्याणकारक ! मे=मम, एतां=पुरोवर्तमानाम् अवस्थां=दशाम्, श्रुत्वा=आकर्ण्य, यथा=येन प्रकारेण, शोकपरवशः=दुःख-

---

(प्रकट रूप में) हे पूजनीय ! यह अब—

हे राजकुमारी ! हाथ में विशाल धनुष और बाण धारण करने वाले तुम्हारे पति (राम) को (लङ्का में) लाऊँगा । मेरे प्रति निःशङ्क होइए । आप (शीघ्र ही) नरेन्द्र (राम) की समीपवर्ती तथा शोक-रहित होएंगी ।

सीता—हे भद्र ! मेरी ऐसी अवस्था को सुनकर आर्यपुत्र शोकाभिभूत न हो जाँय, इस प्रकार मेरे समाचार को (उनसे) कहना ।

**हनूमान्**—यदाज्ञापयति ।

**सीता**—गच्छ, कय्यसिद्धी होतु । (गच्छ, कार्यसिद्धिर्भवतु ।)

**हनूमान्**—अनुगृहीतोऽस्मि । (परिक्रम्य) कथमिदानीं ममागमनं रावणाय निवेदयामि । भवतु, दृष्टम् ।

परभृतगणजुष्टं पद्मषण्डाभिरामं
सुरुचिरतरुषण्डं तोयदाभं त्रिकूटम् ।
करचरणविमर्दैः काननं चूर्णयित्वा
विगतविषयदर्पं राक्षसेशं करोमि ॥ २६ ॥

---

पराधीन, न भवति, तथा=तेन प्रकारेण, मे=मम, वृत्तान्त=समाचारम्, भण=कथय ।

अनुगृहीत इति—अनुगृहीत=अनुकम्पित, निवेदयामि=सूचयामि, दृष्ट=चिन्तितम् ।

अन्वय—करचरणविमर्दैः परभृतगणजुष्टं पद्मषण्डाभिरामं सुरुचिरतरुषण्डं तोयदाभं त्रिकूटं काननं चूर्णयित्वा राक्षसेशं विगतविषयदर्पं करोमि ।

परभृतेति—करचरणविमर्दैः=करचरणैः हस्तपादैः विमर्दैः मर्दनैः, परभृतगणजुष्ट=परभृतानां कोकिलानां गणेन समूहेन जुष्टं सेवितम्, पद्मषण्डाभिराम=पद्मानां कमलानां षण्डेन समूहेन अभिरामं शोभायमानम्, सुरुचिरतरुषण्ड=सुरुचिराः मनोहराः ये तरुषण्डाः वृक्षसमूहाः यस्मिन् तत्,

---

हनुमान्—आप जैसी आज्ञा देती है । (वैसा ही करूँगा) ।

सीता—जाओ । कार्य पूरा होवे ।

हनुमान्—मैं अनुगृहीत हूँ । (घूमकर) अपने आने की सूचना रावण को कैसे दूँ । अच्छा, (उपाय) सूझ गया ।

कोयलो के समूह से सेवित, कमल-कुलो से शोभायामन रमणीय वृक्षो वाले, मेघ के समान श्यामल इस त्रिकूट (नामक) उपवन को (अपने) हाथो तथा पैरो के घातो से मर्दित करके राक्षसेन्द्र (रावण) को गर्व रहित कर रहा हूँ ।

(निष्क्रान्तौ)

॥ इति द्वितीयोऽङ्कः ॥



---

तोयदाभं=बादलसदृशम्, निकुञ्ज=यत्र विनम्रलताः कुञ्जाः, मंजुमञ्जूनि यस्मिन् तत्, काननं=वनम्, दुर्गनिन्दा=मर्दनिन्दा, गतसैर्य = गतसैन्यं रावणम्, विगतविनयदर्पं=विगत नष्टः विनयदर्पः अभिमानः यस्य तम्, करोमि=विदधामि। इत्यलङ्कारः। मालिनीच्छन्दः।

॥ इति द्वितीयोऽङ्कः ॥



---

( दोनों निकल जाते हैं )

॥ द्वितीय अङ्क समाप्त ॥



## अथ तृतीयोऽङ्कः

( तत प्रविशति शङ्कुकर्ण )

**शङ्कुकर्णः**—क इह भो ! काञ्चनतोरणद्वारमशून्यं कुरुते ।

( प्रविश्य )

**प्रतिहारी**—अय्य ! अहं विजआ । किं करीअदु । [ आर्य ! अहं विजया । किं क्रियताम् ? ]

**शङ्कुकर्णः**—विजये ! निवेद्यतां निवेद्यतां महाराजाय लङ्केश्वराय—भग्नप्रायाशोकवनिकेति । कुतः,

यस्या न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति यस्यां भयात् ।

---

कइहेति—इह=अत्र, काञ्चनतोरणद्वार=काञ्चनस्य सुवर्णस्य, तोरणद्वारंबहिर्द्वारम्, अशून्यं=न शून्य रहितम्, कुरुते=विधत्ते ।

विजयेति—निवेद्यता=सूच्यताम्, लङ्केश्वराय=रावणाय, भग्नप्राया=भग्नः विनिष्ट. प्राय. बाहुल्य यस्या सा, अशोकवानिका=अशोकवनिका ।

अन्वय—यस्या देवस्य महिषी मन्दोदरी प्रियमण्डना अपि सती स्नेहाद् पल्लवान् न लुम्पति, यस्या च पुन करैः अपृष्टवालद्रुमा वीजन्त मलया-

---

( तत्पश्चात् शङ्कुकर्ण प्रवेश करता है )

**शङ्कुकर्ण**—यहाँ काञ्चनतोरण द्वार पर कौन उपस्थित है ?

( प्रवेश करके )

**प्रतीहारी**—हे आर्य ! मै विजया हूँ । क्या किया जाय ।

**शङ्कुकर्ण**—हे विजया ! सूचित करो, महाराजा लङ्केश्वर (रावण) को सूचित करो कि अशोकवाटिका भग्नप्राय हो गयी । क्योकि—

आभूषण-प्रिया (आभूपण को पसन्द करने वाली) भी महाराज (आप) की महारानी मन्दोदरी स्नेह के कारण जिस (अशोकवाटिका) मे पत्ते नहीं

वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमाः
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥ १ ॥

प्रतिहारी—अय्य ! णिच्चं भट्टिपादमूले वत्तमाणस्स जणस्स अदिट्ठपुव्वो अअं सम्भमो । किं एदं । [ आर्य ! नित्यं भर्तृपादमूले वर्तमानस्य जनस्यादृष्टपूर्वोऽयं संभ्रमः । किमेतद् । ]

शङ्कुकर्णः—भवति ! अतिपाति कार्यमिदम् । शीघ्रं निवेद्यताम्

---

निला अपि भयात् न वीजन्ति, सा इयं शक्ररिपो अशोकवनिका भग्ना इति विज्ञाप्यताम् ।

यस्यामिति—यस्याम् = अशोकवाटिकायाम्, देवस्य = महाराजस्य, महिषी = राज्ञी मन्दोदरी, प्रियमण्डना अपि = आभूषणप्रिया अपि, स्नेहात् = प्रेम्णः, पल्लवान् = किसलयान्, न लुम्पति = न त्रोटयति, यस्याम् = अशोकवाटिकायाम्, वीजन्तः = चलन्तः, मलयानिला अपि = मलयवायव अपि, भयात् = भीतेः, न पुनः वीजन्ति = नैव वहन्ति, या = अशोकवाटिका च, करैः = हस्तैः, अस्पृष्टबालद्रुमा = अस्पृष्टा न परामृष्टा बालद्रुमा स्पृष्टवृक्षा यस्याः सा, सा = पूर्वोक्ता, इयं = पुरो वर्तमाना, शक्ररिपो = रावणस्य, अशोकवनिका = अशोकवाटिका, भग्ना = छिन्ना-भिन्ना जाता । शार्दूलविक्रीडितं छन्दः ।

आर्येति—नित्यं = प्रतिदिनम्, भर्तृपादमूले = स्वामीचरणतले, वर्तमानस्य = विद्यमानस्य, जनस्य = व्यक्तेः संभ्रमः = वैकल्यम् ।

भवतीति—अतिपाति = आकस्मिकम् ।

---

तोड़ती थी, हवा करने वाले मलयानिल भी (आप के) भय से जिसमें पाया नहीं झलते थे । जिसके वृक्ष के पत्ते नहीं छुए गये हैं, इन्द्रशत्रु (रावण) की वही अशोकवाटिका तोड डाली गयी—ऐसा (रावण से) सूचित कर दो ।

प्रतिहारी—हे आर्य ! प्रतिदिन स्वामी के चरणों में रहने वाले व्यक्ति (आप शङ्कुकर्ण) का यह अपूर्वदृष्ट (इतनी अधिक) घबराहट क्यों है । यह क्या (बात) है ?

शङ्कुकर्ण—हे पूजनीये ! यह कार्य बहुत शीघ्रता वाला है । सूचित करो,

निवेद्यताम् ।

**प्रतिहारी**—अय्य ! इय णिवेदेमि । ( निष्क्रान्ता ) [ आर्य ! इय निवेदयामि ।]

**शङ्कुकर्णः**—(पुरतो विलोक्य) अये, अय महाराजो लङ्केश्वर इत एवाभिवर्तते । य एष,

अमलकमलसन्निभोग्रनेत्र कनकमयोज्ज्वलदीपिकापुरोग ।
त्वरितमभिपतत्यसौ सरोषो युगपरिणामसमुद्यतो यथार्क ॥ २ ॥
(तत प्रविशति यथानिर्दिष्टो रावण )

---

अये इति—अभिवर्तते = आगच्छति ।

अन्वय —अमलकमलसन्निभोग्रनेत्र कनकमयोज्ज्वलदीपिकापुरोग सरोष असौ यथा युगपरिणामसमुद्यत अर्क (तथा) त्वरितम अभिपतति ।

अमलकमलेति—अमलकमलसन्निभोग्रनेत्र = अमल स्वच्छ यत् कमल जलज तत्सन्निभे तत्सदृशे उग्रे भीषणे नेत्रे नयने यस्य स कनकमयोज्ज्वल-दीपिकापुरोग = कनकमया सुवर्णयुक्ता उज्ज्वला शुभ्रा दीपिका उल्का पुरोगा अग्रगामिन्य यस्य स सरोष = सक्रोध , असौ = पुरोवर्तमान रावण इति शेष , यथा = येन प्रकारेण युगपरिणामसमुद्यत = युगपरिणामाय युगान्ताय समुद्यत उद्युक्त , अर्क = सूर्य यथा = इव त्वरित = शीघ्रम् अभिपतति = अभिगच्छति । उपमालङ्कार । पुष्पिताग्राच्छन्द ।

---

शीघ्र सूचित करो ।

**प्रतिहारी**—हे आर्य ! यह मैं सूचित करती हूँ । (निकल जाती है)

**शङ्कुकर्ण**—(चारो ओर देखकर) अरे ! यह महाराज लङ्केश्वर इधर ही आ रहे हैं । जो यह—

निर्मल कमल के समान तथा भीषण आँखो वाले आगे आगे चलने वाले सुवर्णमय उज्ज्वल दीपक से युक्त ये (महाराज रावण) क्रोध के साथ प्रलयकालिक सूर्य की भाँति शीघ्रता से आ रहे है ।

(तत्पश्चात् यथोक्त अवस्था वाला रावण प्रवेश करता है)

रावणः—

कथ कथ भो नववाक्यवादिञ्छृणोमि शीघ्रं वद केन चाद्य ।
मुमूर्षुणा मुक्तभयेन धृष्टं वनाभिमर्दात् परिधर्षितोऽहम् ॥ ३ ॥

शङ्कुकर्णः—(उपसृत्य) जयतु महाराज । अविदितागमनेन केनचिद् वानरेण समरम्भमभिमृदिताशोकवनिका ।

रावणः—(सावज्ञम्) कथं वानरेणेति । गच्छ, शीघ्रं निगृह्यानय ।

शङ्कुकर्णः—यदाज्ञापयति महाराजः । (निष्क्रान्तः) ।

---

अन्वय.—भो नववाक्यवादिन् ! शृणोमि, शीघ्रं वद, मुमूर्षुणा मुक्त-भयेन केन च अद्य कथम् अद्य वनाभिमर्दात् अहं धृष्टं परिधर्षितः ।

कथमिति—भो नववाक्यवादिन् = हे नूतनवाक्यवक्ता शृणोमि = श्रवणं करोमि, शीघ्रं = त्वरितम्, वद = कथय, केन, मुमूर्षुणा = मृत्युमभिलषता, मुक्तभयेन = निर्भयेन, अद्य = अस्मिन् दिवसे, वनाभिमर्दात् = वनस्य अशोक-वाटिकायाः अभिमर्दात् भञ्जनात्, अहम् = रावणः, धृष्टं = धृष्टतापूर्वकम्, परिधर्षितः = तिरस्कृतः, अस्मीति शेषः । उपेन्द्रवज्राच्छन्दः ।

जयत्विति—अविदितागमनेन = अविदितम् अज्ञातम् आगमनम् यस्य तेन, समरम्भं = सक्रोधम्, अभिमृदिता = अभिमर्दिता ।

यथेति—निगृह्य = गृहीत्वा, आनय = प्रापय ।

---

रावण—

अरे नयी बात कहने वाले ! मैं सुन रहा हूँ । शीघ्र बतलाओ—अपनी मृत्यु को चाहने वाले अब एवं निर्भय किस (व्यक्ति) के द्वारा धृष्टतापूर्वक वन का विनाश करने के कारण मैं अपमानित किया गया हूँ ।

शङ्कुकर्ण—(समीप जाकर) महाराज विजयी होवें । अकस्मात् आये हुए किसी वानर के द्वारा शीघ्रता से अशोकवाटिका उजाड़ दी गयी है ।

रावण—(तिरस्कार पूर्वक) क्या वानर के द्वारा (अशोकवाटिका उजाड़ दी गयी) । जाओ शीघ्र पकड़कर ले आओ ।

शङ्कुकर्ण—जैसी आप आज्ञा देते हैं । (निकल जाता है)

**रावणः**—भवतु भवतु ।

युधि जगत्त्रयभीतिकृतोऽपि मे यदि कृतं त्रिदशैरिदमप्रियम् ।
अनुभवन्त्वचिरादमृताशिनः फलमतो निजशाठ्यसमुद्भवम् ॥ ४ ॥

( प्रविश्य )

**शङ्कुकर्णः**—जयतु महाराजः । महाराज ! महाबलः खलु स वानरः । तेन खलु मृणालवदुत्पाटिताः सालवृक्षाः, मुष्टिना भग्नो दारुपर्वतकः, पाणितलाभ्यामभिमृदितानि लतागृहाणि, नादेनैव विसर्जी-

---

अन्वय —यदि युधि जगत्त्रयभीतिकृत अपि मे इदम् अप्रियं त्रिदशैः कृत (तर्हि) अमृताशनाः अतः निजशाठ्यसमुद्भवं फलम् अचिरात् अनुभवन्तु ।

युधीति—यदि=चेत्, जगत्त्रयभीतिकृत अपि=लोकत्रयभयकारकस्य अपि, मे=मम, इदम्=एतद्, अप्रियम्=अप्रीतिकरम्, त्रिदशैः=देवैः, कृतं =विहितम्, तर्हि, अमृताशिनः=देवाः, अतः=अस्मात् कारणाद्, निजशाठ्यसमुद्भवं=निजं स्वकीयं शाठ्यं धूर्तता तस्मात् समुद्भवः उत्पत्तिः यस्य तद्, फलं=परिणामम्, अचिरात्=शीघ्रमेव, अनुभवन्तु=प्राप्नुवन्तु । द्रुतविलम्बितं छन्दः ।

जयत्विति—महाबलः=अतिबलशाली, तेन=वानरेण, सालवृक्षाः= सालनामकतरवः, मृणालवत्=कमलदण्डवत्, उत्पाटिताः= उन्मूलिताः, दारुपर्वतकः=दारुनामकः पर्वतः, मुष्टिना=मुष्टिकया, भग्नः=विनाशितः, लतागृहाणि=कुञ्जानि, पाणितलाभ्यां=करतलाभ्याम्, अभिमृदितानि=

---

रावण—अच्छा, अच्छा !

युद्ध में तीनों लोकों को भयभीत करने वाले मुझ रावण का यदि देवताओं द्वारा यह अप्रिय (कार्य) किया गया है तो अमृत का भोजन करने वाले वे (देवता) अपनी दुष्टता से उत्पन्न फल को शीघ्र प्राप्त करेंगे ।

[प्रवेश करके]

शङ्कुकर्ण—महाराज विजयी हों। हे महाराज ! यह वानर बड़ा बलशाली है । उसके द्वारा ही साल के वृक्ष कमलनाल की तरह उखाड़ दिये गये, मुष्टिका (के प्रहार) से दारु पर्वत तोड़ दिया गया, करतल (हथेली) से लता-

कृता. प्रमदवनपालाः । तस्य ग्रहणसमर्थं बलमाज्ञापयितुमर्हति महाराजः ।

**रावणः**—तेन हि किङ्कराणां सहस्रं बलमाज्ञापय वानरग्रहणाय ।

**शङ्कुकर्णः**—यदाज्ञापयति महाराजः ( निष्क्रम्य प्रविश्य ) जयतु महाराजः ।

> अस्मदीयैर्महावृक्षैरस्मदीया महाबलाः ।
> क्षिप्रमेव हतास्तेन किङ्करा द्रुमयोधिना ॥ ५ ॥

---

विदलितानि, प्रमदवनपालाः = प्रमदोद्यानरक्षकाः, नादेन = गर्जनेन, विसंज्ञीकृताः मूर्छिताः कृताः । तस्य = वानरस्य, ग्रहणसमर्थं = ग्रहणे आरोधे समर्थम् समम्, बलं = सैन्यम्, आज्ञापयितुं = आदेष्टुम्, अर्हति = समर्थोऽस्ति ।

तेन हि इति—किङ्कराणां = सैनिकानाम् सहस्रमसंख्याकम्, बलं = सेनाम्, आज्ञापय = आदिश ।

अन्वयः—द्रुमयोधिना तेन अस्मदीयैः महावृक्षैः अस्मदीयाः महाबलाः किङ्कराः क्षिप्रम् एव हताः ।

अस्मदीयैः इति—द्रुमयोधिना = द्रुमैः वृक्षैः युद्ध्यते युद्धं करोतीति तथोक्तेन, तेन = वानरेण, अस्मदीयैः = अस्माकीनैः, महावृक्षैः = महातरुभिः, अस्मदीयाः = अस्माकीनाः, महाबलाः = महाबलयुक्ताः, किङ्कराः = भृत्याः, क्षिप्रं = त्वरितम्, एव, हताः = मारिताः । अनुष्टुप्छन्दः ।

---

वृक्ष मसल दिये गये, गर्जन से ही प्रमदवन के रक्षक मूर्च्छित कर दिये गये । उसको पकड लाने में समर्थ सैनिक को महाराज आज्ञा दीजिए ।

रावण—तो भृत्यो की एक हजार सेना को वानर को पकडने के लिए आदेश दे दो ।

शङ्कुकर्ण—जैसी आप की आज्ञा । (निकल कर पुनः प्रवेश करके) महाराज विजयी होवे ।

वृक्ष से युद्ध करने वाले (उस वानर) के द्वारा हमारे ही वृक्षो से (प्रहार करके) हमारी बलशाली सेना शीघ्र ही मार दी गयी ।

**रावणः**—कथं हता इति। तेन हि कुमारमक्षमाज्ञापय वानर-ग्रहणाय।

**शङ्कुकर्ण**—यदाज्ञापयति महाराजः। (निष्क्रान्त।)

**रावणः**—(विचिन्त्य)

कुमारो हि कृतास्त्रश्च शूरश्च बलवानपि।
प्रसह्य चापि गृह्णीयाद्धन्याद् वा त वनौकसम् ॥ ६ ॥

(प्रविश्य)

**शङ्कुकर्णः**—अनन्तरीय बलमज्ञापयितुमर्हति महाराज।

**रावणः**—किमर्थम्?

---

अन्वय—कुमारः कृतास्त्रः शूरः बलवान् अपि (अस्ति), प्रसह्य च अपि तं वनौकस गृह्णीयात् हन्यात् वा।

कुमार इति—कुमार = अक्षय, हि = निश्चयेन, कृतास्त्रः = कृतानि शिक्षितानि अस्त्राणि आयुधानि येन, शूर = वीर, बलवान् अपि = बलशाली अपि, अस्ति इति शेष। प्रसह्य = बलात्, त = पूर्वोक्तम्, वनौकस = वानरम्, गृह्णीयात् = ग्रहण कुर्यात्, हन्यात् वा = व्यापादयेत् वा। अनुष्टुप्छन्द।

अनन्तरीयमिति—अनन्तरीयम् = अनन्तरवर्ति, बल = सैन्यम्, आज्ञाप-यितुम् = आदेष्टुम्, अर्हति = समर्थ अस्ति।

---

रावण—क्यों मार दी गयी? तो कुमार अक्ष को वानर को पकडने के लिए आदेश दे दो।

शङ्कुकर्ण—जो महाराज की आज्ञा। (निकल जाता है)

रावण—(सोच कर)—

कुमार ने अस्त्र (चलाना) सीखा है। (वह) वीर तथा बलशाली है। उस वानर को पकड लेगा या मार डालेगा।

[प्रवेश करके]

शङ्कुकर्ण—सुरक्षित सेना को महाराज आदेश दीजिए।

रावण—किस लिए।

शङ्कुकर्णः—श्रोतुमर्हति महाराजः। कुमारं वानरमभिगच्छन्तं दृष्ट्वा महाराजेनानाज्ञापिता अप्यनुगताः पञ्च सेनापतयः।

रावणः—ततस्ततः ?

शङ्कुकर्णः—ततस्तानभिद्रुतान् दृष्ट्वा किञ्चिद् भीतेन इव तोरणमाश्रित्य काञ्चनपरिघमुद्यम्य निपातितास्तेन हरिणा पञ्च सेनापतयः।

रावणः—ततस्ततः ?

शङ्कुकर्णः—ततः कुमारमक्षं-

क्रोधात् सरक्तनेत्रं त्वरिततरहयं स्यन्दनं वाहयन्तं

प्रावृट्कालाभ्रकल्पं परमलघुतरं बाणजालान् वमन्तम्।

---

श्रोतुमिति—वानरं—कपिं प्रति अभिगच्छन्तं—अभियान्तम्, कुमारम्—अक्षम्, दृष्ट्वा—निरीक्ष्य, महाराजेन—भवता, अनाज्ञापिता अपि—अनादिष्टा अपि, अनुगताः—अनुयाताः।

ततस्तानिति—अभिद्रुतान्—अस्मान् प्रति पलायितान्, तान्—अनुयातान् सेनापतीन्, दृष्ट्वा—विलोक्य, किञ्चित्—ईषत्, भीत—भयं प्राप्त, तोरणं—बहिर्द्वारम्, आश्रित्य—उपगम्य, काञ्चनपरिघं—सुवर्णमुसलम्, उद्यम्य—उत्थाप्य, तेन—पूर्वोक्तेन, हरिणा—वानरेण, निपातितः—मारितः।

अन्वयः—क्रोधात् सरक्तनेत्रं त्वरिततरहयं स्यन्दनं वाहयन्तं प्रावृट्कालाभ्रकल्पं परमलघुतरं बाणजालान् वमन्तं (कुमारं) तान् बाणान् निविधून्वन्

---

शङ्कुकर्ण—सुनिए महाराज। वानर की ओर जाते हुए कुमार (अक्ष) को देखकर आप की आज्ञा बिना ही पाँच सेनापति (उसके) पीछे गये।

रावण—तब, तब (क्या हुआ)।

शङ्कुकर्ण—तब आक्रमण के लिए आते हुए उन (सेनापतियों) को देखकर कुछ डरे हुए के समान होकर उस वानर के द्वारा काञ्चनद्वार पर चढ़कर सुवर्णमय परिघ के प्रहार से पाँचों सेनापति मार डाले गये।

रावण—तब, तब।

शङ्कुकर्ण—तब कुमार अक्ष को—

क्रोध के कारण लाल आँखों वाले, बड़े वेग से घोड़े और रथ को हाँकते

तान् बाणान् निर्विघुन्वन् कपिरपि सहसा तद्रथं लङ्घयित्वा
　　कण्ठेसङ्गृह्य धृष्ट मुदिततरमुखो मुष्टिना निजघान ॥ ७ ॥

रावणः—(सरोषम्) आः, कथ कथ निर्जघानेति !

　　तिष्ठ त्वमहमेवनमासाद्य कपिजन्तुकम् ।
　　एष भस्मीकरोम्यस्मत्क्रोधानलकणैः क्षणात् ॥ ८ ॥

कपि अपि सहसा तद्रथ लंघयित्वा कण्ठे सगृह्य मुदिततरमुखः धृष्टं मुष्टिना निर्जघान ।

क्रोधादिति—क्रोधात् = पञ्चसेनापतिवधात् रोषात्, संरक्तनेत्रं = संरक्तं रक्तवर्णे नयने यस्य तम्, त्वरिततरहयं = त्वरितर. द्रुततर. हय अश्वः यस्य तम्, स्यन्दनं = रथम्, वाहयन्तं = चालयन्तम्, प्रावृट्कालाभ्रकल्पं = प्रावृट्काल वर्षासमयः तस्य अभ्रस्य मेघस्य कल्पं सदृशम्, परमलघुतरं = परमम् अत्यन्त लघु. त्वरितं यथास्यात्तथा, बाणजालान् = शरसमूहान् वमन्तं = वर्षन्तम् कुमारम् = अक्षम्, तान् = पूर्वोक्तान्, बाणान् = शरान्, निर्विधुन्वन् = अपाकुर्वन्, कपि. = वानर, सहसा = अकस्मात्, तस्य = कुमारस्य, रथं = स्यन्दनम् = लङ्घयित्वा = आरुह्य, कण्ठे = गले, संगृह्य = गृहीत्वा, मुदित = हृष्टम्, धृष्टं = धृष्टतापूर्वकम्, मुष्टिना = मुष्टिकया, निर्जघान = हतवान् । उपमालङ्कारः । स्रग्धराच्छन्द ।

अन्वय—त्वं तिष्ठ, एषः अहम् एव एत कपिजन्तुकम् आसाद्य अस्मत्क्रोधानलकणैः क्षणात् भस्मीकरोमि ।

तिष्ठेति—त्वं = शङ्कुकर्ण , तिष्ठ = विरम, एष = अयम्, अहमेव =

---

हुए, वर्षाकालीन मेघ की भाँति शीघ्रतापूर्वक बाणसमूहो को छोडते हुए (कुमार अक्ष) को, उन बाणो को काटता हुआ वानर भी उनके रथ पर हमला करके धृष्टता पूर्वक गला दबाकर प्रसन्नमुख से मुष्टिका के द्वारा मार डाला ।

रावण—(क्रोध के साथ) क्या, क्या मार दिया ?

तुम रुको । मैं ही इस क्षुद्र वानर को अपने क्रोधाग्नि के कणो से शीघ्र भस्म करता हूँ ।

शङ्कुकर्णः—प्रसीदतु प्रसीदतु महाराजः। कुमारमक्षं निहतं श्रुत्वा क्रोधाविष्टहृदयः कुमारेन्द्रजिदभिगतवांस्तं वनौकसम्।

रावणः—तेन हि गच्छ। ज्ञायतां वृत्तान्तः।

शङ्कुकर्णः—यदाज्ञापयति महाराजः! (निष्क्रान्तः)

रावणः—कुमारो हि कृतास्त्रश्च,

अवश्यं युधि वीराणां वधो वा विजयोऽथवा।
तथापि क्षुद्रकर्मेदं मह्यमीषन्मनोज्वरः॥ ९॥

---

रावण एव, एनम्=इमम्, कपिजन्तुकं=तुच्छजन्तुम् आसाद्य=प्राप्य, अस्मत्क्रोधानलकणे.=अस्माकं क्रोधस्य कोपस्य एव अनलस्य अग्ने कणे, लवे, क्षणात्=शीघ्रमेव, भस्मीकरोमि=दहामि।

प्रसीदत्विति—निहतं=मारितम्, श्रुत्वा=आकर्ण्य, क्रोधाविष्टहृदयः=क्रोधाविष्टं कोपाभिभूतं हृदयम् अन्तःकरणं यस्य सः, कुमारेन्द्रजित्=कुमारः इन्द्रजित् मेघनादः, अभिगतवान्।

अन्वयः—युधि वीराणाम् अवश्यं वधः वा विजयः अथवा तथापि इदं क्षुद्रकर्म मह्यम् ईषत् मनोज्वरः (अस्ति)।

अवश्यमिति—युधि=युद्धे, वीराणां=शूराणाम्, अवश्यं=निश्चितरूपेण, वधः=हननम्, विजयः वा=जयः वा, तथापि, इदम्=एतत् क्षुद्रकर्म=वानरमारणरूपं क्षुद्रं तुच्छं कर्म कार्यम्, मह्यं=मम कृते, ईषत्=किमपि, मनोज्वरः=चित्तसन्तापः, अस्तीति शेषः। रूपकालङ्कारः। अनुष्टुप् छन्दः।

---

शङ्कुकर्ण—प्रसन्न होइए, प्रसन्न होइए महाराज। कुमार अक्ष का मारा जाना सुनकर क्रोधपूर्ण हृदय वाले कुमार इन्द्रजित् (मेघनाद) उस वानर के समीप गये हैं।

रावण—तो जाओ। फिर समाचार मालूम करो।

शङ्कुकर्ण—जो महाराज की आज्ञा। (निकल जाता है)

रावण—और कुमार अस्त्राभ्यासी है।

युद्ध में निश्चित ही वीरों की मृत्यु होती है अथवा विजय। तो भी यह नीच कार्य है, अतः मुझको खेद है।

(प्रविश्य)

**शङ्कुकर्ण.**—जयतु महाराज. । जयतु लङ्केश्वर. ! जयतु भद्रमुख !

संवृत्त तुमुलं युद्धं कुमारस्य च तस्य च ।
तत. स वानरः शीघ्रं बद्ध. पाशेन साम्प्रतम् ॥ १० ॥

**रावण.**—कोऽत्र विस्मयं इन्द्रजिता शाखामृगो बद्ध इति। कोऽत्र भोः !

(प्रविश्य)

**राक्षसः**—जयतु महाराज. !

**रावण**—गच्छ विभीषणस्तावदाहूयताम् !

---

अन्वयः—कुमारस्य च तस्य च तुमुल युद्धं सवृत्तम् । तत शीघ्र सः वानरः साम्प्रतं पाशेन बद्धः अस्ति ।

सवृत्तमिति—कुमारस्य च=मेघनाथस्य च, तस्य च=वानरस्य हनुमत च, तुमुलं=भयानकम्, युद्धं=सग्राम, सवृत्तं=जातम्, तत = तत्पश्चात्, शीघ्रं=त्वरितम्, स =पूर्वोक्त, वानर =कपि, सम्प्रतम् = अधुना, पाशेन=ब्रह्मपाशेन, बद्ध =बन्धन प्राप्त । अनुष्टुप्छन्द ।

कोऽत्रेति—विस्मय =आश्चर्यम्, शाखामृग =वानर, इन्द्रजिता= मेघनाथेन, बद्ध =बन्धन प्राप्त ।

---

[प्रवेश करके]

**शङ्कुकर्ण**—महाराज विजयी होवे, लङ्केश्वर विजयी होवे, भद्रमुख विजयी होवे ।

कुमार (मेघनाथ) तथा उस (वानर) के बीच घोर युद्ध हुआ । तत्पश्चात् वह वानर शीघ्रतापूर्वक (कुमार के द्वारा) पाश से बाँध लिया गया है ।

**रावण**—इन्द्रजित् (मेघनाथ) के द्वारा वानर बाँध लिया गया, इसमे क्या आश्चर्य है । अरे ! यहाँ कौन है ।

[प्रवेश करके]

**राक्षस**—महाराज विजयी होवे ।

**रावण**—तो जाओ, विभीषण को बुला लाओ ।

राक्षस—यदाज्ञापयति महाराज ! (निष्क्रान्त)

रावण—त्वमपि तावद् वानरमानय।

शङ्कुकर्ण—यदाज्ञापयति महाराज ! (निष्क्रान्त।)

रावण—(विचिन्त्य) भो ! कष्टम्।

> अचिन्त्या मनसा लङ्का सहितैः सुरदानवैः।
> अभिभूय दशग्रीवं प्रविष्टः किल वानरः ॥ ११ ॥

अपि च,

जित्वा त्रैलोक्यमाजौ ससुरदनुसुतं यन्मया गर्वितेन

भ्रान्त्वा कैलासमीशं स्वगणपरिवृतं साकमारम्य देव्या।

---

अन्वय—लङ्का सहितैः सुरदानवैः मनसा (अपि) अचिन्त्या (आसीद्)। दशग्रीवं अभिभूय वानरः किल प्रविष्टः।

अचिन्त्येति—लङ्का=एतन्नामकनगरी, सुरदानवैः=सुराः देवाः दानवाः च असुराः च तैः, मनसा=चित्तेन, अचिन्त्या=अचिन्तनीया, आसीदिति शेषः। दशग्रीवं=रावणम् अभिभूय=तिरस्कृत्य, वानरः=कपिः, किल=निश्चयेन प्रविष्टः=प्रवेशं प्राप्तः। अनुष्टुप्छन्दः।

अन्वय—यत् आजौ ससुरदनुसुतं त्रैलोक्यं जित्वा गर्वितेन मया कैलासं भ्रान्त्वा देव्या साकं स्वगणपरिवृतम् ईशम् आरम्य तस्मात् प्रसादं लब्ध्वा

---

राक्षस—जो महाराज की आज्ञा। (निकल जाता है)

रावण—तो तुम भी वानर को ले आओ।

शङ्कुकर्ण—जो महाराज की आज्ञा। (निकल जाता है)

रावण—(सोच कर) ओह ! कष्ट है।

जो लङ्का देवता तथा दानवों द्वारा मन से भी अचिन्तनीय (अनाक्रमणीय) है, दशानन (रावण) को तिरस्कृत करके (उसमें) वानर प्रवेश कर गया है।

और भी—

क्योंकि युद्ध में देवता और दानव सहित तीनों लोकों को जीतकर, कैलास को लाँघ कर पार्वती के साथ अपने गणों से घिरे हुए शङ्कर को हिला कर, उन (महादेव) से प्रसाद प्राप्त करके, अभिमान में आये हुए मेरे द्वारा अपमानित

लब्ध्वा तस्मात् प्रसाद पुनरगसुतया नन्दिनानादृतत्वाद्
दत्त शप्त च ताभ्या यदि कपिविकृतिच्छद्मना तन्मम स्यात् ॥१२॥

(तत प्रविशति विभीषण )

**विभीषण.**—(सविमर्शम्) अहो नु खलु महाराजस्य विपरीता बुद्धि सवृत्ता। कुत.—

---

अनादृतत्वात् पुन अगसुतया नन्दिना च ताभ्या तत् शमम् दत्त, यदि कपि-विकृतिच्छद्मना मम तत् स्यात्।

जित्वेति—यत् = यत, आजौ = युधि, ससुरदनुसुत = सुरा देवा दनु-सुता वानवा तै सह त्रैलोक्य = लोकत्रयम्, जित्वा = पराजित्य, गर्वितेन = अभिमानिता, मया = रावणेन, कैलासम् = एतन्नामकपर्वतम्, क्रान्त्वा = अभिक्रम्य, देव्या = पार्वत्या, साक = सह, स्वगणपरिवृत्त = स्वगणेन नन्दि-प्रमथादयेन परिवृत्त परिगतम्, ईश = शङ्करम्, आकम्प्य = कम्पयित्वा, तस्माद् = आकम्पमाद्, प्रसाद = अनुग्रहरूपेण चन्द्रहासम्, लब्ध्वा = प्राप्य, अनादृतत्वात् = तिरस्कारात्, अगसुतया = पर्वतपुत्र्या पार्वत्या, नन्दिना = शङ्करस्य प्रधानगणेन, ताभ्याम् = उभाभ्याम् शप्त = शापम्, दत्त = प्रति-पादितम्। यदि = इति सम्भावनायाम्, कपि = वानर हनूमान्, निर्वृत्त = तस्य शापस्य वानररूपेण परिणमन् विक्रिया, छद्मना = तस्य व्याजेन, तद् = शापः, स्याद् = भवेत्। व्याजापह्नुतिरलङ्कार। सग्धराच्छन्द।

अहो इति—महाराजस्य = रावणस्य, विपरीता = प्रतिकूला, बुद्धि = मति, सवृत्ता = जाता।

---

किए जाने के कारण पार्वती और नन्दी दोनो ने शाप दे दिया। सम्भवत वानर के बहाने यह (शाप) काम कर रहा है।

(तत्पश्चात् विभीषण प्रवेश करता है)

विभीषण—(सोच कर) ओह! महाराज की बुद्धि विपरीत हो गयी है। क्योंकि—

रावणः—छिद्यतामेषा कथा । त्वमपि तावद् वानरमानय ।
विभीषणः—यदाज्ञापयति महाराज । (निष्क्रान्त ।)
(तत प्रविशति राक्षसैर्गृहीतो हनूमान् )
सर्वे—आ इत इत ।
हनूमान्—
नैवाहं धर्षितस्तेन नैर्ऋतेन दुरात्मना ।
स्वयं ग्रहणमापन्नो राक्षसेशदिदृक्षया ॥ १४ ॥
(उपगम्य) भो ! राजन ! अपि कुशली भवान् ?
रावणः—(सावज्ञम्) विभीषण ! किमस्य तत् कर्म ?

---

कथा=वार्ता, छिद्यता=समाप्यताम् ।

अन्वय—दुरात्मना तेन नैर्ऋतेन अहम् न एव धर्षित , राक्षसेशदिदृक्षया स्वयं ग्रहणम् आपन्न ।

नैवाहमिति–दुरात्मना=दुर्मना, तेन=मेघनादेन, नैर्ऋतेन=राक्षसेन, अहं=हनूमान् नैव=नहि एव, धर्षित =अभिभूत , किन्तु, राक्षसेशदिदृक्षया =राक्षसेशस्य राक्षसेन्द्रस्य रावणस्य दिदृक्षया विलोकितु इच्छया, स्वयमेव =आत्मना एव, ग्रहण=बन्धनम्, आपन्न =प्राप्त । अनुष्टुप्छन्द ।

भो राजनिति–कुशली=कुशलपूर्वकम्, तत्=पूर्वोक्तम्, कर्म=कार्यम् ।

---

रावण—इस वार्ता को छोडो । तो तुम भी वानर लेते आओ ।
विभीषण—जो महाराज की आज्ञा । (निकल जाता है)
(तत्पश्चात् राक्षसो द्वारा पकडे गये हनुमान् प्रवेश करते हैं)
सभी—अरे ! इधर से, इधर से चलो ।
हनुमान्—मैं उस दुष्ट राक्षस द्वारा नही पकडा गया हूँ । राक्षसेन्द्र (रावण) को देखने की इच्छा से मैं स्वयं बँध गया हूँ ।
(समीप जाकर) हे राजन् ! आप सकुशल तो हैं ?
रावण—(तिरस्कारपूर्वक) हे विभीषण ! क्या इस (वानर) ने ही वह ( अशोकवाटिका को उजाडना इत्यादि ) कार्य किया है ।

**विभीषण.**—महाराज ! अतोऽप्यधिकम् ।

**रावण**—कथं त्वमवगच्छसि ?

**विभीषण**—प्रष्टुमर्हति महाराज कस्त्वमिति ।

**रावण**—भो वानर ! कस्त्वम् ? केन कारणेन धर्षितोऽस्माकमन्तःपुरं प्रविष्टः ।

**हनूमान्**—भो ! श्रूयताम्

> अञ्जनायां समुत्पन्नो मारुतस्यौरसः सुतः ।
> प्रेषितो राघवेणाहं हनुमान् नाम वानरः ॥ १५ ॥

**विभीषण**—महाराज ! किं श्रुतम् ?

---

अतः अपि=अस्मादपि, अधिकम्=अतिरिक्तम् । अवगच्छसि=जानासि, अर्हसि=योग्योऽसि, अन्तःपुरम्=अवरोधकम्, प्रविष्टः=प्रवेशं कृतः ।

अन्वय—अञ्जनायां समुत्पन्नः मारुतस्य औरसः सुतः हनूमान् नाम वानरः अहं राघवेण प्रेषितः (अस्मि) ।

अञ्जनायामिति—अञ्जनायाम्=एतन्नाम्न्यां वानर्याम्, समुत्पन्नः=जातः, मारुतस्य=वायोः औरसः सुतः=पुत्रः हनूमान् नाम=एतन्नामकः, वानरः=कपिः, राघवेण=रामेण प्रेषितः=प्रहितः अस्मीति शेषः । अनुष्टुप्छन्दः ।

---

विभीषण—हे महाराज ! उससे भी अधिक ।

रावण—तुम कैसे जानते हो ?

विभीषण—महाराज आप (इससे) पूछिए कि तुम कौन हो ?

रावण—हे वानर ! तुम कौन हो ? किस कारण से बिना सोचे समझे हमारे अन्तःपुर में प्रवेश किया ।

हनुमान्—अरे ! सुनिए,

अञ्जना के गर्भ से उत्पन्न मैं पवन ( देव ) का औरस पुत्र हनुमान् नामक वानर, रामचन्द्र के द्वारा भेजा गया हूँ ।

विभीषण—हे महाराज ! क्या सुन लिया आप ने ?

**रावण** —किं श्रुतेन !

**विभीषण** —हनूमन् ! किमाह तत्रभवान् राघव ।

**हनूमान्** —भो श्रूयतां रामशासनम् ।

**रावण** —कथं कथं रामशासनमित्याह । आः हन्यतामयं वानर ।

**विभीषण** —प्रसीदतु प्रसीदतु महाराज ! सर्वापराधेष्ववध्याः खलु दूताः । अथवा रामस्य वचनं श्रुत्वा पश्चाद् यथेष्टं कर्तुमर्हति महाराज ।

**रावण** —भो वानर ! किमाह स मानुष ?

**हनूमान्** भो ! श्रूयताम्,

वरशरणमुपेहि शंकरं वा प्रविश च दुर्गमं रसातलं वा ।
शरवरपरिभिन्नसर्वगात्रं यमसदनं प्रतियापयाम्यहं त्वाम् ॥ १६ ॥

---

हनूमतिति—तत्रभवान् = पूज्य, राघव = राम, किमाह = किं अकथयत् । रामशासन = रामादेशम्, हन्यतां = मार्यताम् । सर्वापराधेषु = सर्वे च ते अपराधाः आगांसि तेषु, अवध्याः = अमारणीयाः । पश्चात् = तदनन्तरम् यथेष्टं = इच्छानुसारम् ।

**अन्वय** —वरशरणं शङ्करं वा उपेहि दुर्गमं रसातलं वा प्रविश च, शरवरपरिभिन्नसर्वगात्रं त्वाम् अहं यमसदनं प्रतियापयामि ।

---

रावण—सुनने से क्या (प्रयोजन) !

विभीषण—हे हनुमान् ! पूजनीय राघव ने क्या कहा है ?

हनुमान्—अरे सुनिए, राम का आदेश ।

रावण—क्या, क्या यह राम का आदेश कहता है तो मार दिया जाय यह वानर ।

विभीषण—प्रसन्न होइए, हे महाराज ! सभी अपराध मे दूत अवध्य होते है । अथवा राम का आदेश सुनकर तत्पश्चात् आप अपनी इच्छानुसार कीजिएगा ।

रावण—हे वानर ! उस मनुष्य राम ने क्या कहा है ।

हनुमान्—अरे ! सुनिए,

रावणः—ह ह ह !

> दिव्यास्त्रैस्त्रिदशगणा मयाभिभूता
> दैत्येन्द्रा मम वशवर्तिन समस्ता. ।
> पौलस्त्योऽप्यपहृतपुष्पकोऽवसन्नो
> भो ! राम. कथमभियाति मानुषो माम् ॥ १७ ॥

---

वरशरणेति—वरशरण = श्रेष्ठाश्रयम्, शङ्कर वा = शिवम् वा, उपेहि = उपगच्छ, दुर्गमम् = अतिदुर्गमम्, रसातल वा = पातालम् वा, प्रविश = प्रवेश कुरु । शरवरपरिभिन्नसर्वगात्र = शरवरेण बाणश्रेष्ठेन परिभिन्नानि परिछिन्नानि सर्वाणि गात्राणि अङ्गानि यस्य तम्, त्व = रावणम्, अह = राम, यमसदन = यमराजगृहम्, प्रतियापयामि = प्रेषयामि । पुष्पिताग्राच्छन्द ।

अन्वयः—मया दिव्यास्त्रै त्रिदशगणा अभिभूत, समस्ता दैत्येन्द्रा मम वशवर्तिन (सन्ति) अपहृतपुष्पक पौलस्त्य अवसन्न । भो ! मानुष राम कथ माम् अभियाति ।

दिव्यास्त्रैरिति—मया = रावणेन, दिव्यास्त्रै = दिव्यायुधै, त्रिदशगणा = देवसमूहा, अभिभूता = पराभूता, समस्ता = सम्पूर्णा, दैत्येन्द्रा = दानवेन्द्रा, मम = रावणस्य, वशवर्तिन = वशीभूता, सन्तीति शेष । अपहृतपुष्पक = अपहृत अछिन्न पुष्पक एतन्नामक विमान यस्मात् स, पौलस्त्य =

---

शङ्कर के श्रेष्ठ शरण में जाओ अथवा दुर्गम पाताल मे प्रवेश करो । मैं (राम) बाणों से छिन्न भिन्न हुए शरीर वाले तुम (रावण) को यमराज के घर भेजूँगा ।

रावण—अहा !

मेरे द्वारा दिव्यास्त्रों से देवगण परास्त कर दिये गये । सम्पूर्ण राक्षसराज मेरे वशीभूत हैं । (मेरे द्वारा) छीन लिए गये पुष्पक (नामक विमान) वाले कुबेर भी नत हो गये हैं । अरे ! मनुष्य राम मुझ पर कैसे आक्रमण करेगा ।

वक्तुम्। मा तावद् भो!

नक्तञ्चरापद! रावण! राघवं तं
वीराग्रगण्यमतुलं त्रिदशेन्द्रकल्पम्।
प्रक्षीणपुण्य! भवता भुवनैकनाथं
वक्तुं किमेवमुचितं गतसार! नीचैः ॥ २१ ॥

**रावण.**—कथं कथं नामाभिधत्ते। हन्यतामयं वानरः। अथवा दूतवधः खलु वचनीयः। शङ्कुकर्ण! लाङ्गूलमादीप्य विसृज्यतामयं वानरः।

---

राघव=रामम्, एवम्=अनेन प्रकारेण, वक्तुम्=कथितुम्, किं युक्तम्=किमुचितम्, अस्तीति शेषः।

अन्वयः—हे नक्तञ्चरापद! प्रक्षीणपुण्य! गतसार! रावण! वीराग्रगण्यम् अतुलं त्रिदशेन्द्रकल्पं भुवनैकनाथं तं राघवम् एवं नीचैः वक्तुं भवता उचितं किम्?

नक्तञ्चरेति—नक्तञ्चरापद=हे राक्षसाधम! प्रक्षीणपुण्य=हे नष्टसत्कर्म! गतसार=हे विनष्टबल! रावण=हे दशानन! वीराग्रगण्य=वीरेषु शूरेषु अग्रगण्यः मुख्यः तम्, अतुलम्=अद्वितीयम्, त्रिदशेन्द्रकल्प=इन्द्रसदृशम्, भुवनैकनाथ=भुवनस्य जगतः एकम् एकमात्रं नाथं प्रभुं तम्, तं=पूर्वोक्तम्, राघव=रामम्, एवम्=अनेन प्रकारेण, नीचैः=सावज्ञम्, वक्तुं=कथितुम्, भवता=रावणेन, किम् उचित=युक्तम्, अस्तीति शेषः। उपमालङ्कारः। वसन्ततिलकाच्छन्दः।

कथमिति—नाम=रावणेति मम नाम, अभिधत्ते=उच्चारयति। दूत-

---

ऐसा कहा जाना क्या उचित है। अरे! ऐसा नहीं—

हे राक्षसाधम! हे नष्ट पुण्य वाले! हे समाप्त बल वाले! हे रावण! अद्वितीय, वीरों में अग्रगण्य, इन्द्र के समान, भुवनों के अकेले स्वामी राम के प्रति आप के द्वारा इस प्रकार कहा जाना क्या उचित है?

रावण—क्यों (मेरा) नाम ले रहा है। मार दिया जाय यह वानर। अथवा दूत का वध निन्दनीय है। हे शङ्कुकर्ण! पूँछ में आग लगाकर यह

शङ्कुकर्णः—यदाज्ञापयति महाराजः। इत इत।

रावणः—अथवा एहि तावत्।

हनूमान्—अयमस्मि।

रावणः—अभिधीयतां मद्वचनात् स मानुषः।

अभिभूतो मया राम! दारापहरणादसि।
यदि तेऽस्ति धनुःश्लाघा दीयतां मे रणो महान्॥ २२॥

हनूमान्—अचिराद् द्रक्ष्यसि।

वधः=दूतमारणं, वचनीयः=निन्दनीयः। लाङ्गूलं=पुच्छम्, आदीप्य=प्रज्ज्वाल्य, विमृज्यतां=मुच्यताम्, अभिधीयतां=कथ्यताम्, मद्वचनात्=ममादेशात्, सः=पूर्वोक्तः, मानुषः=मनुष्यः रामः।

अन्वयः—हे राम! दारापहरणात् मया अभिभूतः असि। यदि ते धनुःश्लाघा अस्ति (तर्हि) मे महान् रणः दीयताम्।

अभिभूत इति—राम=हे राघव! दारापहरणात्=दाराया धर्मपत्न्या अपहरणाद् आनयनात्, मया=रावणेन, अभिभूतः=पराजितः, असि, यदि=चेत्, ते=तव, धनुःश्लाघा=धनुषः चापस्य श्लाघा अभिमानः, तर्हि, मे=मम रावणस्य, महान्=घोरम्, रणः=सङ्ग्रामः, दीयतां=प्रदीयताम्। अनुष्टुप्छन्दः।

अचिरादिति—अचिरात्=शीघ्रम्, द्रक्ष्यसि=अवलोकयिष्यसि।

वानर छोड़ दिया जाय।

शङ्कुकर्ण—जो महाराज की आज्ञा। इधर से, इधर से (आओ)

रावण—अथवा इधर आओ।

हनुमान्—यह मैं हूँ।

रावण—मेरी ओर से उस मनुष्य से कहना—

हे राम! (तुम्हारी) पत्नी का अपहरण होने के कारण मेरे द्वारा अपमानित हुए हो। यदि तुम्हें धनुष पर भरोसा हो तो मुझको महान् युद्ध प्रदान करो (अर्थात् मेरे साथ युद्ध करो)।

हनुमान्—शीघ्र देखोगे—

**विभीषणः**—अभय दातुमर्हति महाराज ।

**रावण**.—दत्तमभयम् । उच्यताम् ।

**विभीषणः**—बलवद्विग्रहश्च ।

**रावणः**—( सरोषम् ) कथ कथ बलवद्विग्रहो नाम ?

शत्रुपक्षमुपाश्रित्य मामय राक्षसाधम ।
क्रोधमाहारयस्तीव्रमभीरुरभिभाषते ॥ २४ ॥

कोऽत्र ?

ममानवेक्ष्य सौभ्रात्र शत्रुपक्षमुपाश्रितम ।
नोत्सहे पुरतो द्रष्टु तस्मादेष निरस्यताम् ॥ २५ ॥

---

गूहसे=गोपायसे, अभय=अभयदानम् । उच्यता=कथ्यताम् । बलवद्विग्रह =बलवता प्रबलेन रामेण विग्रह युद्धम् ।

अन्वय —शत्रुपक्षम् उपाश्रित्य अभीरु अय राक्षसाधम (मम) क्रोधम् आहारयन् मा तीव्रम् अभिभाषते ।

शत्रुपक्षमिति—शत्रुपक्षम्=अरिपक्षम्, उपाश्रित्य=आश्रय गृहीत्वा, अभीरु=निर्भय, अयम्=एष, राक्षसाधम=नीचराक्षस विभीषण, तीव्र=कटु, क्रोध=कोपम्, आहारयन्=जनयन्, अभिभाषते=कथयति । अनुष्टुप्छन्द ।

अन्वय —मम सौभ्रात्रम् अनवेक्ष्य शत्रुपक्षम् उपाश्रितम् (एत) पुरत द्रष्टु न उत्सहे, तस्मात् एष निरस्यताम् ।

---

विभीषण—हे महाराज ! मुझे अभय प्रदान करें ।

रावण—अभय दे दिया । कहो ।

विभीषण—बलवान् से विरोध ।

रावण—(क्रोध के साथ) कैसा, कैसा बलवान् से विरोध ?

यह राक्षसाधम (नीच राक्षस विभीषण) शत्रु (राम) का पक्ष लेकर मुझको तीव्र क्रोध उत्पन्न करता हुआ निडर बातें कर रहा है ।

यहाँ कौन है ?

मेरे सौभ्रात्र (उत्तम भ्रातृभाव) की उपेक्षा करके शत्रुपक्ष से मिल जाने

विभीषण —प्रसीदतु महाराजः अहमेव यास्यामि ।

शासितोऽहं त्वया राजन् ! प्रयामि न च दोषवान् ।
त्यक्त्वा रोषं कामं च यथा कार्यं तथा कुरु ॥ २६ ॥

( परिक्रम्य ) अयमिदानीम्—

अद्यैव तं कमललोचनमुग्रचापं
रामं हि रावणवधाय कृतप्रतिज्ञम् ।

---

समेति—मम = रावणस्य, सौभ्रात्र = सुभ्रातृत्वम्, अनवेक्ष्य = अविचार्य, शत्रुपक्ष = वैरिपक्षम्, उपाश्रितम् = आश्रयगतं विभीषणम्, पुरतः = अग्रे, द्रष्टुं = विलोकितुम्, न उत्सहे = न शक्नोमि, तस्मात् = तस्मात् कारणात्, एष = विभीषण, निरस्यता = निष्काम्यताम् । अनुष्टुप्छन्द ।

अन्वय —हे राजन् ! त्वया शासित अहं प्रयामि (अहं) च दोषवान् न (अस्मि) । रोषं कामं च त्यक्त्वा यथा कार्यं तथा कुरु ।

शासित इति—राजन् = हे नृप ! त्वया = रावणेन, शासित = आदिष्ट, अहं = विभीषण, प्रयामि = गच्छामि, च, दोषवान् = अपराधी, न = नहि अस्मि । रोषं = क्रोधम्, कामं = विषयभोगेच्छाम् च, त्यक्त्वा = परित्यज्य, यथा = येन प्रकारेण, कार्यं = करणीयम्, तथा = तेन प्रकारेण, कुरु = विधेहि । अनुष्टुप्छन्द ।

अन्वय —अद्य एव कमललोचनम् उग्रचापं रावणवधाय कृतप्रतिज्ञं संश्रितहितप्रथितं नृदेवं संश्रित्य नष्टं निशाचरकुलं पुनः उद्धरिष्ये ।

---

वाले (इस विभीषण को) सामने देखने के लिए उत्साह (इच्छा) नहीं करता हूँ, अतः यह दूर किया जाय ।

विभीषण—महाराज प्रसन्न होइए, मैं ही जा रहा हूँ ।

हे राजन् ! आप के द्वारा आदेश दिया गया मैं जा रहा हूँ । (इसमें) मैं दोषी नहीं हूँ । (आप) क्रोध एवं काम का परित्याग करके जैसा किया जाना चाहिए, वैसा कीजिए । (घूमकर) अब यह मैं,

आज ही उस कमल के समान नेत्र वाले, महाधनुर्धारी, रावण के वध के लिए कृतप्रतिज्ञ तथा आश्रित जनों की भलाई करने में प्रसिद्ध मनुष्यदेव

संश्रित्य संश्रितहितप्रथितं नृदेवं
नष्टं निशाचरकुलं पुनरुद्धरिष्ये ॥ २७ ॥

**रावणः**—हन्त निर्गतो विभीषणः। यावदहमपि नगररक्षां सम्पादयामि।

( निष्क्रान्ता )

॥ इति तृतीयोऽङ्कः ॥

—*—

---

अद्यैवेति—अद्य एव = अस्मिन्दिवसे एव, कमललोचनं = राजीवनयनम्, उग्रचापं = भीषणधनुः, रावणवधाय = दशाननमारणाय, कृतप्रतिज्ञं = विहितप्रणम्, संश्रितहितप्रथितम्, = संश्रितानाम् आश्रितानां हितप्रथितम् उपकारख्यातम्, नृदेवं = नरेन्द्रम्, तम् = पूर्वोक्तम् रामं = राघवम् संश्रित्य = आश्रित्य, नष्टं = विनष्टम्, निशाचरकुलं = राक्षसवंशम् पुनः = भूयः, उद्धरिष्ये = उद्धारं करिष्ये। उपमालङ्कारः। वसन्ततिलकाच्छन्दः।

हन्तेति—निर्गतः = निर्यातः। नगररक्षा = पुरीरक्षणम्, सम्पादयामि = करोमि।

॥ इति तृतीयोऽङ्कः ॥

—*—

---

राम का आश्रय लेकर नष्ट राक्षस कुल का फिर उद्धार करूँगा।
( निकल जाता है)

रावण—ओह! विभीषण निकल गया। तो मैं भी नगर की रक्षा करूँगा।

( निकल जाता है )

॥ तृतीय अङ्क समाप्त ॥

—*—

## अथ चतुर्थोऽङ्कः

( ततः प्रविशति वानरकाञ्चुकीयः )

काञ्चुकीयः—भो भो बलाध्यक्ष ! सन्नाहमाज्ञापय वानरवाहिनीम् ।

( प्रविश्य )

बलाध्यक्षः—आर्य ! किंकृतोऽयं समुद्योगः ?

काञ्चुकीयः—तत्रभवता हनुमतानीतः स्वार्यरामस्य देव्याः सीतायाः वृत्तान्तः ।

बलाध्यक्षः—किमिति किमिति ?

काञ्चुकीयः—श्रूयताम्,

---

भो भो इति—भोः = हे ! बलाध्यक्ष = सेनाध्यक्ष । वानरवाहिनीम् = वानराणां वर्तिनां वाहिनीं सेनाम्, सन्नाह = सज्जनाम्, आज्ञापय = आदिश । किंकृत = केन विहितम्, समुद्योग = समुद्यम । तत्रभवतेति—हनुमता = पवनतनयेन, आनीत = आहृतः । वृत्तान्त = समाचार ।

---

( तत्पश्चात् वानरकाञ्चुकीय प्रवेश करता है )

काञ्चुकीय—हे, हे सेनाध्यक्ष ! वानरसेना को तैयार होने का आदेश दीजिए ।

( प्रवेश करके )

सेनाध्यक्ष—हे आर्य ! किसलिए यह तैयारी की जा रही है ।

काञ्चुकीय—पूजनीय हनुमान् के द्वारा सीता देवी का आर्य राम के प्रति समाचार लाया है ।

सेनाध्यक्ष—क्या, क्या ( समाचार है ) ?

काञ्चुकीय—सुनिए—

लङ्कायां किल वर्तते नृपसुता शोकाभिभूता भृशं
　　पौलस्त्येन विहाय धर्मसमयं सक्लेश्यमाना ततः ।
श्रुत्वैतद् भृशशोकतप्तमनसो रामस्य कार्याथिना
　　राज्ञा वानरवाहिनी प्रतिभयासन्नाहमाज्ञापिता ॥ १ ॥

**बलाध्यक्षः**—एवम् ! यदाज्ञापयति महाराज ।

**काञ्चुकीयः**—यावदहमपि सन्नद्धा वानरवाहिनीति महाराजाय निवेदयामि ।

---

अन्वयः—भृशं शोकाभिभूता धर्मसमयं विहाय पौलस्त्येन सक्लेश्यमाना नृपसुता लङ्कायां वर्तते किल । ततः एतत् श्रुत्वा भृशशोकतप्तमनसः रामस्य-कार्यार्थिना राज्ञा प्रतिभयं वानरवाहिनी सन्नाहम् आज्ञापिता ।

लङ्कायामिति—भृशं = अत्यधिकम्, शोकाभिभूता = शोकसन्तप्ता, धर्मसमयं = धर्माचरणम्, विहाय त्यक्त्वा, पौलस्त्येन = रावणेन, सक्लेश्यमाना = पीड्यमाना, नृपसुता = राजकुमारी सीता, लङ्कायाम् = एतन्नामकनगर्याम्, वर्तते = अस्ति । ततः = हनुमतः, एतत् = वृतान्तम्, श्रुत्वा = आकर्ण्य, भृशशोकतप्तमनसः = भृशेन अत्यधिकेन शोकेन दुःखेन तप्तं पीडितं मनः चित्तं यस्य तस्य, रामस्य = राघवस्य, कार्यार्थिना = कार्येच्छुकेन, राज्ञा = नृपेण सुग्रीवेण, प्रतिभया = भीतिकरा, वानरवाहिनी = कपिसेना, सन्नाहं = सज्जताम्, आज्ञापिता = आदिष्टा । शार्दूलविक्रीडितं छन्दः ।

यावदिति—सन्नद्धा = सज्जा, निवेदयामि = सूचयामि ।

---

'धर्म मर्यादा का उलङ्घन करने वाले रावण के द्वारा (नाना प्रकार से) पीडित की जाती हुई अत्यधिक शोकसन्तप्ता राजकुमारी (सीता) लङ्का में है' यह सुनकर अत्यन्त शोक से सन्तप्त हृदय वाले राम के (सीता-प्राप्ति-रूपी) कार्य को करने की इच्छा वाले राजा सुग्रीव के द्वारा शत्रुओं को भयभीत करने वाली वानरसेना को तैयार होने का आदेश दिया गया है ।

सेनाध्यक्ष—ऐसी बात है । महाराज की जैसी आज्ञा ।

काञ्चुकीय—तब तक मैं भी महाराज (सुग्रीव) को सूचित कर दूँ कि वानर-सेना तैयार है ।

( निष्क्रान्तौ )

॥ इति विष्कम्भकः ॥

( ततः प्रविशति रामो लक्ष्मणः सुग्रीवो हनूमांश्च )

रामः—

आक्रान्ताः पृथुसानुकुञ्जगहना मेघोपमाः पर्वताः
सिंहव्याघ्रगजेन्द्रपीतसलिला नद्यश्च तीर्णा मया ।
क्रान्तं पुष्पफलाढ्यपादपयुतं चित्रं महत् काननं
सम्प्राप्तोऽस्मि कपीन्द्रसैन्यसहितो वेलातटं साम्प्रतम् ॥ २॥

अन्वय —पृथुसानुकुञ्जगहना मेघोपमा पर्वता आक्रान्ताः, सिंहव्याघ्रगजेन्द्रपीतसलिला नद्यः च मया तीर्णा, पुष्पफलाढ्यपादपयुत चित्र महत् कानन क्रान्तम्, कपीन्द्रसैन्य सहित (अह) साम्प्रत वेलातट सम्प्राप्त अस्मि ।

आक्रान्ता इति—पृथुसानुकुञ्जगहना = पृथूनि विशालानि यानि सानूनि शिखराणि तेषु ये कुञ्जाः गुल्मानि तैः गहना घना, मेघोपमा. = मेघसदृशा, पर्वता. = गिरय, आक्रान्ता = लङ्घिता । सिंहव्याघ्रगजेन्द्रपीतसलिला = सिंहा केसरिण. च व्याघ्रा शार्दूलाश्च गजेन्द्रा गजराजाश्च तै पीतानि पानकृतानि यानि सलिलानि जलानि यासा ता, नद्य = सरित च, मया = रामेण, तीर्णा. = पारं गतवान् पुष्पफलाढ्यपादपयुत = पुष्पाणि कुसुमानि फलानि प्रसवानि च तै. आढ्या. परिपूर्णा पादपा वृक्षा तै युत युक्तम्, चित्र = आश्चर्यजनकम्, महत् = विशालम्, कानन = वनम्, क्रान्त = लङ्घितम् । कपीन्द्रसैन्यसहित = कपीन्द्रस्य वानरेन्द्रस्य सुग्रीवस्य सैन्येन सेनया सहित युक्त,

( दोनो निकल जाते है )

॥ विष्कम्भक समाप्त ॥

( तत्पश्चात् राम, लक्ष्मण, सुग्रीव तथा हनुमान् प्रवेश करते हैं )

राम—विशाल शिखरो पर वर्तमान कुञ्जो के कारण घने तथा बादल के सदृश पर्वत मेरे (द्वारा) लाँघ दिये गये, अब वानरेन्द्र (सुग्रीव) की सेना के साथ समुद्र तट पर मैं उपस्थित हूँ ।

लक्ष्मणः—एष एष भगवान् वरुण ,
सजलजलधरेन्द्रनीलनीरो
विलुलितफेनतरङ्गचारुहार ।
समधिगतनदीसहस्रबाहु-
र्हरिरिव भाति सरित्पति शयान ॥ ३ ॥

रामः—कथ कथ भो !
रिपुमुद्धर्तुमुद्यन्त मामय सक्तसायकम् ।
सजीवमद्य त कर्तुं निवारयति सागर ॥ ४ ॥

---

साम्प्रतम् = इदानीम्, वेलातट = समुद्रतीरम्, सम्प्राप्त अस्मि = आगत अस्मि । उपमालङ्कार । शार्दूलविक्रीडित छन्द ।

अन्वय.—सजलजलधरेन्द्रनीलनीर विलुलितफेनतरङ्गचारुहार समधिगतनदीसहस्रबाहु सरित्पति शयान हरि इव भाति ।

सजलेति—सजलजलधरेन्द्रनीलनीर = सजल जलभरित य जलधर मेघ तद्वत् य इन्द्रनील इन्द्रनीलमणिरिव नीरम् जलम् यस्य स , विलुलितफेनतरङ्गचारुहार = विलुलिता उत्क्षिप्ता ये फेनतरङ्गा फेनवीचय तै चारु सुन्दर हार माला यस्य स, समधिगतनदीसहस्रबाहु = समधिगतानि प्राप्तानि ये नदीसहस्राणि सरित्सहस्राणि तदेव बाहव भुजा य तथाभूत , सरित्पति = नदीश्वर वरुण , शयान = स्वपन् । हरि इव = विष्णु इव, भाति = शोभते । उपमालङ्कार । पुष्पिताग्राच्छन्द ।

अन्वय —अय सागर रिपुम् उद्धर्तुम् उद्यन्त सक्तसायक माम् अद्य त

---

लक्ष्मण—यह, यह भगवान् वरुण,

जल से युक्त बादल के समान काले जल वाले, फैली हुई तरङ्ग-रूपी सुन्दर हार वाले सरित्पति (वरुण) सोते हुए सहस्रभुज (विष्णु) के समान, मिलने वाली नदी रूपी हजार हाथो से युक्त (होकर) शोभायमान हो रहे हैं ।

राम—अरे ! क्यो क्यो ?

उस (रावण) को सजीव बनाये रखने के लिए यह समुद्र आज शत्रु

सुग्रीवः—अये वियति,

सजलजलदसन्निभप्रकाश
कनकमयामलभूषणोज्ज्वलाङ्गः।
अभिपतति कुतो नु राक्षसोऽसौ
शलभ इवाशु हुताशनं प्रवेष्टुम्॥ ५॥

हनूमान्—भो भो वानरवीरा! अप्रमत्ता भवन्तु भवन्तः।

---

सजीवं कर्तुं निवारयति।

रिपुमिति—अयम्=एष, सागरः=समुद्रः, रिपुं=शत्रुम्, उद्धर्तुं=विनाशयितुम्, उद्यन्तम्=उद्यतम्, सशरासनम्=आरोपितबाणम्, माम्=रामम्, अद्य=अस्मिन् दिवसे, तं=रावणम्, सजीवं=जीवन्तम्, कर्तुं=विधातुम्, निवारयति=रुणद्धि। अनुष्टुप्छन्दः।

अन्वयः—सजलजलदसन्निभप्रकाशः कनकमयामलभूषणोज्ज्वलाङ्गः असौ राक्षसः आशु हुताशनं प्रवेष्टुं शलभः इव कुतः नु अभिपतति।

सजलेति—सजलजलदसन्निभप्रकाशः=सजलेन सनीरेण यः जलदः बादलः तत्सन्निभः सदृशः प्रकाशः कान्तिः यस्य सः, कनकमयामलभूषणोज्ज्वलाङ्गः=कनकमयानि सुवर्णयुक्तानि अमलानि निर्मलानि च यानि भूषणानि आभूषणानि तैः उज्ज्वलानि देदीप्यमानानि अङ्गानि अवयवाः यस्य सः, असौ=अयम्, राक्षसः=निशाचरः, आशु=शीघ्रम्, हुताशनम्=अग्निम्, प्रवेष्टुम्=प्रवेशं कर्तुम्, शलभः इव=पतङ्गः इव, कुतः=कस्मात्, नु=निश्चयेन, अभिपतति=अभिमुखम् आयाति। उपमालङ्कारः। पुष्पिताग्राच्छन्दः।

---

रावण को नष्ट करने के लिए उद्यत तथा धनुष धारण करने वाले मुझको रोक रहा है।

सुग्रीव—अरे दुर्भाग्य!

जल से युक्त बादल के समान कान्ति वाला, सुवर्णयुक्त निर्मल आभूषणों से शोभायमान अङ्गों वाला यह राक्षस आग में प्रवेश करने के लिए (उद्यत) पतङ्ग के समान क्यों आ रहा है।

हनुमान्—हे, हे वानर-वीरो! आप लोग सावधान हो जाँय।

शैलैर्द्रुमैः सम्प्रति मुष्टिबन्धैर्दन्तैर्नखैर्जानुभिरुग्रनादैः ।
रक्षोवधार्थं युधि वानरेन्द्रास्तिष्ठन्तु रक्षन्तु च नो नरेन्द्रम् ॥ ६ ॥

**रामः**—राक्षस इति । हनूमन् ! अलमलं सम्भ्रमेण ।

**हनूमान्**—यदाज्ञापयति देवः ।

( ततः प्रविशति विभीषणः )

**विभीषणः**—भो ! प्राप्तोऽस्मि राघवस्य शिविरसन्निवेशम् । ( विचिन्त्य ) अकृतदूतसम्प्रेषणमविदितागमनममित्रसम्बन्धिनं कथं नु खलु मामवगच्छेत् तत्रभवान् राघवः । कुतः,

---

भो भो इति—वानरवीराः =कपिशूराः , अप्रमत्ताः = सावधानाः ।

अन्वय —सम्प्रति वानरेन्द्राः शैलैः द्रुमैः मुष्टिबन्धैः दन्तैः नखैः जानुभिः उग्रनादैः (च) युधि रक्षोवधार्थं तिष्ठन्तु, नः नरेन्द्रं च रक्षन्तु ।

शैलैः इति—शैलैः =पर्वतैः, द्रुमैः =वृक्षैः , मुष्टिबन्धैः =मुष्टिकाप्रहारैः , दन्तैः =द्विजैः , नखैः =नखरैः , जानुभिः =ऊरुभिः , उग्रनादैः= उच्चगर्जनैः , युधि =युद्धे, रक्षोवधार्थम्=राक्षसमारणाय, तिष्ठन्तु= स्थिताः भवन्तु, नः = अस्माकम्, नरेन्द्रं =राजानम्, च रक्षन्तु=पान्तु । उपजाति छन्दः ।

राक्षस इति—सम्भ्रमः =सभयम्, अलं = व्यर्थं ।

भो इति—राघवस्य=रामस्य, शिविरसन्निवेशं= शिविरस्य सेनानिवासस्य सन्निवेशः स्थानम्, प्राप्तः अस्मि =आगतः अस्मि । अकृतदूतसम्प्रेषणं=

---

पर्वतों, पेड़ों, मुष्टि प्रहारों, दाँतों, नाखुनों, जङ्घाओं तथा घनघोर गर्जना से (आप) वानर गण युद्ध में राक्षसों के वध के लिए उद्यत रहें और हमारे महाराज की रक्षा करें ।

राम—राक्षस है । हे हनुमान् ! घबड़ाना व्यर्थ है

हनुमान्—जो महाराज की आज्ञा

( तत्पश्चात् विभीषण प्रवेश करता है )

विभीषण—अरे ! राघव के शिविर के समीप आ गया हूँ । (सोचकर) बिना दूत भेजे, अतर्कित भाव से उपस्थित मुझ शत्रुसम्बन्धी को पूजनीय राघव क्या समझेंगे । क्योंकि—

क्रुद्धस्य यस्य पुरतः सहितोऽप्यशक्तः
स्थातुं सुरैः सुररिपोर्युधि वज्रपाणिः ।
तस्यानुजं रघुपतिः शरणागतं मां
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥ ७ ॥

अथवा,
दृष्टधर्मार्थतत्त्वोऽयं साधुः संश्रितवत्सलः ।
शङ्कनीयः कथं रामो विशुद्धमनसा मया ॥ ८ ॥

---

अज्ञतम् अविहित दूतसम्प्रेषणं दूतसम्प्रेरणम् येन तम्, अविदितागमनम्= अविदितम् अज्ञातम् आगमनम् उपस्थापन यस्य तम्, अमित्रसम्बन्धिनम्= अमित्रस्य शत्रो. सम्बन्धिन बान्धवम, अवगच्छेत्=अवधारयेत् ।

अन्वय.—क्रुद्धस्य यस्य सुररिपो पुरत सुरै सहित अपि वज्रपाणि स्थातुम् अशक्त तस्य शरणागतम् अनुज माम् रघुपति किं वक्ष्यति इति मे हृदय परिशङ्कितम् ।

क्रुद्धस्येति—क्रुद्धस्य=कुपितस्य, यस्य=रावणस्य, देवरिपो =देवशत्रोः रावणस्य, पुरत =अग्रे, सुरै =देवैभि , सहितैः=सह अपि, वज्रपाणि = इन्द्र , स्थातु =स्थिर भवितुम्, अशक्त =असमर्थ , तस्य=रावणस्य, शरणागतम्=आश्रयप्राप्तम्, अनुजम्=कनिष्ठभ्रातरम्, मा=विभीषणम्, रघुपति =राम , किं वक्ष्यति=किं कथयिष्यति, इति, मे=मम विभीषणस्य, हृदय=अन्त करणम्, परिशङ्कितम्=आशङ्कितम्, अस्तीति शेष । अर्थापत्तिरलङ्कार । वसन्ततिलकाच्छन्द ।

अन्वय —दृष्टधर्मार्थतत्त्व संश्रितवत्सल अयं साधु राम विशुद्धमनसा

---

युद्ध मे क्रोधित जिस देव-शत्रु (रावण) के सामने देवताओ के साथ वज्रपाणि (इन्द्र) भी स्थिर रहने मे असमर्थ थे, उसी के शरणागत अनुज मुझ (विभीषण) को राम क्या कहेंगे ? यह मेरे हृदय मे आशङ्का है ।

अथवा,

धर्म और अर्थ के तत्त्व को जानने वाले, आश्रित जनो (शरणागत लोगो)

(अधोऽवलोक्य) इद रघुकुलवृषभस्य स्कन्धावारम् । यावदतरामि । (अवतीर्त) हन्त इह स्थित्वा ममागमन देवाय निवेदयामि ।

**हनूमान्**—( ऊर्ध्वमवलोक्य ) अये कथ तत्रभवान् विभीषण: !

**विभीषणः**—अये हनूमान् ? हनूमन् ! ममागमन देवाय निवेदय ।

**हनूमान्**—वाढम् । ( उपगम्य ) जयतु जयतु देव. ।

राजस्त्वत्कारणादेव भ्रात्रा निर्विषयीकृत. ।
विभीषणोऽय धर्मात्मा शरणार्थमुपागत ॥ ९ ॥

---

मया कथं शङ्कनीय ।

दृष्टधर्मार्थेति—दृष्टधमार्थतत्त्व = दृष्ट ज्ञात धर्मार्थतत्त्व धमार्थयाथार्थ्यम् येन स, सश्रितवत्सल = सश्रितेषु शरणागतेषु वत्सल स्नेहयुक्त, अयम् = एष पुरोविद्यमान, साधु = सज्जन, राम = राघव, विशुद्धमनसा = पवित्रचेतसा, मया = विभीषणेन, कथ = केन प्रकारेण, शङ्कनीय = शङ्क्य । अनुष्टुप्छन्द ।

इदमिति—इदम् = एतत्पुरोवर्तमानम्, रघुकुलवृषभस्य = रघुवशश्रेष्ठस्य, स्कन्धावार = सेनानिवासम्, स्थित्वा = स्थिति प्राप्य, मम = आत्मन ।

अन्वय —हे राजन् ! त्वत्कारणात् एव भ्राता निर्विषयीकृत अयं धर्मात्मा

---

से प्रेम करने वाले तथा सज्जन ये राम पवित्र हृदय वाले मुझ (विभीषण) के द्वारा शङ्का करने योग्य कैसे है ।

(नीचे की ओर देखकर) यह रघुकुल-श्रेष्ठ (राम) की सेना का निवास-स्थल है । तो उतरता हूँ । (उतरकर) अरे ! यहाँ (ही) रुककर अपने आगमन को महाराज (राम) को सूचित करता हूँ ।

हनुमान्—(ऊपर देखकर) अरे ! क्या पूजनीय विभीषण है ?

विभीषण—अरे ! क्या हनुमान् है ? हे हनुमान् ! मेरे आने को महाराज से सूचित कर दो ।

हनुमान्—अच्छा । (समीप जाकर) विजयी हो, महाराज विजयी हो ।

हे राजन् ! आप (राम) के कारण ही भाई (रावण) के द्वारा निष्कासित ये धर्मात्मा विभीषण आश्रय के लिए आये हैं ।

रामः—कथं विभीषणः शरणागत इति ? वत्स लक्ष्मण ! गच्छ, सत्कृत्य प्रवेश्यतां विभीषणः ।

लक्ष्मणः—यदाज्ञापयत्यार्यः ।

रामः—सुग्रीव ! वक्तुकाममिव त्वां लक्षये ।

सुग्रीवः—देव ! बहुमायाश्छलयोधिनश्च राक्षसाः । तस्मात् सम्प्रधार्य प्रवेश्यतां विभीषणः ।

हनुमान्—महाराज ! मा मैवं,

देवे यथा वयं भक्तास्तथा मन्ये विभीषणम् ।

---

विभीषणः शरणार्थम् उपागतः ।

राजन्निति—राजन्=हे नृप । त्वत्कारणात्=तव हेतोः, भ्रात्रा=अग्रजेन रावणेन, निर्विषयीकृतः=देशात् निष्कासितः, अयम्=एष पुरोविद्यमानः, धर्मात्मा=धर्मशीलः, विभीषणः=एतन्नामकः रावणस्यानुजः, शरणार्थम्=आश्रयार्थम्, उपागतः=उपायातः । अनुष्टुप्छन्दः ।

कथमिति—वत्स=हे भ्रातः, सत्कृत्य=सत्कारं कृत्वा, प्रवेश्यताम्=प्रविष्टः क्रियताम् । वक्तुकामम्=वक्तुं कथितुं कामः इच्छा यस्य तम्, लक्षये=पश्यामि । बहुमायेति—बहुमायाश्छलयोधिनः=बह्वी विपुला माया, मोहनोच्चाटनादिकं येषां ते छलेन कपटेन युद्ध्यन्ते युद्धं कुर्वन्तीति । सम्प्रधार्य=विचार्य । प्रवेश्यताम्=प्रविष्टः क्रियताम् ।

अन्वयः—देवे यथा वयं भक्ताः तथा विभीषणं मन्ये । पूर्वं मया पुरे

---

राम—क्या विभीषण शरण में आये हैं ? हे भाई लक्ष्मण ! जाओ, सत्कार करके विभीषण को ले आओ ।

लक्ष्मण—जो आप की आज्ञा ।

राम—हे सुग्रीव ! मैं समझता हूँ कि (आप) कुछ कहना चाहते हैं ।

सुग्रीव—हे महाराज ! राक्षस बहुत मायावी और छलपूर्वक युद्ध करने वाले होते हैं । तो विचार करके विभीषण को प्रवेश कराया जाय ।

हनुमान्—हे महाराज ! नहीं, ऐसा नहीं ।

जैसे हम महाराज आप के भक्त हैं वैसे ही विभीषण को भी मैं समझता

भ्रात्रा विवदमानोऽपि दृष्ट. पूर्वं पुरे मया ॥ १० ॥

रामः—यद्येवं गच्छ, सत्कृत्य प्रवेश्यतां विभीषणः ।

लक्ष्मणः—यदाज्ञापयत्यार्य. । ( परिक्रम्य ) अये विभीषणः । विभीषण ! अपि कुशली भवान् !

विभीषणः—अये कुमारो लक्ष्मणः ? कुमार ! अद्य कुशली संवृत्तोऽस्मि ।

लक्ष्मणः—विभीषण ! उपसर्पावस्तावदार्यम् ।

विभीषणः—बाढम् ।

( उपसर्पत. )

---

भ्राता विवदमान. अपि दृष्ट' ।

देवे इति–देवे = महाराजे त्वयि, यथा = येन प्रकारेण, वय = हनूमानादयः, भक्ताः = भक्तिपूर्णाः, तथा = तेन प्रकारेण, विभीषणम् = एतन्नामकरावणानुजम्, मन्ये = अवगच्छामि । पूर्वम् = पूर्वकाले, मया = हनुमता, पुरे = लङ्कायाम्, भ्रात्रा = अग्रजेन रावणेन, विवदमान = विवादं कुर्वन्, दृष्टः = विलोकितः । उपमालङ्कारः । अनुष्टुप्छन्द' ।

यदाज्ञापयेति—कुशली = कुशलयुक्तः, उपसर्पावः = समीपं गच्छावः ।

---

हूँ । क्योंकि मेरे द्वारा (लङ्का) नगर मे (आप के लिए) भाई के साथ झगडा करते हुए देखा गया था ।

राम—यदि ऐसा है तो जाओ, सत्कार करके विभीषण को ले जाओ ।

लक्ष्मण—जैसी आर्य की आज्ञा । ( घूमकर ) अरे विभीषण हैं ! हे विभीषण हैं ! आप सकुशल तो हैं ?

विभीषण—अरे कुमार लक्ष्मण हैं ! हे कुमार ! आज सकुशल हो गया हूँ ।

लक्ष्मण—हे विभीषण ! आर्य (राम) के समीप चलिए ।

विभीषण—अच्छा ।

(दोनो समीप जाते हैं)

लक्ष्मणः—जयत्वार्यः ।

विभीषणः—प्रसीदतु देवः । जयतु देव ।

रामः—अये विभीषणः । विभीषण ! अपि कुशली भवान् ?

विभीषण—देव ! अद्य कुशली संवृत्तोऽस्मि ।

भवन्तं पद्मपत्राक्षं शरण्यं शरणागतः ।
अद्यास्मि कुशली राजंस्त्वद्दर्शनविकल्मष ॥ ११ ॥

रामः—अद्यप्रभृति मद्वचनाल्लङ्केश्वरो भव ।

विभीषण.—अनुगृहीतोऽस्मि ।

रामः—विभीषण ! त्वदागमनादेव सिद्धमस्मत्कार्यम् । सागरतरणे

---

अन्वयः—हे राजन् ! पद्मपत्राक्षं शरण्य भवन्त शरणागत (अहं) अद्य कुशली त्वद्दर्शनविकल्मष च अस्मि ।

भवन्तमिति—राजन्=हे भूपाल ! पद्मपत्राक्ष=कमलदलनयनम्, शरण्यं =शरणागतरक्षकम्, भवन्त=रामम्, शरणागत=आश्रयप्राप्तः, अद्य = अस्मिन् दिवसे, त्वद्दर्शनविकल्मष.=तव दर्शनेन विकल्मषः निष्पापः, अस्मि=भवामि । उपमालङ्कार । अनुष्टुप्छन्द. ।

अद्येति—अद्यप्रभृति=अस्मात् दिवसात्, मद्वचनात्=ममादेशात्, लङ्केश्वर.=लङ्केश., अनुगृहीत.=अनुकम्पित. । त्वदागमनात्=तव आगमनात्;

---

लक्ष्मण—आर्य विजयी हो ।

विभीषण—प्रसन्न होइए महाराज ! आप की विजय हो ।

राम—अरे विभीषण है । हे विभीषण ! आप सकुशल तो हैं ?

विभीषण—हे महाराज ! आज सकुशल हो गया हूँ ।

हे राजन् ! कमल-पत्र के समान नेत्र वाले, (शरणागत लोगो के) आश्रय आप की शरण मे आया हुआ मैं आज आप के दर्शन से पाप-रहित होकर सकुशल हो गया हूँ ।

राम—आज से आप मेरे आदेश से लङ्केश्वर होइए ।

विभीषण—अनुगृहीत हूँ ।

राम—हे विभीषण ! आप के आने से ही हमारा कार्य सिद्ध हो गया ।

खलूपायो नाधिगम्यते ।

**विभीषणः**—देव ! किमत्रावगन्तव्यम् । यदि मार्गं न ददाति, समुद्रे दिव्यमस्त्रं विस्रष्टुमर्हति देवः ।

**रामः**—साधु विभीषण ! साधु । भवतु, एवं तावत् करिष्ये । ( सहसोत्तिष्ठन् सरोषम् )

मम शरपरिदग्धतोयपङ्कं हतशतमत्स्यविकीर्णभूमिभागम् ।
यदि मम न ददाति मार्गमेनं प्रतिहतवीचिरवं करोमि शीघ्रम् ॥१२॥

---

सिद्धं=पूर्णम्, अस्मत्कार्यं=अस्माकं कार्यम् । सागरतरणे=समुद्रलङ्घने, उपायः=युक्तिः, न अधिगम्यते=न ज्ञायते । विस्रष्टुं=प्रक्षेप्तुम् ।

अन्वयः—यदि मम मार्गं न ददाति (तर्हि) शीघ्रम् एव एनम् मम शरपरिदग्धतोयपङ्कं हतशतमत्स्यविकीर्णभूमिभागं करोमि ।

ममेति—यदि=चेत्, मम=मह्यम्, मार्गम्=पन्थानम्, न ददाति=न प्रयच्छति, शीघ्रं=त्वरितम्, एनं=समुद्रम्, मम=रामस्य, शरपरिदग्धतोयपङ्कं=शरेण बाणेन परिदग्धे प्लुष्टे तोयपङ्कौ जलकर्दमौ यस्य तम्, हतशतमत्स्यविकीर्णभूमिभागं=हता मृत शतानि अनेकसङ्ख्यकानि ये मत्स्या मीना तैः विकीर्णः व्याप्तः भूमिभागः भूमिप्रदेशः यस्य तम्, प्रतिहतवीचिरवं=प्रतिहतः समाप्तः वीचिरवः तरङ्गशब्दः यस्य तम्, करोमि=विदधे । पुष्पिताग्राच्छन्दः ।

---

समुद्र पार करने का उपाय नहीं समझ में आ रहा है ।

**विभीषण**—हे महाराज ! इसमें क्या समझना है । यदि (समुद्र) रास्ता नहीं देता तो आप समुद्र में दिव्यास्त्र छोड़ सकते हैं ।

**राम**—ठीक है, हे विभीषण ! ठीक है । अच्छा, तो ऐसा ही करता हूँ ।

(सहसा उठकर क्रोध के साथ)

(यह समुद्र) यदि मुझको रास्ता नहीं देता तो इस (समुद्र) को मैं शीघ्र ही अपने बाणों से दग्ध जल तथा पङ्क वाला, (जल सूख जाने से) मरी हुई सैकड़ों मछलियों से व्याप्त-स्थान वाला तथा समाप्त तरंग-ध्वनि वाला बना रहा हूँ ।

( ततः प्रविशति वरुणः )

वरुणः—( ससम्भ्रमम् )

नारायणस्य नररूपमुपाश्रितस्य
कार्यार्थमभ्युपगतस्य कृतापराधः ।
देवस्य देवरिपुदेहहरात् प्रतूर्णं
भीतः शराच्छरणमेनमुपाश्रयामि ॥ १३ ॥

( विलोक्य ) अये अयं भगवान्,

मानुषं रूपमास्थाय चक्रशार्ङ्गगदाधरः ।
स्वयं कारणभूतः सन् कार्यार्थी समुपागतः ॥ १४ ॥

---

अन्वयः—नररूपम् उपाश्रितस्य नारायणस्य कार्यार्थम् अभ्युपगतस्य देवस्य कृतापराधः (अहं) देवरिपुदेहहरात् शरात् भीतः सन् प्रतूर्णम् एनं शरणम् उपाश्रयामि ।

नारायणस्येति—नररूपं = मानुषस्वरूपम्, उपाश्रितस्य = धारयतः, कार्यार्थं = कार्याय, अभ्युपगतस्य = संसारे आगतस्य, नारायणस्य = विष्णोः, देवस्य = महाराजस्य, कृतापराधः = विहितदोषः, अहमिति शेषः, देवरिपुदेहहरात् = देवरिपूणां सुरशत्रूणां देहानां शरीराणां हरात् हरति विनाशयति इति तस्मात्, शरात् = बाणात्, भीतः = त्रस्तः, प्रतूर्णं = शीघ्रम्, एनं = रामम्, शरणम् = आश्रयम्, उपाश्रयामि = गृह्णामि । काव्यलिङ्गमलङ्कारः । वसन्ततिलकाच्छन्दः ।

अन्वयः—स्वयं कारणभूतः चक्रशार्ङ्गगदाधरः मानुषं रूपम् आस्थाय

---

वरुण—(घबराहट के साथ)

मनुष्य का रूप धारण करने वाले, कार्य के लिए आये हुए विष्णुरूप महाराज (राम) के प्रति अपराधी बना हुआ मैं देवताओं के शत्रुओं के शरीर का नाश कर देने वाले बाण से डरा हुआ शीघ्र इनकी (राम की) शरण लेता हूँ । (देखकर) अरे ! ये भगवान् हैं,

स्वयं (संसार के) कारणरूप तथा चक्र, शार्ङ्ग और गदाधारी (विष्णु)

रामः- कथमन्तर्हितो भगवान् वरुणः। विभीषण! पश्य पश्य भगवत्प्रसादान्निष्कम्पवीचिमन्तं सलिलाधिपतिम्।

विभीषण.—देव! साम्प्रतं द्विधाभूत इव दृश्यते जलनिधिः।

रामः—क्व हनूमान्?

हनूमान्—जयतु देवः।

रामः—हनूमन्! गच्छाग्रत।

हनूमान्—यदाज्ञापयति देवः।

( सर्वे परिक्रामन्ति )

रामः—( विलोक्य सविस्मयम् ) वत्स लक्ष्मण! वयस्य विभीषण! महाराज सुग्रीव! सखे हनूमन्! पश्यन्तु पश्यन्तु भवन्तः। अहो विचित्रता सागरस्य इह हि,

---

अस्ति। एष.=अयम्, मार्गः=पन्था, प्रयातु=गच्छतु।

कथमिति—अन्तर्हितः=तिरोहित, भगवत्प्रसादात्=भगवत. वरुणस्य प्रसादात् अनुग्रहात्, निष्कम्पवीचि=निष्कम्पा. निश्चला वीचयः तरङ्गा यस्य तम्, सलिलाधिपतिं=जलस्वामिनम्, । देवेति—देव=हे महाराज! जलनिधिः=समुद्र, द्विधाभूत. इव=द्वयोः भागयोः विभक्त. इव।

वत्सेति—वयस्य=हे मित्र! विचित्रता=आश्चर्यजनकता।

---

राम—क्या भगवान् वरुण अन्तर्धान हो गये। हे विभीषण! देखिए, देखिए। भगवान् वरुण देव की कृपा से समुद्र स्थिर तरंगो वाला हो गया है।

विभीषण—हे महाराज! समुद्र अब दो भागो मे बँटता हुआ-सा दिखलायी पड रहा है।

राम—हनुमान् कहाँ हैं?

हनुमान्—महाराज विजयी होवे।

राम—हे हनुमान्! आगे चलो।

हनुमान्—जैसी महाराज की आज्ञा।

( सभी घूमते हैं )

राम—(देखकर आश्चर्यपूर्वक) हे भाई लक्ष्मण! हे मित्र विभीषण!

क्वचित् फेनोद्गारी क्वचिदपि च मीनाकुलजलः
क्वचिच्छङ्खाकीर्णः क्वचिदपि च नीलाम्बुदनिभः ।
क्वचिद् वीचीमालः क्वचिदपि नक्रप्रतिभयः
क्वचिद् भीमावर्तः क्वचिदपि च निष्कम्पसलिलः ॥१७॥

भगवत्प्रसादादतीतः सागरः ।

---

अन्वय —क्वचित् फेनोद्गारी क्वचित् अपि मीनाकुलजलः, क्वचित् शङ्खाकीर्णः क्वचित् अपि च नक्रप्रभृतयः क्वचित् भीमावतः क्वचित् अपि च निष्कम्पसलिलः (अस्ति) ।

क्वचिदिति—क्वचित्=कस्मिंश्चित् प्रदेशे, फेनोद्गारी=फेनम् डिण्डीरम् उद्गिरति उद्वमति इति सः मीनाकुलजलः=मीनैः मत्स्यैः आकुलं व्याप्तं जलं नीरं यस्य सः, क्वचित्=कस्मिंश्चित् स्थाने, शङ्खाकीर्णः= शङ्खैः कम्बुभिः आकीर्णः व्याप्तः क्वचिदपि=कस्मिंश्चित् प्रदेशेऽपि नीलाम्बुदनिभः=नीलः नीलवर्णः यः अम्बुदः बादलः तन्निभः तत्सदृशः, क्वचित्= कस्मिंश्चित् स्थले, वीचीमालः=वीचीनां तरङ्गाणां माला श्रेणी यस्मिन् सः, क्वचिदपि=कस्मिंश्चिदधिष्ठाने, नक्रप्रतिभयः=नक्रैः कुम्भीरैः प्रतिभयः भयङ्करः, क्वचित्=कस्मिंश्चित्प्रदेशे, भीमावर्तः=भीमाः भयङ्कराः आवर्ताः जलभ्रमयः यस्मिन् सः, क्वचिदपि=कस्मिंश्चित्प्रदेशे, निष्कम्पसलिलः= निश्चलजलः, अस्ति । शिखरिणीच्छन्दः ।

भगवदिति—अतीतः=लङ्घितः । सागरः=समुद्रः ।

---

हे महाराज सुग्रीव ! हे मित्र हनुमान् ! देखिए देखिए आप लोग । यहाँ समुद्र की कैसी विचित्रता है, क्योंकि—

(यह समुद्र) कहीं फेन से व्याकुल, कहीं मछलियों से परिपूर्ण जल वाला, कहीं शङ्खों से व्याप्त, कहीं नीले बादल के समान जल (-युक्त), कहीं तरङ्ग समूहों वाला, कहीं नक्रों के कारण भयानक, कहीं भयङ्कर भँवरों से युक्त और कहीं स्थिर शान्त-जल से युक्त है ।

भगवान् (वरुण) की कृपा से समुद्र पार कर लिया गया ।

हनूमान्—देव ! इयमियं लङ्का ।

रामः–(चिरं विलोक्य) अहो राक्षसनगरस्य श्रीरचिराद् विपत्स्यते ।

मम शरवरवातपातभग्ना कपिवरसैन्यतरङ्गताडितान्ता ।
उदधिजलगतेव नौविपन्ना निपतति रावणकर्णधारदोषात् ॥ १८ ॥

सुग्रीव ! अस्मिन् सुवेलपर्वते क्रियतां सेनानिवेशः । ( उपविशति )

---

अन्वय.—मम शरवरवातपातभग्ना कपिवर सैन्यतरङ्गताडितान्ता (लङ्कापुर्या. श्री.) रावणकर्णधारदोषात् विपन्ना उदधिजलगता नौ इव निपतति ।

अहो इति—राक्षसनगरस्य = राक्षसस्य रावणस्य नगरस्य पुरस्य, श्रीः = समृद्धि , अचिरात् = शीघ्रमेव, विपत्स्यते = विनश्यति ।

ममेति—मम = रामस्य, शरवरवातपातभग्ना = शरवर· बाणश्रेष्ठः एव वात वायु तस्य पातेन आक्रमणेन भग्ना भिन्ना, कपिवरसैन्यतरङ्गताडितान्ता = कपिवरस्य सुग्रीवस्य सैन्यानि सैनिका एव तरङ्गा. वीचय तै. ताडिता: आहता अन्ता प्रान्तभागा. यस्या सा·, उदधिजलगता = समुद्रजलस्थिता, नौ. इव = नौका इव, निपतति = मज्जतीत्यर्थ । उपमा रूपकलङ्कारौ । पुष्पिताग्राच्छन्दः ।

---

हनुमान्—हे महाराज ! यह लङ्का है ।

राम—(देर तक देखकर) ओह ! राक्षस-नगर (लङ्का) की समृद्धि शीघ्र ही नष्ट हो जायेगी ।

रावण-रूपी कर्णधार के अपराध के कारण मेरे बाण-रूपी वायु के गिरने से चूर, तथा वानर-श्रेष्ठ (सुग्रीव) की सेना-रूपी तरगो से उसी प्रकार नष्ट हो जाएगी जैसे समुद्र के जल मे स्थित नौका (वातचालित होकर तरङ्गों द्वारा विनष्ट कर दी जाती है) ।

हे सुग्रीव ! इस सुवेल पर्वत पर सेना का निवास बनाइए । (बैठ जाते हैं) ।

सुग्रीवः—यदाज्ञापयति देव । नील ! एवं क्रियताम् ।

( प्रविश्य )

नीलः—यदाज्ञापयति महाराज । (निष्क्रम्य प्रविश्य) जयतु देव । क्रमान्निवेश्यमानासु सेनासु वृन्दपरिग्रहेषु परीक्ष्यमाणेषु पुस्तकप्रामाण्यात् कुतश्चिदप्यविज्ञायमानौ द्वौ वनौकसौ गृहीतौ । वयं न जानीमः यत्कर्तव्यम् । देवस्तस्मात् प्रमाणम् ।

रामः—शीघ्रं प्रवेशयत्वेतौ ।

नीलः—यदाज्ञापयति देव । ( निष्क्रान्तः )

---

सुग्रीवेति—अस्मिन् = वर्तमाने सुवेलपर्वते = सुवेलनामकपर्वते, सेनानिवेशं = सैन्यनिवासं, क्रियतां = विधीयताम् ।

यदाज्ञापयतीति—यत् = यथा, आज्ञापयति = आदिशति, क्रमात् = क्रमशः, निवेश्यमानासु = स्थाप्यमानासु, सेनासु = सैन्येषु, वृन्दपरिग्रहेषु = वृन्दानां गोलिकसमूहानां परिग्रहेषु ग्रहणेषु, परीक्ष्यमाणेषु = अवेक्ष्यमाणेषु, पुस्तकप्रामाण्यात् = पुस्तकानां पञ्जिकानां प्रामाण्यात् प्रमाणाधारात्, अविज्ञायमानौ = अप्रत्यभिज्ञायमानौ वनौकसौ = वानरौ, गृहीतौ = धृतौ । न जानीमः = न जानामि । तस्मात् = अत एव, कर्तव्यं = करणीयम्, देवः = महाराजः भवान् ।

---

सुग्रीव—जैसी आप की आज्ञा । हे नील ! ऐसा ही करो ।

(प्रवेश करके)

नील—जैसी महाराज की आज्ञा । ( निकल कर पुनः प्रवेश करके ) महाराज विजयी हों । क्रमानुसार सेनाओं के ठहराये जाने के समय (सेना के) समूह की गिनती करने पर लेख (लिस्ट) के सहारे परिश्रम करने पर किसी प्रकार भी न पहचान में आने वाले दो वानर पकड़े गये हैं । हम नहीं जानते कि (उनके प्रति) क्या किया जाय । अतः आप ही प्रमाण हैं ।

राम—वे दोनों शीघ्र लाये जाँय ।

नील—महाराज की जैसी आज्ञा । (निकल जाता है)

( ततः प्रविशति नीलो वानरैर्गृह्यमाणौ वानररूपधारिणौ
सम्पुटिकाहस्तौ शुकसारणौ च )

**वानराः**—अङ्को भणध। के तुम्हे भणध। [अङ्गो भणतम्। कौ युवां भणतम्।]

**उभौ**—भट्टा! अम्हे अय्यकुमुदस्य सेवआ। [भर्तः! आवामार्य कुमुदस्य सेवकौ।]

**वानराः**—भट्टा! अय्यकुमुदस्य सेवअत्ति अत्ताणं अवदिसन्ति। [भर्तः! आर्यकुमुदस्य सेवकावित्यात्मानमपदिशतः।]

**विभीषणः**—( सावधानं शुकसारणौ विलोक्य )

स्वसैनिकौ न चाप्येतौ वनौकसौ।
प्रेषितौ रावणेनैतौ राक्षसौ शुकसारणौ॥ १९॥

---

ततेति—वानरैः = कपिभिः गृह्यमाणौ = आकृष्यमाणौ, वानररूपधारिणौ = कपिस्वरूपधारकौ, सम्पुटिकाहस्तौ सम्पुटिका पेटिका हस्ते करे ययो तौ।

अङ्गो इति—भणत = कथयतम्, आर्यकुमुदस्य=आर्यस्य पूजनीयस्य कुमुदस्य एतन्नामकस्य सुग्रीवसेनापतेः, सेवकौ = भृत्यौ। आत्मन = स्वम्, अपदिशत = छलपूर्वकं कथयत।

अन्वयः—एतौ न च अपि स्वसैनिकौ न च अपि एतौ वनौकसौ (स्तः)। एतौ (तु) रावणेन प्रेषितौ शुकसारणौ राक्षसौ (स्तः)।

---

(तत्पश्चात् नील तथा वानरों द्वारा पकड़े गये, पेटी बँधी हाथ वाले वानररूप धारी शुक और सारण प्रवेश करते हैं)

वानर—अरे! बताओ, तुम दोनों कौन हो?

दोनों—हे स्वामी! हम आर्य कुमुन्द के सेवक हैं।

वानर—हे स्वामी! ये दोनों आर्य कुमुद का सेवक बतलाते हैं।

विभीषण—(सावधानी से शुक और सारण को देखकर)

ये दोनों न अपने सैनिक हैं और न दोनों वानर ही हैं। ये दोनों रावण द्वारा भेजे गये शुक और सारण (नामक) राक्षस हैं।

उभौ—( आत्मगतम् ) हन्त कुमारेण विज्ञातौ स्व । ( प्रकाशम् ) आर्य ! आवां खलु राक्षसराजस्य विप्रतिपत्त्या विपद्यमानं राक्षसकुलं दृष्ट्वास्पदमलभमानौ आर्यमश्रयार्थं वानररूपेण सम्प्राप्तौ ।

राम.—वयस्य ! विभीषण ! कथमिव भवान् मन्यते ।

विभीषण—देव !

एतौ हि राक्षसेन्द्रस्य सम्मतौ मन्त्रिणौ नृप !
प्राणान्तिकेऽपि व्यसने लङ्केशं नैव मुञ्चतः ॥ २० ॥

---

स्वसैनिकौ इति—एतौ=इमौ पुरोविद्यमानौ, स्वसैनिकौ=स्वौ स्वकीयौ सैनिकौ भटौ, न=नहि स्त, न च=न चापि, इमौ, वनौकसौ= वानरौ, स्त । एतौ=इमौ, रावणेन=दशाननेन, प्रेषितौ=प्रहितौ, शुकसारणौ=एतन्नामकौ, राक्षसौ=निशाचरौ, वर्तते । अनुष्टुप्छन्द ।

हन्तेति—कुमारेण=विभीषणेन, विज्ञातौ=प्रत्यभिज्ञातौ, आवां=द्वौ, राक्षसराजस्य=राक्षसेन्द्रस्य रावणस्य, विप्रतिपत्त्या=विपरीतबुद्ध्या, विपद्यमानं=विनश्यमानम्, राक्षसकुलं=रजनीचरवंशम्, दृष्ट्वा=विलोक्य, आस्पदं=स्थानम्, अलभमानौ=न प्राप्नुवन्तौ, आर्यमश्रयार्थं=भवतः शरणाय, सम्प्राप्तौ=आगतौ ।

अन्वय—हे नृप ! एतौ राक्षसेन्द्रस्य सम्मतौ मन्त्रिणौ स्त प्राणान्तिके व्यसने अपि लङ्केशं न एव मुञ्चत ।

एतौ इति—नृप=हे राजन् ! राक्षसराजस्य=राक्षसेन्द्रस्य रावणस्य,

---

दोनों—(अपने मन में) ओह ! कुमार (विभीषण) द्वारा हम दोनो पहचान लिये गये । (प्रकटरूप मे) हे आर्य ! राक्षसराज (रावण) की दुर्बुद्धि के कारण विपत्ति मे पडे राक्षसकुल को देखकर स्थान पाने की इच्छा से वानर के रूप में हम दोनो आप की शरण मे आये हैं ।

राम—हे मित्र विभीषण ! आप क्या समझते हैं ?

विभीषण—हे महाराज !

हे राजन् ! ये दोनो राक्षसेन्द्र (रावण) के अतिप्रिय मन्त्री हैं । प्राणान्तकारक कष्ट मे लङ्केश (रावण) को नहीं छोडेंगे ।

तस्मात् यथार्हं दण्डमाज्ञापयतु देवः ।

रामः—विभीषण ! मा मैवम् ।

अनयोः शासनादेव न मे वृद्धिर्भविष्यति ।
क्षयो वा राक्षसेन्द्रस्य तस्मादेतौ विमोचय ॥ २१ ॥

लक्ष्मणः—यदि विमुञ्चेत्, सर्वस्कन्धावारं प्रविश्य परीक्ष्य पुनर्मोक्षमाज्ञापयत्वार्यः ।

---

सम्मतौ = प्रियौ, मन्त्रिणौ = अमात्यौ, स्त इति शेषः । प्राणान्तिकेऽपि = प्राणघातकेऽपि, व्यसने = सङ्कटे, लङ्केश = रावणम्, नैव = नहि एव, मुञ्चत = त्यजतः । अनुष्टुप्छन्दः ।

तस्मादिति—तस्मात् = अत एव, यथार्हं = यथोचितम् दण्डम् = शासनम्, आज्ञापयतु = आदिशतु ।

अन्वयः—अनयोः शासनात् एव मे वृद्धिः राक्षसेन्द्रस्य क्षयः वा न भविष्यति, तस्मात् एतौ विमोचय ।

अनयोः इति—अनयोः = एतयोः, शासनात् = दण्डात्, एव, न = नहि, मे = मम रामस्य, वृद्धिः = अभ्युदय, वा = अथवा, राक्षसेन्द्रस्य = रावणस्य, क्षय = नाश, भविष्यति, तस्मात् = अतएव, एतौ = इमौ, विमोचय = मुक्तौ कारय । अनुष्टुप्छन्दः ।

यदीति—विमुञ्चेत् = मुक्तं कुर्यात्, सर्वस्कन्धावारं = सर्वश्चासौ स्कन्धावार सेनानिवासम्, प्रविश्य = गत्वा, परीक्ष्य = निरीक्ष्य, मोक्षं = विमुक्तिम्, आज्ञापयतु = आदिशतु ।

---

अतः आप यथायोग्य दण्ड का आदेश दीजिए ।

राम—हे विभीषण ! ऐसा मत कहो ।

इन दोनों को दण्ड देने से मेरा अभ्युदय अथवा राक्षसेन्द्र (रावण) की अवनति नहीं होगी, अतः इन दोनों को छोड़ दीजिए ।

लक्ष्मण—यदि छोड़ना है तो सेना-निवास में प्रवेश कराकर (घुमाकर) तथा (सम्पूर्ण सैनिकों को) दिखलाकर तब आप छोड़ने का आदेश दीजिए ।

राम —सम्यगभिहितं लक्ष्मणेन । नील ! एवं क्रियताम् ।

नील —यदाज्ञापयति देव ।

राम —अथवा एहि तावत् ।

उभौ—इमौ स्व

राम —अभिधीयतां मद्वचनात् स राक्षसेन्द्रः,

मम दारापहारेण स्वयङ्ग्राहितविग्रहः ।
आगतोऽहं न पश्यामि द्रष्टुकामो रणातिथिः ॥ २२ ॥

उभौ—यदाज्ञापयति देवः । ( निष्क्रान्तौ )

राम —विभीषण ! वयमपि तावदान्तरीयं बलं परीक्षिष्यामहे ।

---

सम्यगिति—सम्यक् = उचितम् अभिहितं = कथितम् क्रियताम् = अनुष्ठीयताम् ।

अन्वय —मम दारापहारेण स्वयग्राहितविग्रहः आगतः रणातिथिः (अहं) द्रष्टुकामः (त्वां) न पश्यामि ।

ममेति—मम = रामस्य, दारापहारेण = भार्यापहरणेन स्वयग्राहितविग्रहः = स्वयम् आत्मना एव ग्राहितं ग्रहणं कारितं विग्रहः युद्धम् यस्य सः, आगतः = आयातः, रणातिथिः = रणाय युद्धाय अतिथिः आगन्तुकः, द्रष्टुकामः = वि...क्षितुमभिलाषः न = नहि पश्यामि = अवलोकयामि । अनुष्टुप्छन्दः ।

---

राम—लक्ष्मण के द्वारा ठीक कहा गया । हे नील ! ऐसा ही करो ।

नील—जो महाराज की आज्ञा ।

अथवा—तब तक यहाँ आओ ।

राम—मेरे कथनानुसार रावण से कह देना—

मेरी (राम की) पत्नी का अपहरण करके आप के द्वारा स्वयं शत्रुता ग्रहण की गयी है । अतः युद्ध के लिये आया हुआ अतिथि मैं (आप को) देखना चाहता हूँ किन्तु देख नहीं रहा हूँ ।

दोनों—जो महाराज की आज्ञा । (दोनों निकल जाते हैं )

राम—हे विभीषण ! तब तक हम भी अपनी आन्तरिक सेना को

**विभीषण** —यदाज्ञापयति देव ।

**राम** —( परिक्रम्य विलोक्य ) अये अस्तमितो भगवान् दिवाकर । सम्प्रति हि,

अस्ताद्रिमस्तकगत प्रतिसहृताशु
सन्ध्यानुरञ्जितवपु प्रतिभाति सूर्य ।
रक्तोज्ज्वलाशुकवृते द्विरदस्य कुम्भे
जाम्बूनदेन रचित पुलको यथैव ।। २३ ।।

---

विभीषणेति—वयम् = राम , अपि, आनन्तरीय = सामीप्यम् बल = सैन्यम्, परीक्षिष्यामहे = निरीक्षिष्यामहे । अस्तम् इत = अस्ताचल गत, दिवाकर = सूर्य ।

अन्वय —अस्ताद्रिमस्तकगत प्रतिसहृताशु सन्ध्यानुरञ्जितवपु सूर्य रक्तोज्ज्वलाशुकवृते द्विरदस्य कुम्भे जाम्बूनदेन रचित पुलक यथा एव प्रतिभाति ।

अस्ताद्रीति—अस्ताद्रिमस्तकगत = अस्तस्य अस्तगमनस्य अद्रि = पर्वत तस्य मस्तक शिखर गत यात, प्रतिसहृताशु = प्रतिसहृता सङ्कोचिता अशव किरण येन स, सन्ध्यानुरञ्जितवपु = सन्ध्यया सायकालेन अनुरञ्जित रक्तीकृत वपु शरीर यस्य स सूर्य = भानु, रक्तोज्ज्वला शुकवृते = रक्त लोहवर्ण उज्ज्वल शुभ्र यत् अशुक कौशेयवस्त्र तेन वृते

---

जांच कर लें ।

विभीषण—जो महाराज की आज्ञा ।

राम—(घूमकर और देखकर) अरे ! भगवान् सूर्य डूब रहे हैं । क्योंकि इस समय—

अस्ताचल के शिखर पर पहुँचे हुए, समेटे हुए किरण समूह वाले तथा सन्ध्या कालीन लालिमा से युक्त शरीर वाले सूर्य ऐसा प्रतीत हो रहा है जैसे लाल तथा उज्ज्वल वस्त्र आच्छादित गजकुम्भ पर सुवर्ण से बनाया गया तिलक हो ।

**राक्षसः**—प्रसीदतु प्रसीदतु महाराजः । अतिपातिवृत्तान्तनिवेदनत्वरयावस्थान्तरं नावेक्षितम् ।

**रावणः**—ब्रूहि ब्रूहि । किं कृतं मनुजतापसेन ।

**राक्षसः**—श्रोतुमर्हति महाराजः तेन खलु,

उदीर्णसत्त्वेन महाबलेन लङ्केश्वर त्वामभिभूय शीघ्रम् ।
सलक्ष्मणेनाद्य हि राघवेण प्रसह्य युद्धे निहतः सुतस्ते ॥ ११ ॥

---

रामेणेति—अतिपातिवृत्तान्तनिवेदनत्वरयावस्थान्तरं=अतिपाति अत्यावश्यकं यः वृत्तान्तः समाचारः तस्य निवेदनस्य विज्ञापनस्य त्वरया शीघ्रतया अवस्थान्तरम् अन्य अवस्था स्थिति इति अवस्थान्तरम्, न अवेक्षितम्=न ध्यानं दत्तम् । मनुजतापसेन=मनुष्यतपस्विना, किं=किं कार्यम्, कृतं=विहितम् ।

अन्वयः—उदीर्णसत्त्वेन महाबलेन सलक्ष्मणेन राघवेण हि लङ्केश्वर त्वां शीघ्रम् अभिभूय युद्धे अद्य प्रसह्य हि ते सुतः निहतः ।

उदीर्णेति—उदीर्णसत्त्वेन=दृढनिश्चययुक्तेन, महाबलेन=अतिबलशालिना, सलक्ष्मणेन=लक्ष्मणसहितेन, राघवेण=रामेण, हि=निश्चयेन, त्वां=भवन्तम्, लङ्केश्वरं=लङ्काधिपतिम्, शीघ्रं=त्वरया, अभिभूय=तिरस्कृत्य, युद्धे=रणे, अद्य=अस्मिन्दिवसे, प्रसह्य=बलात्, ते=तव, सुतः=पुत्रः, हतः=व्यापादितः । अनुष्टुप्छन्दः ।

---

राक्षस—प्रसन्न होइए, महाराज प्रसन्न होइए । अत्यावश्यक समाचार की सूचना देने की शीघ्रता के कारण (मेरे द्वारा) अन्य अवस्था का ध्यान नहीं दिया गया ।

रावण—कहो, कहो उस मनुष्य तपस्वी द्वारा क्या किया गया ।

राक्षस—महाराज सुनिए । उसके द्वारा,

बढ़े हुए निश्चय वाले, महाबलशाली लक्ष्मण के साथ (उस) राम के द्वारा, आप लङ्केश्वर (रावण) को शीघ्र तिरस्कृत करके, आज युद्ध मे आप का बेटा (मेघनाथ) बलात् मार दिया गया ।

रावण —आ दुरात्मन् ! समरभीरो !

देवा. सेन्द्रा जिता येन दैत्याश्चापि पराङ्मुखा ।
इन्द्रजित् सोऽपि समरे मानुषेण निहन्यते ॥ १२ ॥

राक्षस —प्रसीदतु महाराज । महाराजपादमूले कुमारमन्तरेणा-नृत नाभिधीयते ।

रावणः—हा वत्स ! मेघनाद ! । (इति मूर्च्छित पतति)

राक्षसः—महारा !ज समाश्वसिहि समाश्वसिहि ।

रावणः—(प्रत्यभिज्ञाय)

हा वत्स ! सर्वजगता ज्वरकृत् ! कृतास्त्र !
हा वत्स ! वासवजिदानतवैरिचक्र ! ।

---

अन्वयः—येन सेन्द्राः देवाः जिता दैत्या च अपि पराङ्मुखाः, स अपि इन्द्रजित् समरे मानुषेण निहन्यते ।

देवा. इति—येन=मेघनादेन, सेन्द्रा =इन्द्रेण सहिता , देवा =सुरा , दैत्याश्च=असुराश्च, अपि, पराङ्मुखा =विमुखा अभवन्, स =इन्द्रजित् मेघनाद अपि, समरे=युद्धे , मानुषेण=मानवेन, निहन्यते=मार्यते । अनुष्टुप्छन्दः ।

अन्वयः—हा वत्स ! सार्वजगता ज्वरकृत् ! कृतास्त्र ! हा वत्स ! वासवजित् ! आनतवैरिचक्र ! हा वत्स ! वीर ! गुरुवत्सल युद्धशौण्ड ! हा वत्स !

---

रावण—अरे दुरात्मा ! युद्ध मे डरने वाले !

जिस (मेघनाथ) के द्वारा इन्द्र के सहित देवता पराजित कर दिये गये तथा दैत्य (युद्ध से) भगा दिये गये, वह इन्द्रजित् भी युद्ध मे मनुष्य के द्वारा मार दिया गया ।

राक्षस—महाराज प्रसन्न होइए । कुमार (मेघनाथ) के विषय मे आपके समक्ष झूठ कैसे बोलूँगा ।

रावण—हाय बेटा मेघनाथ ! (मूर्च्छित होकर गिर जाता है ) ।

राक्षस—हे महाराज ! धैर्य रखिए ।

रावण—(पहचान कर) हाय बेटा ! हे सभी लोको को ज्वर पैदा करने वाले ! अस्त्रो के अभ्यासी ! हाय बेटा ! इन्द्र को पराजित कर देने वाले !

तृतीय —एते चापि द्रष्टव्या भवद्भ्याम्,

निशितविमलखड्गा क्रोधविस्फारिताक्षा
विमलविकृतदंष्ट्रा नीलजीमूतकल्पा ।
हरिगणपतिसैन्यं हन्तुकामा समन्ताद्
रभसविवृतवक्त्रा राक्षसा सम्पतन्ति ॥ ४ ॥

---

एते इति —एते =पुरोविद्यमाना, पादपशैलभग्नशिरस =पादपा वृक्षा शैला च पर्वता च तै भग्नानि खण्डितानि शिरासि मस्तकानि येषा ते मुष्टि प्रहारै, मुष्टीना =मुष्टिकाना प्रहारै आघातै, हता =मारिता, क्रुद्धै = कुपितै अतिबलै =अति अतिशयिते बल सामर्थ्यम् येषा तै, उत्पुच्छकर्णै = उत् ऊर्ध्वं पुच्छानि लाङ्गूलानि कर्णा च श्रोत्राणि च येषा तै, वानरयूथपै =वानराणा शाखामृगाणा यूथपै दलपतिभि, वृता =परिवेष्टिता, कण्ठ ग्राहविवृत्तभुग्ननयनै =कण्ठस्य गलप्रदेशस्य ग्राहेण गहणेन विवृतानि घूर्णितानि अतएव भुग्नानि उच्चानि निर्गतानि नयनानि नत्राणि येषा तै, दष्टोष्ठ तीव्रै =दष्ट्रा दन्तै खण्डिता ये ओष्ठा दन्तच्छदा तै तीव्रं भीषणै, मुखै = आननै रक्षोगणा =राक्षसाना गणा समूहा, समरे=युद्धे वज्रेण=इन्द्र कुलिशेन, हता =मारिता, शैला इव=पर्वता इव, आशु=शीघ्रम्, पातिता =धराशायिन कृता । उपमालङ्कार । शार्दूलविक्रीडित छन्द ।

अन्वय —निशितविमलखड्गा क्रोधविस्फारिताक्षा विमलविकृतदंष्ट्रा नीलजीमूतकल्पा हरिगणपतिसैन्यं हन्तुकामा रभसविवृतवक्त्रा समन्ताद् सम्पतन्त राक्षसा (द्रष्टव्या)।

---

निकली हुई आखों वाले तथा दांतो से कटे हुए ओठ के कारण भयङ्कर मुख वाले राक्षसो के समूह (इन्द्र द्वारा) वज्र से मारे गये पवत के समान युद्ध मे शीघ्र (मार कर) गिरा दिये गये हैं

तृतीय—और आप दोनो के द्वारा ये भी देखे जाने चाहिए।

तेज और चमकते हुए खड्गो वाले, क्रोध के कारण विस्फारित आखो वाले, स्वच्छ (सफेद) और भयङ्कर दाढ़ो वाले, नीले बादल के समान,

प्रथमः—अहो नु खलु,

बाणाः पात्यन्ते राक्षसैर्वानरेषु

द्वितीयः—शैला क्षिप्यन्ते वानरैर्नैर्ऋतेषु ।

तृतीयः—मुष्टिप्रक्षेपैर्जानुसङ्घट्टनैश्च

सर्वे—भीमश्चित्रं भोः ! सम्प्रमर्दः प्रवृत्तः ॥ ५ ॥

---

निशितेति—निशितविमलखड्गाः=निशिता तीक्ष्णा च ये विमलाः स्वच्छा च खड्गाः कृपाणा, क्रोधविस्फारिताक्षा=क्रोधेन कोपेन विस्फारिते स्फारीकृते अक्षिणी नयने यै. ते, विमलविकृतदंष्ट्रा=विमला. स्वच्छा विहृता. कराला दन्ता. दीर्घदन्ता. येषा ते; नीलजीमूतकल्पा=नीला श्यामा ये जीमूता. मेघा. तेषा कल्पाः सदृशाः, हरिगणपतिसैन्यं=हरीणां वानराणां ये गणा समूहा तेषा ये पतयः अध्यक्षा तेषा सैन्यं सेनाम्, हन्तुकामा=हन्तु व्यापादयितुं काम अभिलाष येषा ते, रभसविवृतवक्त्रा=रभसेन वेगेन विवृतानि उद्घाटितानि वक्त्राणि मुखानि यै ते, समन्तात्=परितः, सम्पतन्तः=आक्रमण कुर्वन्तः, राक्षसा.=असुराः, (भयङ्करा द्रष्टव्याः) ।

अन्वय—राक्षसै वानरेषु बाणाः पात्यन्ते वानरै नैर्ऋतेषु शैलाः क्षिप्यन्ते, मुष्टिप्रक्षेपै. जानुसङ्घट्टनैः च भीम सम्मर्दः प्रवृत्त इति भो ! चित्रम् ।

बाणेति—राक्षसैः=असुरैः, वानरेषु=कपिषु, बाणा=शरा., पात्यन्ते

---

वानरों के समूहों के प्रधानों की सेनाओं को मारने की इच्छा वाले, तथा युद्ध के उत्साह के कारण मुँह बाये हुए ये राक्षस चारों ओर से (वानर-सेना) पर टूट रहे हैं ।

प्रथम—ओह ! आश्चर्य है—

राक्षसों के द्वारा वानरों पर बाण फेंके जा रहे हैं... ।

द्वितीय—वानरों के द्वारा राक्षसों पर पर्वत फेंके जा रहे हैं... ।

तृतीय—मुष्टिप्रहारों तथा घुटनों की टक्करों द्वारा... ।

सभी—अरे भयङ्कर युद्ध हो रहा है ।

**प्रथमः**—रावणमपि पश्येता भवन्तौ,

कनकरचितदण्डा शक्तिमुल्लालयन्त
विमलविकृतदंष्ट्रं स्यन्दनं वाहयन्तम् ।
उदयशिखरमध्ये पूर्णबिम्बं शशाङ्कं
ग्रहमिव भगणेशं राममालोक्य रुष्टम् ॥ ६ ॥

---

=क्षिप्यन्ते, वानरैः=कपिभिः, नैऋतेषु=राक्षसेषु, शैलाः=पर्वताः, क्षिप्यन्ते=पात्यन्ते, मुष्टिप्रक्षेपैः=मुष्टिना मुष्टिकानाम् प्रक्षेपैः प्रहारैः,जानुसङ्घट्टनैः=जानुभ्याम् उरुपर्वभ्याम्, सङ्घट्टनैः अभिघातैः च, भीमः=भयङ्कर, सम्प्रमर्दः=सम्पीडनम्, प्रवृत्तः=आरब्धः, इति भोः, चित्रम्=आश्चर्यकरम्, वर्तते इति योजनीयम् । वैश्वदेवीच्छन्दः ।

अन्वयः—कनकरचितदण्डां शक्तिम् उल्लालयन्तं, विमलविकृतदंष्ट्रं स्यन्दनं वाहयन्तं, उदयशिखरिमध्ये पूर्णबिम्बं भगणेशं शशाङ्कम् आलोक्य रुष्टं ग्रहम् इव रामम् आलोक्य रुष्टं (रावणं पश्येताम्) ।

कनकेति—कनकरचितदण्डा=कनकेन सुवर्णेन रचितः निर्मितः दण्डः यष्टिः यस्याः ताम्, शक्तिः=प्रक्षेपास्त्रविशेषम्, उल्लालयन्तम्=उपरि घूर्णयन्तम्, विमलविकृतदंष्ट्रं=विमला निर्मला विकृता भयङ्करा च दंष्ट्रा दीर्घदशनं यस्य तम्, स्यन्दनं=रथम्, वाहयन्तं=चालयन्तम्, उदयशिखरिमध्ये=उदयस्य सूर्योदयस्य शिखरी पर्वतः तस्य मध्ये मध्यभागे, पूर्वबिम्बं=अविकलमण्डलम्, भगणेशं=भानां ग्रहनक्षत्राणां ईशम् अधिपतिम्, शशाङ्कं=शशः शशकः अङ्कः चिह्नं यस्मिन् तम्, चन्द्रमित्यर्थः, आलोक्य=विलोक्य, रुष्टं=क्रुद्धम्, रावणमपि पश्येताम् । उपमालङ्कारः । मालिनीच्छन्दः ।

---

प्रथम—आप दोनों इस रावण को देखिए—

सुवर्ण-निर्मित दण्ड वाली शक्ति को ऊपर घुमाते हुए, श्वेत और भयङ्कर दाढ़ी वाले, रथ को हांकते तथा उदयाचल के मध्य पूर्णमण्डल वाले नक्षत्रेश चन्द्रमा को देखकर क्रोधित राहु के समान राम को देखकर क्रोधित हुए (रावण को देखिए) ।

द्वितीयः—राममपि पश्यतां भवन्तौ ।

सव्येन चापमवलम्ब्य करेण वीर-
मन्येन सायकवरं परिवर्तयन्तम् ।
भूमौ स्थितं रथगतं रिपुमीक्षमाणं
क्रौञ्चं यथा गिरिवरं युधि कार्तिकेयम् ॥ ७ ॥

तृतीयः—हहह !!!

रावणेन विमुक्तेयं शक्तिः कालान्तकोपमा ।
रामेण स्मयमानेन द्विधा छिन्ना धनुष्मता ॥ ८ ॥

---

अन्वय—सव्येन करेण चापम् अवलम्ब्य अन्येन (दक्षिणेन) सायकवरं परिवर्तयन्तं भूमौ स्थितं युधि गिरिवरं क्रौञ्चम् ईक्षमाणम् कार्तिकेयं यथा (रामं पश्यताम्) ।

सव्येनेति—सव्येन = वामेन, करेण = हस्तेन, चाप = धनु, अवलम्ब्य = अवधाय, अन्येन = वामेतरेण दक्षिणेन, सायकवर = बाणश्रेष्ठम्, परिवर्तयन्त = भ्रमयन्तम्, भूमौ = पृथिव्याम्, स्थित = वर्तमानम्, युधि = युद्धे, गिरिवर = पर्वतश्रेष्ठम्, क्रौञ्च = एतन्नामकं पर्वतविशेषम्, ईक्षमाणं = पश्यन्तम्, कार्तिकेय यथा = कार्तिकेयमिव, युधि = युद्धे, रिपु = शत्रुं रावणम्, ईक्षमाणम्, वीर = शूरम्, राममपि पश्यताम् ।

अन्वय—रावणेन कालान्तकोपमा इयं शक्तिः विमुक्ता धनुष्मता रामेण स्मयमानेन द्विधा छिन्ना ।

---

द्वितीय—आप दोनों राम को भी देखिए—

बाएँ हाथ में धनुष पकड़ कर दूसरे (दाहिने) हाथ से उत्तम बाण को घुमाते हुए, भूमि पर खड़े तथा युद्ध में पर्वतश्रेष्ठ क्रौञ्च को देखते हुए कार्तिकेय के समान रथस्थ (रथ पर सवार) शत्रु (रावण) को देखते हुए वीर (राम) को (भी देखिए) ।

तृतीय—ओह !

रावण के द्वारा (राम पर) छोड़ी गयी तथा हँसते हुए प्रलयकालीन मृत्यु-सदृश यह शक्ति, धनुर्धारी राम के द्वारा दो भागों में काट दी गयी ।

वाहितो रथः।

द्वितीयः—उपस्थित मातलिं दृष्ट्वा तस्य वचनाद् रथमारूढवान् राम.।

तृतीयः—एष हि,

सुरवरजयदर्पदेशिकेऽस्मिन् दितिसुतनाशकरे रथे विभाति।
रजनिचरविनाशकारणः सन्स्त्रिपुरवधाय यथा पुरा कपर्दी ॥ १२ ॥

---

=द्योतित. इव, युद्धसामान्यजनितशङ्केन=युद्धस्य समरस्य सामान्य समानता तस्मिन् जाता उत्पन्ना शङ्का सशय. यस्य तेन, महेन्द्रेण=शक्रेण, प्रेषित.=प्रहित, मातलिवाहित—मातलिना एतन्नामकेन सारथिना वाहित चालित-रथ =स्यन्दन।

उपस्थितमिति—उपस्थितम्=आगतम्, मातलि=इन्द्रसारथिम्, दृष्ट्वा=अवलोक्य, तस्य=मातले, वचनात्=कथनात्, राम.=राघव, रथं=स्यन्दनम्, आरुढवान्।

अन्वय—सुरवरजयदर्पदेशिके दितिसुतनाशकरे अस्मिन् रथे एष हि राम. रजनिचरविनाशकरण सन् पुरा त्रिपुरवधाय कपर्दी यथा विभाति।

सुरवरेति—सुरवरजयदर्पदेशिके=सुरवरस्य इन्द्रस्य जयदर्पयो. देशिके उपदेशके, दितिसुतनाशकरे=दितिसुताना राक्षसाणा नाशकरे क्षय-कारिणे, रथे=स्यन्दने, एष=पुरोवर्तमान, राघव=राम, हि=निश्चयेन, रजनिचरविनाशकारण=रजनिचरस्य रावणस्य विनाशस्य सहारस्य कारण

---

भेजा गया मातलि-वाहित (=मातलि द्वारा हांका जाता हुआ) रथ है।

द्वितीय—आये हुए मातलि को देखकर उसके कहने से राम रथ पर चढ गये।

तृतीय—क्योंकि यह—

इन्द्र की विजय और गर्व का उपदेशक तथा दैत्यों के विनाशकारी इस रथ पर (आरुढ) और राक्षस (रावण) के विनाश के लिए कारण बने हुए राम इस प्रकार शोभायमान हो रहे हैं जैसे प्राचीनकाल में त्रिपुर (नामक राक्षस) के बध के लिए शङ्कर हों।

**तृतीय**—रावणमपि पश्येता भवन्तौ ।

शरैर्भीमवेगैर्हयान् मर्दयित्वा ध्वज चापि शीघ्र बलेनाभिहत्य ।
महद् बाणवर्षं सृजन्त नदन्त हसन्त नृदेव भृश भीपयन्तम् ॥१५॥

**प्रथमः**—एप हि राम ,

---

परिवर्तमानौ = परिभ्रमन्तौ, बाणगणान् = शरसमूहान्, वमन्तौ = उद्गिरन्तौ, एतौ = पुरोवर्तमानौ रामरावणौ, नभसि = आकाशे, भ्रमन्तौ = भ्रमण कुर्वन्तौ, स्वरश्मिजालै = आत्मीयकिरणसमूहै, धरणिं = पृथिवीम, दहन्तौ = प्लोषन्तौ, द्वौ सूर्यौ इव = द्वौ भास्करौ इव, विभात शोभत ।

**अन्वय**—भीमवेगै शरै हयान् मर्दयित्वा, ध्वज च अपि बलेन शीघ्रम् अभिहत्य महद् बाणवर्षं सृजन्त नन्दत हसन्त नृदेव भृश भीपयन्तम् (रावण मपि पश्येताम्) ।

**शरैर्भीमैरिति**—भीमवेगै = भयङ्करवेगै शरै = बाणै, हयान् = रथस्य अश्वान्, मर्दयित्वा = जर्जरीकृत्य, ध्वजाश्च = पताकामपि, बलेन = बलपूर्वकेण, शीघ्र = त्वरितम्, अभिहत्य = आक्रम्य, महत् = विपुलम्, बाण-वर्षम् = शरवृष्टिम्, सृजन्त = जनयन्तम् नन्दन्त = गर्जन्तम्, हसन्त = स्मयमानम्, नृदेव = रामम्, भृशम् = अत्यन्तम्, भीपयन्त = भाययन्तम्, रावणम् अपि पश्येयाम् । दीपकालङ्कार । भुजङ्गप्रयात छन्द ।

---

को छोडते हुए ये दोनो ( राम और रावण ) ऐसे शोभायमान हो रहे हैं मानो आकाश मे घूमते हुए तथा अपनी किरण से पृथिवी को जलाते हुए दो सूर्य हो ।

तृतीय—आप दोनो रावण को भी देखिए—

भयङ्कर वेग वाले बाणो से (राम के रथ के) घोडो को क्षत विक्षत करके तथा झण्डे पर शीघ्र ही बलपूर्वक आघात करके महान् बाणो की वर्षा करते हुए, गर्जन करते हुए (रावण को देखिए) जो हँसते हुए नरपति (राम) को अत्याधिक डरा रहा है ।

प्रथम—यह राम भी—

स्थानाक्रामणवामनीकृततनु किञ्चित् समाश्वास्य वै
तीव्रं बाणमवेक्ष्य रक्तनयनो मध्याह्नसूर्यप्रभ ।
व्यक्त मातलिना स्वयं नरपतिर्दत्तास्पदो वीर्यवान्
क्रुद्धः सहितवान् वरास्त्रममितं पैतामहं पार्थिव ॥ १६ ॥

द्वितीयः—एतदस्त्रं,
रघुवरभुजवेगविप्रमुक्तं ज्वलनदिवाकरयुक्ततीक्ष्णधारम् ।

---

अन्वय —स्थानाक्रामणवामनीकृततनु किञ्चित् समाश्वास्य तीव्र बाणम् अवेक्ष्य रक्तनयन मध्याह्नसूर्यप्रभ मातलिना स्वयं दत्तास्पद वीर्यवान् नरपति क्रुद्ध सन् अमित पैतामह वरास्त्र सहितवान् ।

स्थानेति—स्थानाक्रामणवामनीकृततनु =स्थानेन दृढस्थित्या आक्रामणम् आक्रमण तस्मिन् वामनीकृता न्युब्जीकृता तनु शरीर यस्य स, किञ्चित् =ईषद् वै=निश्चयेन, समाश्वास्य=श्वासग्रहण कृत्वा तीव्र =तीक्ष्णम्, बाण=शरम्, अवेक्ष्य=विलोक्य रक्तनयन =लोहितनेत्र, मध्याह्नसूर्यप्रभ = मध्याह्नसमयस्य सूर्यस्य भास्वरस्य प्रभा कान्ति इव कान्ति यस्य स, व्यक्त =स्पष्टम् मातलिना=इन्द्रसारथिना, स्वयम्=आत्मना दत्तास्पद=दत्त स्थानम् आस्पद स्थान यस्मै स, वीर्यवान्=वीर, नरपति =नरेन्द्र पार्थिव =राम, क्रुद्ध =कुपित सन्, अमितम्=अपरिमेयम्, पैतामह= ब्राह्मम्, वरास्त्रम् =श्रेष्ठप्रक्षेपास्त्रम्, सहितवान्=आरोपितवान् । उपमा दीपक चालङ्कारो । शार्दूलविक्रीडित छन्द ।

अन्वय —रघुवरभुजवेगविप्रमुक्त ज्वलनदिवाकरयुक्ततीक्ष्णधार (अस्त्र)

---

दृढ-स्थिति से आक्रमण में शरीर को बौना बनाए हुए थोड़ा स्थिर होकर, (रावण के) तीक्ष्ण बाण को देखकर लाल आँखें किये, मध्याह्न-कालीन सूर्य के तेज के समान तेज वाले, स्पष्टत मातलि के द्वारा स्वयं (रथ में खिसककर) दिये हुए स्थान से युक्त, वीर राजा (राम) ने क्रुद्ध होकर (अपने) पितामह द्वारा प्राप्त उत्कृष्ट ब्रह्मास्त्र को चढ़ा लिया है।

द्वितीय—यह अस्त्र,
राम के बाहु वेग से छोड़ा गया, अग्नि और सूर्य से युक्त तेज धार

रजनिचरवर निहत्य सङ्ख्ये पुनरभिगच्छति राममेव शीघ्रम्॥१७॥

**सर्वे**—हन्त निपातितो रावण ।

**प्रथमः**—

रावण निहत दृष्ट्वा पुष्पवृष्टिर्निपातिता ।
एता नदन्ति गम्भीर भेर्यस्त्रिदिवसद्मनाम् ॥ १८ ॥

**द्वितीयः**—भवतु । सिद्ध देवकार्यम् ।

---

सङ्ख्ये रजनिचरवर निहत्य पुन शीघ्र रामम् एव अभिगच्छति ।

रघुवरेति—रघुवरभुजवेगविप्रमुक्त = रघुवरस्य रामस्य भुजस्य बाहो वेगेण रयेण विप्रमुक्त त्यक्तम्, ज्वलनदिवाकरयुक्ततीक्ष्णधार = ज्वलन अग्नि दिवाकर च सूर्य च ताभ्या युक्ता मिलिता तीक्ष्णा निशिता धारा अग्रम् यस्य तत्, एतत् - पुरोवर्तमानम्, अस्त्र = ब्रह्मास्त्रम्, सङ्ख्ये = युद्धे, रजनिचरवर = रजनिचरेषु राक्षसेषु वर मुख्य रावणम, निहत्य = हत्वा, पुन = भूय, शीघ्र = त्वरितम्, रामम् एव = राघवमेव, अभिगच्छति = अभियाति । पुष्पिताग्राच्छन्द ।

अन्वय —रावण निहत दृष्ट्वा पुष्पवृष्टि निपातिता एता त्रिदिवसद्मना भेर्य गम्भीर नदन्ति ।

रावणमिति—रावण = दशाननम्, निहत = मारितम्, दृष्ट्वा = अवलोक्य, पुष्पवृष्टि = पुष्पाणा प्रसूनाना वृष्टि वर्षम्, निपतिता = उपरिष्टात् देवादिभि कृता । एता = इमा , त्रिदिवसद्मना = देवानाम्, भेर्य = दुन्दुभय , गम्भीर = उच्चम्, नदन्ति = ध्वनि कुर्वन्ति । अनुष्टुपच्छन्द ।

सिद्धमिति—सिद्ध = पूर्णम्, देवकार्य = राक्षसविनाशरूपसुरकार्यम् सर्व-

---

वाला (यह ब्रह्मास्त्र) युद्ध मे राक्षसश्रेष्ठ (रावण) को मारकर फिर शीघ्रतापूर्वक राम के पास आ रहा है ।

सभी—ओह ! रावण गिर गया ।

प्रथम—रावण को मारा हुआ देखकर (देवताओ द्वारा) पुष्पवर्षा की गयी तथा (स्वर्ग मे) देवताओ की दुन्दुभी बज रही है ।

द्वितीय—ठीक है, देवकार्य पूरा हो गया ।

प्रथम—तदागम्यताम्। वयमपि तावत् सर्वहितं रामं सम्भावयिष्याम।

उभौ—बाढम्। प्रथमः कल्पः।

(निष्क्रान्ताः सर्वे)

॥ इति विष्कम्भकः ॥

(ततः प्रविशति रामः)

राम—

हत्वा रावणमाहवेऽद्य तरसा मद्बाणवेगार्दितं
कृत्वा चापि विभीषणं शुभमतिं लङ्केश्वरं साम्प्रतम्।
तीर्त्वा चैवमनल्पसत्त्वचरितं दोर्भ्यां प्रतिज्ञार्णवं
लङ्कामभ्युपयामि बन्धुसहितः सीतां समाश्वासितुम् ॥ १९ ॥

---

हितः=सकलहितकारकम् सम्भावयिष्याम=सत्करिष्याम। प्रथम=उत्तम, कल्प=विचार।

॥ इति विष्कम्भक ॥

अन्वय—अद्य आहवे मद्बाणवेगार्दितं रावणं तरसा हत्वा शुभमतिं विभीषणं च साम्प्रतं लङ्केश्वरं कृत्वा दोर्भ्याम् अनल्पसत्त्वचरितं प्रतिज्ञार्णवं च तीर्त्वा बन्धुसहितः (अहं) सीतां समाश्वासितुं लङ्काम् अभ्युपयामि।

हत्वेति—अद्य=अस्मिन् दिवसे आहवे=युद्धे मद्बाणवेगार्दितं=मद्बाण मम शरः तस्य वेगेन रयेण आर्दितम् आहतम् रावणं=दशाननम् तरसा=

---

प्रथम—तो आओ हम लोग भी सभी लोगों का कल्याण करने वाले राम का अभिनन्दन करें।

दोनों—ठीक है (यह) अच्छा विचार है।

(सभी निकल जाते हैं)

॥ विष्कम्भक समाप्त ॥

(तत्पश्चात् राम प्रवेश करते हैं)

राम—आज युद्ध में मेरे बाण के वेग से पीडित रावण को मारकर, और पवित्र बुद्धि वाले विभीषण को लङ्का का राजा बनाकर बड़े बड़े

( प्रविश्य )

**लक्ष्मण** —जयत्वार्य । आर्य ! एषा ह्यार्यार्यस्य समीपमुपसर्पति ।

**रामः**—वत्स ! लक्ष्मण !

> अपायाच्च हि वैदेह्या उषितायाः रिपुक्षये ।
> दर्शनात् साम्प्रत धैर्यं मन्युर्मे वारयिष्यति ॥ २० ॥

---

शीघ्रम्, हत्वा = व्यापाद्य, शुभ्रमति = विमलबुद्धिम् विभीषण च = रावणानुज च, साम्प्रतम् = इदानीम्, लङ्केश्वर = लङ्काधिपतिम्, कृत्वा = विधाय दोर्भ्याम् = बाहुभ्याम्, अनल्पसत्त्वचरित = अनल्पानि महान्तिसत्त्वचारितानि बलकार्याणि यस्मिन् तम्, प्रतिज्ञार्णव = प्रतिज्ञा प्रण एव अर्णव समुद्र तम्, तीर्त्वा = पार कृत्वा, बन्धुसहित = बन्धुना बान्धवेन सहित युक्त, सीता = जानकीम्, समाश्वासितुम् = आश्वासन दातुम्, लङ्का = एतन्नामकनगरम्, अभ्युपयामि = अभिगच्छामि । रूपकदीपको अलङ्कारौ । शार्दूलविक्रीडित छन्द ।

अन्वय —अपायात् हि रिपुक्षये उषितायाः च वैदेह्या दर्शनात् मन्यु मे धैर्यं साम्प्रत वारयिष्यति ।

अपायेति—दूरमपगमनात्, रिपुक्षये = रिपो रावणस्य क्षये गृहे, उषितायाः निवासितायाः, वैदेह्या = सीतायाः, दर्शनात् = विलोकनात्, मन्यु

---

सात्त्विक आचरणों वाले प्रतिज्ञा रूपी सागर को अपनी भुजाओं के (बल) द्वारा पार करके अब भाई लक्ष्मण के साथ सीता को आश्वस्त करने के लिए लङ्का को जा रहा हूँ।

( प्रवेश करके )

लक्ष्मण—आर्य विजयी होवें। हे आर्य ! यह आर्या (सीता) आर्य (आप) के समीप आ रही है।

राम—हे भाई लक्ष्मण !

(मुझसे) दूर चली जाने के कारण तथा शत्रु (रावण) के घर मे निवास किये हुई जानकी को देखकर मेरा क्रोध धैर्य को निश्चित ही रोक देगा।

लक्ष्मणः—यदाज्ञापयत्यार्यः। ( निष्क्रान्तः )

( प्रविश्य )

विभीषणः—जयतु देवः।

एषा हि राजंस्तव धर्मपत्नी त्वद्बाहुवीर्येण विधूतदुःखा।
लक्ष्मीः पुरा दैत्यकुलच्युतेव तव प्रसादात् समुपस्थिता सा॥ २१॥

रामः—विभीषण! तत्रैव तावत् तिष्ठतु रजनिचरगृहसंसर्गजनितकलङ्का इक्ष्वाकुकुलस्याङ्कभूता। राजानं दशरथं पितरमुद्दिश्य न युक्तं मे

=शोकः, हि=निश्चयेन, मे=मम, धैर्यम्=उत्साहम्, वारयिष्यति=रोत्स्यति। काव्यलिङ्गमलङ्कारः। अनुष्टुप्छन्दः।

अन्वयः—हे राजन्! त्वद्बाहुवीर्येण विधूतदुःखा एषा हि सा तव धर्मपत्नी पुरा दैत्यकुलच्युता लक्ष्मीः इव तव प्रसादात् (त्वां) समुपस्थिता।

एषेति—राजन्=हे नरेन्द्र! त्वद्बाहुवीर्येण=तव रामस्य बाह्वोः भुजयोः वीर्येण शौर्येण, विधूतदुःखा=विधूतं निराकृतं दुःखं कष्टं यस्याः सा, एषा=पुरोवर्तमाना, सा=पूर्वोक्ता, तव=रामस्य, धर्मपत्नी=भार्या, पुरा=प्राचीनकाले, दैत्यकुलच्युता=दानववंशमुक्ता, लक्ष्मीः इव=श्रीरिव, तव=रामस्य, प्रसादात्=अनुग्रहात्, समुपस्थिता=आगता। उपमालङ्कारः। उपजातिश्छन्दः।

विभीषणेति—रजनिचरगृहसंसर्गजनितकलङ्का=रजनिचरस्य रावणस्य य

लक्ष्मण—जैसी आप की आज्ञा। (निकल जाता है)

( प्रवेश करके )

विभीषण—महाराज विजयी होंवें।

हे राजन्, आप के बाहुबल के द्वारा दूर हुए कष्टों वाली, यह वही आप की धर्मपत्नी, प्राचीन-काल में दैत्य-कुल से उन्मुक्त लक्ष्मी की भाँति, आप की कृपा से आप के पास उपस्थित हैं।

राम—हे विभीषण! राक्षस (रावण) के घर में दूषित (अत एव) इक्ष्वाकु-वंश की कलङ्क-स्वरूपा हुई वह (सीता) तब तक वहीं रहे। हे लङ्केश्वर! पिता दशरथ का विचार करके उस (सीता को) मेरे द्वारा देखा

लङ्काधिपते ! मां द्रष्टुम् । अपि च,

मज्जमानमकार्येषु पुरुषं विषयेषु वै ।
निवारयति यो राजन् ! स मित्रं रिपुरन्यथा ॥ २२ ॥

विभीषणः—प्रसीदतु देव ।

रामः—नार्हति भवानतः परं पीडयितुम् ।

( प्रविश्य )

लक्ष्मणः—जयत्वार्यः । आर्यस्याभिप्रायं श्रुत्वैवाग्निप्रवेशाय प्रसादं

---

अवमर्शः सम्पर्कः तेन जातम् उत्पन्नं यत् लाञ्छनं यस्याः सा, इक्ष्वाकुकुलस्य =रघुवंशस्य, अङ्कभूता=कलङ्कभूता, उद्दिश्य=लक्ष्यीकृत्य, न युक्तम्=उचितम् नास्ति ।

अन्वय—हे राजन् ! यः अकार्येषु विषयेषु मज्जमानं पुरुषं निवारयति, स वै मित्रम् अन्यथा रिपुः ।

मज्जमानेति—हे राजन्=भो नृपेन्द्र ! यः, अकार्येषु=कर्तुमयोग्येषु कर्मसु, विषयेषु=इन्द्रियोपभोग्यवस्तुषु मज्जमानं=निमग्नीभवन्तम्, पुरुषं =जनम्, निवारयति=दूरीकरोति, ■=पूर्वोक्तः जनः, वै=निश्चयेन, मित्रं=सखा, अन्यथा=इतरथा, रिपुः=शत्रुः, अस्तीति शेषः । अनुष्टुप्छन्दः ।

नार्हतीति—न अर्हति=न योग्योऽस्ति, भवान्=विभीषणः, अतः= अस्मात्, परम्=अधिकम्, पीडयितुं=पीडितं कर्तुम् ।

आर्यस्येति—आर्यस्य=पूजनीयस्य भवतः रामस्य, अभिप्रायम्=

---

जाना उचित नहीं है। और भी—

हे राजन् ! जो अकरणीय विषयों में डूबते हुए व्यक्ति को हटाता है, वही मित्र है अन्यथा वह शत्रु है।

विभीषण—हे महाराज प्रसन्न होइए।

राम—आप इससे अधिक मुझे कष्ट न दें।

( प्रवेश करके )

लक्ष्मण—आर्य विजयी होवें। आप के अभिप्राय को सुनकर आर्या

प्रतिपालयत्यार्या ।

रामः—लक्ष्मण ! अस्याः पतिव्रतायाश्छन्दमनुतिष्ठ ।

लक्ष्मणः—यदाज्ञापयत्यार्यः । (परिक्रम्य) भोः कष्टम् !

विज्ञाय देव्याः शौचं च श्रुत्वा चार्यस्य शासनम् ।
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मम ॥ २३ ॥

कोऽत्र ।

( प्रविश्य )

हनूमान्—जयतु कुमारः ।

---

आशयम्, श्रुत्वा=आकर्ण्य, अग्निप्रवेशाय=अग्नौ वह्नौ प्रवेशाय प्रवेष्टुम्, आर्या=पूजनीया सीता, प्रसादम्=अनुमतिम्, प्रतिपालयति=प्रतीक्षते ।

अस्याः इति—पतिव्रतायाः=सत्याः नार्याः, छन्द=इच्छाम्, अनुतिष्ठ=कुरु ।

अन्वय—देव्याः शौचं विज्ञाय आर्यस्य च शासनं श्रुत्वा धर्मस्नेहान्तरे न्यस्ता मम बुद्धिः दोलायते ।

विज्ञायेति—देव्याः=महिष्याः सीतायाः, शौच=पवित्रताम्, विज्ञाय=अवबोध्य, आर्यस्य=रामस्य, शासनम्=आज्ञाम्, श्रुत्वा=आकर्ण्य, धर्मस्नेहान्तरे=धर्मानुरागमध्ये, न्यस्ता=स्थिता, मम=लक्ष्मणस्य, बुद्धिः=मतिः, दोलायते=दोलायमाना भवति । सन्देहालङ्कारः । अनुष्टुप्छन्दः ।

---

(सीता) अग्नि में प्रवेश करने के लिए (आप के) अनुमति की प्रतीक्षा कर रही है ।

राम—हे लक्ष्मण ! इस पतिव्रता (सीता) की इच्छा पूरी करो ।

लक्ष्मण—जैसी आप की आज्ञा । (घूमकर) अरे ! कष्ट है ।

देवी (सीता) की पवित्रता जानकर तथा आर्य (राम) का आदेश सुनकर धर्म और स्नेह के बीच में पड़ी बुद्धि झूल रही है ।

यहाँ कौन है ?

( प्रवेश करके )

हनुमान्—कुमार विजयी होवें ।

रामः—(सविस्मयम्) किमिति किमिति।
लक्ष्मण.—अहो, आश्चर्यम्।

( प्रविश्य )

सुग्रीवः—जयतु देव.।

को नु खल्वेष जीवन्तीमादाय जनकात्मजाम्।
प्रणम्यरूप सम्भूतो ज्वलतो हव्यवाहनात्॥ २६॥

लक्ष्मणः—अये अयमार्या पुरस्कृत्येत एवाभिवर्तते भगवान् विभावसुः।

---

वर्धिता वृद्धि प्राप्ता प्रभा कान्ति यस्या सा, स्खलनात्=अग्ने, निर्विकार=विकाररहितम्, उपगता=वह्निर्निर्गता। परिकराङ्कुर. छेकानुप्रास चालङ्कारौ। अनुष्टुप्छन्द।

अन्वय—जीवन्ती जनकात्मजाम् आदाय ज्वलत हव्यवाहनात् सम्भूतः प्रणम्यरूप क नु खलु एष (अस्ति)।

को नु इति—जीवन्ती=सजीवताम्, जनकात्मजा=जानकीम्, आदाय =गृहीत्वा, ज्वलत =देदीप्यमानात्, हव्यवाहनात्=अग्ने, सम्भूत = उद्गत, प्रणम्यरूप.=प्रणम्य वन्दनीय रूप स्वरूप यस्य स, क नु=वितर्क, खलु=निश्चयेन अस्ति।

अयमिति—अय =पुरोवर्तमान, आर्या =सीताम्, पुरस्कृत्य=अग्रे कृत्वा, विभावसु =अग्नि, अभिवर्तते=आगच्छति। उपसर्पाम.=समीप गच्छामः, नारायण.=विष्णु, देवेश=देवेश्वर।

---

राम—( आश्चर्य के साथ ) यह क्या, यह क्या ?

(प्रवेश करके)

सुग्रीव—महाराज विजयी होवे।

जीवित जानकी को लेकर जलती अग्नि से निकला हुआ वन्दनीय स्वरूप वाला यह कौन है।

लक्ष्मण—अरे! आर्या (सीता) को आगे करके यह भगवान् अग्निदेव इधर ही आ रहे हैं।

राम—अये अय भगवान् हुताशन. उपसर्पामस्तावत् ।

(सर्वे उपसर्पन्ति)

(तत प्रविशत्यग्नि सीता गृहीत्वा )

अग्निः—एष भगवान् नारायण. । जयतु देव ।

रामः—भगवन् ! नमस्ते ।

अग्नि.—न मे नमस्कार कर्तुमर्हति देवेश ।

इमा गृह्णीष्व राजेन्द्र ! सर्वलोकनमस्कृताम् ।
अपापामक्षता शुद्धा जानकी पुरुषोत्तम ! ॥ २७ ॥

अपि च,

इमा भगवती लक्ष्मी जानीहि जनकात्मजाम् ।
सा भवन्तमनुप्राप्ता मानुषी तनुमास्थिता ॥ २८ ॥

---

अन्वय —हे राजेन्द्र ! पुरुषोत्तम ! सर्वलोकनमस्कृता अपापाम् अक्षता शुद्धाम् इमा जानकी गृह्णीष्व ।

इमामिति—राजेन्द्र=हे नृपेन्द्र ! पुरुषोत्तम=हे नरश्रेष्ठ, सर्वलोक-नमस्कृता=सर्वे सकला ते लोका जगन्ति तैं नमस्कृता प्रणताम्, अपापा=पापरहिताम्, अक्षता=क्षतिरहिताम्, शुद्धा=पवित्राम्, इमा=पुरोवर्तमानाम्, जानकी=जनकात्मजाम्, गृह्णीष्व=स्वीकुरु । अनुष्टुप्छन्द ।

अन्वय —इमा जानकात्मजा भगवती लक्ष्मी जानीहि । मानुषी तनुम् आस्थिता सा भवन्तम् अनुप्राप्ता ।

---

राम—अरे ! ये भगवान् अग्निदेव हैं तो (उनके) समीप चलते हैं ।

( सभी लोग समीप जाते हैं )

(तत्पश्चात् सीता को लेकर अग्निदेव प्रवेश करते हैं)

अग्नि—ये भगवान् विष्णु हैं । महाराज विजयी होवें ।

राम—हे भगवान् ! आपको नमस्कार है ।

अग्नि—देवाधिपति को मुझे नमस्कार नहीं करना चाहिए ।

हे पुरुषोत्तम राजेन्द्र ! सभी लोगों द्वारा नमस्कार की जाने वाली, निष्पाप, अक्षत तथा पवित्र इस सीता को स्वीकार कीजिए ।

और भी—

इस जानकी को आप भगवती लक्ष्मी समझिए । मनुष्य-देह में स्थित यह

स्वैरं रूपमुपस्थितेन भवता देव्या यथा साम्प्रतं
हत्वा रावणमाहवे न हि तथा देवाः समाश्वासिताः ॥ ३१ ॥

अग्निः—भद्रमुख ! एते देवदेवर्षिसिद्धविद्याधरगन्धर्वाप्सरोगणाः स्वविभवैर्भवन्त वर्धयन्ति ।

रामः—अनुगृहीतोऽस्मि ।

---

(समाश्वासिताः )यथा स्वैरं रूपम् उपस्थितेन आहवे रावण हत्वा देव्या (सह) भवता साम्प्रतं समाश्वासिता ।

मग्नेयमिति—जले=तोये, मग्ना=बूडिता, इयम्=एषा, भूमि= पृथिवी, हि=निश्चयेन, वराहवपुषा=शूकरशरीरेण, त्वया एव=भवता एव, उद्धृता=उपरि आनीता । सुरपते=हे सुरेश ! त्वया=भवता, पादत्रयेण= पादाना पादक्रमणा त्रयेण त्रिकेन, भुवनत्रयं=लोकत्रयम्, विक्रान्त=लङ्घितम्, तदानीमिति शेष , देवा:=सुरा:, न हि=नैव, तथा=तेन प्रकारेण, यथा= येन प्रकारेण, स्वैर=स्वेच्छया, रूप=स्वरूपम्, उपस्थितेन=प्राप्तेन, आहवे=युद्धे, रावणं=दशाननम्, हत्वा=मारयित्वा, देव्या=सीतया, भवता=त्वया, साम्प्रतम्=अधुना, समाश्वासिता=आश्वासिता: । शार्दूलविक्रीडित छन्दः ।

भद्रमुखेति—भद्रमुख=हे कल्याणमुख ! एते=पुरोवर्तमाना, देवदेवर्षिसिद्धविद्याधरगन्धर्वाप्सरोगणा =देवा सुरा देवर्षय: दिव्यर्षय सिद्धा: देवयोनिविशेषा विद्याधरा: देवयोनिविशेषा अप्सरस देवयोनिविशेषाश्च तेषा गणा. समूहा । स्वविभवै:=आत्मीयस्थित्यै , भवन्त रामम्, वर्धयन्ति=

---

स्वेच्छानुसार रूप-धारण करने वाले आप के द्वारा (उस समय) देवता वैसे नही आश्वस्थ किये गये जैसे इस युद्ध मे रावण को मार कर देवी (सीता के) साथ (आप द्वारा) इस समय आश्वस्त हुए ।

अग्नि—हे भद्रमुख ! देवता, देवर्षि, सिद्ध, विद्याधर, गन्धर्व, अप्सरागण अपनी स्थितियो के अनुसार आप को बधाई दे रहे हैं ।

राम—मैं अनुगृहीत हूँ ।

अग्निः—भद्रमुख ! अभिषेकार्थमित इतो भवान् ।

रामः—यदाज्ञापयति भगवान् ।

( निष्क्रान्तौ )

( नेपथ्ये )

जयतु देवः । जयतु स्वामी । जयतु भद्रमुखः । जयतु महराज । जयतु रावणान्तकः । जयत्यायुष्मान् ।

विभीषणः—एष एष महाराजः,

तीर्त्वा प्रतिज्ञार्णवमाहवेऽद्य
सम्प्राप्य देवीं च विधूतपापाम् ।
देवैः समस्तैश्च कृताभिषेको
विभाति शुभ्रे नभसीव चन्द्रः ॥ ३२ ॥

---

वर्धापनं ददति । अभिषेकार्थम्=राज्याभिषेकाय, रावणान्तकः=रावणस्य दशाननस्य अन्तकः विनाशकः ।

अन्वय—प्रतिज्ञार्णवं तीर्त्वा आहवे अद्य विधूतपापां देवीं च सम्प्राप्य समस्तैः देवैः कृताभिषेकः च एष महाराजः शुभ्रे नभसि चन्द्र इव विभाति ।

तीर्त्वेति—प्रतिज्ञार्णवम्=प्रणसमुद्रम्, तीर्त्वा=अतिक्रम्य, आहवे=युद्धे,

---

अग्नि—हे भद्रमुख ! अभिषेक के लिए आप इधर आइए ।

राम—जो आप की आज्ञा ।

(दोनों निकल जाते हैं)

(नेपथ्य में)

देव विजयी होंवे । स्वामी विजयी होंवे । भद्रमुख विजयी होंवे । महाराज विजयी होंवे । रावण का अन्त करने वाले विजयी होंवे । चिरञ्जीवी विजयी होंवे ।

विभीषण—ये, ये महाराज,

प्रतिज्ञा-रूपी सागर को पार करके युद्ध में आज (रावण का वध करके) निष्कलङ्क महारानी (सीता) को प्राप्त कर सभी देवताओं के द्वारा अभिषिक्त

रामः—भगवन् ! प्रहृष्टोऽस्मि ।

अग्निः—इमे महेन्द्रादयोऽमृतभुजो भवन्तमभिवर्धयन्ति ।

रामः—अनुगृहीतोऽस्मि ।

अग्निः—भद्रमुख ! किं भूयः प्रियमुपहरामि ।

रामः—यदि मे भवान् प्रसन्नः, किमतः परमहमिच्छामि ।

( भरतवाक्यम् )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ ३५ ॥

---

भरतशत्रुघ्नौ पुरःसरौ अग्रगौ यासां तथा भूताः, प्रकृतयः=प्रजाजनाः, समुपस्थिताः=उपगताः । प्रहृष्टः=प्रसन्नः, अमृतभुजः=देवाः, उपहरामि=करोमि ।

अन्वयः—गावः अजरसः भवन्तु, परचक्रं प्रशाम्यतु, नः राजसिंहः अपि इमां कृत्स्नां महीं प्रशास्तु ।

भवन्त्विति—गावः=इन्द्रियाणि, अरजसः=निवृत्तरजोगुणाः, परचक्रं=शत्रुमण्डलम्, प्रशाम्यतु=शान्तिं गच्छतु । नः=अस्माकम्, राजसिंहः अपि=राजश्रेष्ठः अपि, इमाम्=एताम्, कृत्स्नां=समग्राम्, महीं=पृथिवीम्, प्रशास्तु=परिपालयतु । आशीरलंकारः । अनुष्टुप्छन्दः ।

---

राम—हे भगवन् ! मैं प्रसन्न हूँ ।

अग्नि—ये इन्द्रादि देवता आप की अभ्यर्थना कर रहे हैं ।

राम—मैं अनुगृहीत हूँ ।

अग्नि—हे भद्रमुख ! मैं आप का और क्या प्रिय करूँ ।

राम—यदि आप मुझ पर प्रसन्न हैं तो इससे अधिक मैं क्या चाहता हूँ—

(भरतवाक्य)

हमारी इन्द्रियाँ रजोविकार से रहित हों, शत्रु-मण्डल शान्त हो जाय । और हमारा 'राजसिंह' भी सम्पूर्ण पृथिवी पर शासन करे ।

( निष्क्रान्ताः सर्वे )

॥ इति षष्ठोऽङ्कः ॥

॥ अभिषेकनाटकं समाप्तम् ॥



॥ इति षष्ठोऽङ्कः ॥

॥ अभिषेकनाटकं समाप्तम् ॥



(सभी निकल जाते हैं)

॥ षष्ठ अङ्क समाप्त ॥

॥ अभिषेकनाटक समाप्त ॥

॥ अभिषेक नाटक पर 'शशिप्रभानाम्नी' हिन्दी-संस्कृत व्याख्या समाप्त ॥



परिशिष्ट—१

## अभिषेक नाटक के सुभाषित तथा लोकोक्तियाँ

### श्लोक अथवा श्लोकखण्ड

अवश्यं युधि वीराणां वधो वा विजयोऽथवा। (३।९)
अहो दैवस्य विघ्नक्रिया! (२।१०)
कथं लम्बसटः सिंहो मृगेण विनिपात्यते।
गजो वा सुमहान् मत्तः शृगालेन निहन्यते॥ (३।२०)
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मे। (६।२३)
मज्जमानमकार्येषु पुरुषं विषयेषु वै।
निवारयति यो राजन्! स मित्रं रिपुरन्यथा॥ (६।२२)
वागुरान्छन्नमाश्रित्य मृगाणामिष्यते वधः। (१।१९)

### गद्य

| | पृष्ठ | पंक्ति |
|---|---|---|
| अदण्ड्यो नैव दण्ड्यते। | ११ | ८ |
| अधर्मः खलु प्रच्छन्नो वधः। | १७ | २ |
| अमात्य-वर्गेण सह संमन्त्र्य गन्तव्यम्। | १० | ४ |
| अवश्यं स्त्री-वधो न कर्तव्यः। | १२१ | ५ |
| अहो अकरुणाः खल्वीश्वराः। | ४७ | ८ |
| अहो नु खल्वतुलबलता कुसुमधन्वनः। | १०९ | ५ |
| दूतवधः खलु वचनीयः। | ७२ | ८ |
| न त्वेव हि कदाचिज्ज्येष्ठस्य यवीयसो दाराभिमर्शनम्। | ११ | ४ |
| निर्वेद एव खल्वनुक्तग्राहिणं स्वामिनमुपाश्रितस्य भृत्यजनस्य। | ६५ | ८ |
| बहुमायाश्छलयोधिनश्च राक्षसाः। | ८७ | ६ |
| सर्वापराद्धेष्ववध्याः खलु दूताः। | ६८ | ६ |

—o—

## परिशिष्ट—२

## श्लोकानुक्रमणिका

—*—